# एतानि मुद्रितसंस्कृतपुस्तकानि ।

१ आशुबोध व्याकरणम् २
२ अष्टकम् पाणिनीयम् ॥०
३ उणादिसूत्रम् सटीक २
४ कविकल्पद्रुम (धातुपा:) ।०
५ कलापव्याकरणं वा कातन्त्र २
६ धातुरूपादर्श: १॥०
७ परिभाषेन्दुशेखर सटीक १
८ मुग्धबोधव्याकरणम् सटीक १॥०
९ वाक्यमञ्जरी (वङ्गाक्षरै:) ।०
१० वैयाकरणभूषणसार ॥।०
११ लघुकौमुदीव्याकरणम् ॥०
१२ लिङ्गानुशासनं सटीक ।०
१३ शब्दरूपादर्श: ॥०
१४ शब्दार्थरत्नम् ॥।०
१५ सारस्वतव्याकरण सटीक पूर्वार्द्धम् १
१६ सारस्वतव्याकरणं सटीक उत्तरार्द्धं २
१७ सिद्धान्तकौमुदी सरलासहिता १०
१८ ऋतुसंहार काव्य सटीक ।/
१९ काव्यसंग्रह मूलमात्र ५
२० काव्यसंग्रह सटीक प्रथमभाग: ३
२१ काव्यसंग्रह सटीक द्वितीयभाग: २
२२ काव्यसंग्रह सटीक तृतीयभाग: २
२३ किरातार्जुनीयकाव्य सटीक १॥०
२४ कुमारसम्भवकाव्यपूर्वखण्ड सटीक॥०
२५ कुमारसम्भवकाव्य उत्तरखण्डसटीक॥
२६ गीतगोविन्द काव्य सटीक ॥०
२७ चन्द्रशेखरचम्पूकाव्य ३
२८ नलोदय काव्य सटीक ।/
२९ नैषधचरितम् काव्य सम्पूर्णं सटीक५
३० नैषधकाव्य नवमसर्गपर्य्यन्त सटीक२॥

३५ भामिनीविलास संक्षिप्तटीकासह ।/
३६ चम्पूरामायणम् सटीक १
३७ (चम्पूरामायणम्) भोजचम्पू ।०
३८ शतकावलि: ॥०
३९ माधवचम्पूकाव्य ।०
४० मेघदूत मल्लिनाथकृत टीकासहित।/
४१ मेघदूत सटीक सुलभमूल्यकम् /०
४२ रघुवंश काव्य सटीक १॥०
४३ रघुवंश मूलमात्र ७,८,१२ सर्गा:/०
४४ राजप्रशस्ति सटीक /
४५ शिशुपालवधकाव्य सटीक (माघ) २
४६ गद्यकथासरित्सागर सम्पूर्णं ६
४७ कादम्बरी विस्तृतव्याख्यासहिता ३
४८ दशकुमारचरितगद्यकाव्य सटीक १
४९ द्वात्रिंशत्पुत्तलिकासिंहासन १
५० पञ्चतन्त्रम् विष्णुशर्मकृत सटीक १
५१ बहुविवाहवाद ।०
५२ वासवदत्ता गद्यकाव्य सटीक १
५३ वेतालपञ्चविंशति: (सरलगद्य) ॥०
५४ शङ्करविजय १॥०
५५ भोजप्रबन्ध सरल गद्य ॥०
५६ हर्षचरित सटीक बाणभट्टकृत २॥०
५७ हर्षचरितबाणभट्टकृतगद्य १
५८ संस्कृतशिक्षामञ्जरी प्रथमभाग: /
६९ संस्कृतशिक्षामञ्जरी द्वितीयभाग: ।०
६० संस्कृतशिक्षामञ्जरी तृतीयभाग: ॥०
६१ संस्कृतशिक्षामञ्जरी चतुर्थभाग: ।०
६२ हितोपदेश सटीक ॥०
६३ अमरकोष ॥०
६४ वाचस्पत्यम् (वृहदभिधान) १००

# सारस्वतं व्याकरणम् ।

## उत्तरार्द्धम् ।

परमहंसपरिव्राजकाचार्य्य

श्रीमदनुभूतिस्वरूपाचार्य्यविरचितम् ।

श्रीचन्द्रकीर्त्तिसूरिविरचितव्याख्यया समलङ्कृतम् ।

पण्डितकुलपतिना बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतम् प्रकाशितञ्च ।



द्वितीयसंस्करणम् ।

कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रितम् ।

इं १८९२ ।

# उत्तरार्द्धस्य सूचीपत्रम् ।



# सारस्वतव्याकरणम् उत्तरार्द्धम् ।

## भ्वादिप्रक्रिया ।

---

**अथ आख्यातप्रत्यया निरूप्यन्ते ।**

**वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ।**

सरस्वतीं सदाभक्तवाञ्छितार्थविधायिनीम् ।
सद्वाग्विलाससन्दोहदोग्ध्रीं कामदुघामिव ॥ १ ॥
नत्वा नागपुरीयाह्वतपोगणविभूषणम् ।
श्रीराजरत्नसूरिं चाख्यातव्याख्या विधीयते ॥ २ ॥ ( युग्मम् )

अथ ग्रन्थकार आख्यातप्रत्ययान् विवक्षुः प्रतिज्ञां करोति ।

अथाख्यातेत्यादि । अथेति संज्ञासन्धिविभक्तियुष्मदस्मद् स्त्रीप्रत्ययकारकसमास-तद्धितलक्षणाधिकाराष्टककथनानन्तरम् आख्यातं नाम व्याकरणस्य नवमोऽधिकारः तस्य प्रत्यया निरूप्यन्ते कथ्यन्ते । आख्यायन्ते कथ्यन्ते अर्थात् निष्पाद्यन्ते भ्वादीनां रूपाणि येन तदाख्यातम् अथवा आख्यान्ति आचक्षते कर्तृव्यापार-मित्याख्याताः । प्रतीयते ज्ञायतेऽर्थो येभ्यस्ते प्रत्ययाः आख्यातसंज्ञकाः प्रत्ययाः आख्यातप्रत्ययाः । तत्र प्रथममधिकारसूत्रम् । धातोः । धातोरिति पञ्चम्येक-वचनान्तं पदम् । वक्ष्यमाणा इति वक्ष्यन्ते कथयिष्यन्ते ये ते वक्ष्यमाणा अतःपरं ये वक्ष्यन्ते प्रत्ययास्ते धातोरेवाग्रे ज्ञेया न नाम्नः । अत्र प्रत्ययशब्देन प्रायो विभक्त्यो ज्ञेयाः । त[illegible]ारादवादयोऽपि प्रत्यया धातोरेव ज्ञेयाः । तांश्च यथाधिकारं ग्रन्थकृदेव वक्ष्यति । अथ कोऽसौ धातुरित्यत आह ।

### भ्वादिः ।

**भूसत्तायामित्यादिशब्दो धातुसंज्ञो भवति । स च त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ।**

भ्वादिः । भूः आदिर्यस्यासौ भ्वादिः सो० भूधातुः सत्तायां विद्यमानार्थे वर्त्तते इत्येवमादिर्यः शब्दो-वर्णसमुदायात्मको धातुपाठेऽभिहितः स धातुसंज्ञो

भवति। विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति। तत्क्रमश्च धातुपाठादवगन्तव्यः। इह ग्रन्थगौरवभयान्न लिख्यते दधात्यर्थमिति धातुः स चेति। स धातुस्त्रिविधः तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्त्रिप्रकारः। आत्मनेपदम् अष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अन्त्यनववचनात्मकं विद्यते यस्य स आत्मनेपदी एध् वृद्धावित्यादिः॥ १ ॥ तथा परस्मैपदं वक्ष्यमाणवचनेषु आद्यं नववचनात्मकं विद्यते यस्य स परस्मैपदी भू सत्तायामित्यादिः॥ २ ॥ तथा उभये परस्मैपदात्मनेपदे विद्येते यस्य स उभयपदी पचति करोति इत्यादिः॥ ३ ॥ यद्यपि निविशादेरिति मतेन केषाञ्चिद्धातूनां पदविपर्ययो भवति। तथापि अत्र स्वभावेन पदत्रयेण त्रिविधत्वमुक्तम्। येभ्य आत्मनेपदं येभ्यो भवति तान् दर्शयति।

## आदनुदात्तङितः।

### अनुदात्तेतो ङितश्च धातोरादित्यात्मनेपदं भवति।

आदनुदात्तेति। आत् (प्र० ए०) इत्संज्ञः अनुदात्तश्च ङ् च अनुदात्तङौ तौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः। द्विपदं सूत्रम्। अनुदात्तेत् इति धातुपाठे योऽभिहितः धातुः सः अनुदात्तेत्संज्ञकः कल्पितः। एध् वृद्धौ इत्यादिकः। तथा ङित् ङकारानुबन्धः शीङ् स्वप्ने इत्यादिकः ततोऽनुदात्तेतो ङितश्च धातोः आत् इति शब्देन आत्मनेपदं भवतीत्यर्थः। अथोभयपदीनां लक्षणमाह।

## ञित् स्वरितेत् उभे।

### ञितः स्वरितेश्च धातोरुभे आत्मनेपदपरस्मैपदे भवतः। आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्परस्मैपदं प्रयोक्तव्यम्। अन्वर्थत्वात्।

ञित्स्वरितेत्यादि। ञकार इत् यस्य स ञित् यश्च स्वरितेत्संज्ञको धातुपाठे उक्तः। ञिच्च स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः (पञ्चम्येकवचनम्) उभे (प्र० द्वि०) इमौ अत्र द्विपदं सूत्रम् ञितो धातोर्डुदाञ् दाने डुकृञ् करणे इत्यादिः प्रसिद्धास्तथा स्वरितेत इति यस्य धातोर्धातुपाठे स्वरितेत इति संज्ञा कल्पितास्ति तस्मात् डुपचष् पाके इत्यादेर्धातुपाठोक्तात् धातु-

अथात् उभे इति आत्मनेपदपरस्मैपदे द्वे अपि भवतः। अथ ग्रन्थकार एवोभयपदिनां धातूनां पदप्रयोगशिक्षामाह। आत्मगामि चेदिति चेद्यदि। उभयपदिनां धातूनां क्रियायाः फलम् आत्मगामि भवति। तदात्मनेपदं प्रयोज्यं यथा आत्मार्थं पचते। परार्थं पचति। तथा च। यथा जगतः पितरौ वन्दे इत्यत्र वन्दनलक्षणक्रियायाः फलस्यात्मगामित्वात्कालिदासकविर्वन्दे इत्यत्रात्मनेपदं प्रयुक्तवान्। तथा यद्यपि सारस्वतीमृजुं कुर्वे इत्यत्र पठनस्य परगामित्वात् परस्मैपदं युज्यते। तथापि तत्पाठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्य्यात्मनेपदं प्रयुक्तम्। परगामीति चेद्यदि क्रियायाः फलं परगामि भवति। तदोभयिनां धातूनां परस्मैपदं भवति। यथा प्रक्रियाकौमुदीं कुर्म्म इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात् प्रयुक्तम्। एवमन्यदपि यथासम्भवमूह्यम्। एतत्पदद्वयस्य प्रयोजनं कुत इत्यत आह। अन्वर्थादिति। आत्मने परस्मै इति द्वयोर्नाम्नोरनुगतार्थत्वात्। यादृशं नाम तादृश एवार्थः। यथा आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः। तस्मात् इदं त्वात्मगामीत्यादिपदप्रयोगकथनमुभयपदिनामेवावगन्तव्यं नान्येषाम्। असार्वत्रिकयायं विधिः। अथ परस्मैपदप्रयोगमाह।

## परतोऽन्यत्।

### पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति।

परतः (पं० ए०) तस्प्रत्ययान्तम् अन्यत्। (प्र० ए०) अन्यशब्दस्य नपुंसकलिङ्गे पदप्रयोगस्त्वन्यादेः द्विपदम्। पूर्वोक्तेत्यादि। पूर्वोक्तानि यानि सूत्रद्वयोक्तनिमित्तानि तत्रानुबन्धरहिताच्च धातोः परस्मैपदं भवति। स च धातुपाठात् ज्ञेयः। अथ विभक्तिषु परस्मैपदात्मनेपदयोर्वचनसंख्यामाह।

## नव परस्मैपदानि।

### तिबादीनामष्टादश-संख्याकानामाद्यानि नववचनानि परस्मैपदसंज्ञानि भवन्ति। पराण्यात् पराण्येतनान्यात्मनेपदानि भवन्ति।

नव। (प्र० ब०) जश्शसोर्लुक्। परस्मैपदानि (प्र० ब०) नपुंसकद्विपदं सूत्रम्। तिबादीनामिति वर्त्तमानविधिसम्भावनाशीःप्रेरणानद्यतनपरोक्षा-

र्थाशीरर्थप्रस्तनार्थभविष्यत् क्रियातिपत्तिभूतार्थलक्षणानां दश विभक्तीनां सान्यष्टादशाऽष्टादश वचनानि तेषां मध्ये आद्यानि नववचनानि परस्मैपदसंज्ञानि भवन्ति। तानि परस्मैपदिभ्यो धातुभ्यः प्रयुज्यन्ते। पराणि तिबादीनामेव पराणि नववचनेभ्य उत्तराणि ते आते अन्ते इत्यादीनि नववचनानि आत्मनेपदसंज्ञानि भवन्ति तथात्र केषुचित् पुस्तकेषु पराण्यात् इति सूत्रं दृश्यते। तत्र पराणि (प्र० ब०) आत्‌द्विपदं पराणि नववचनानि आत्मनेपदसंज्ञानि भवन्तीति वृत्तिः सुगमा। अथाख्यातविभक्तीनां मध्ये सर्ववैयाकरणसमयप्रतिपालनार्थं वर्त्तमानविभक्तिप्रयोगसूत्रमाह।

## वर्त्तमाने,—परस्मैपदानि।

| | | | |
|---|---|---|---|
| १ | तिप् | तस् | अन्ति |
| २ | सिप् | थस् | थ |
| ३ | मिप् | वस् | मस् |

## आत्मनेपदानि।

| | | | |
|---|---|---|---|
| १ | ते | आते | अन्ते |
| २ | से | आथे | ध्वे |
| ३ | ए | वहे | महे |

**प्रारब्धो परिसमाप्तश्च वर्तमानः तस्मिन्नभिधेये तिबादयः प्रत्यया भवन्ति। अस्य तिबादेः पाणिनीयानां लडिति संज्ञा।**

वर्त्तमाने (स० ए०) तिप्। तस्। अन्ति। सिप्। थस्। थ। मिप्। वस्। मस्। ते। आते। अन्ते। से। आथे। ध्वे। ए। वहे। महे। सर्वाण्येतानि प्रथमैकवचनान्तानि साङ्केतिकानि एवमेकोनविंशतिपदं सूत्रम्। अत्र वृत्तिकारो वर्त्तमान इति पदं व्याचष्टे। प्रारब्धेति। कश्चित्कालः क्रियाया अव्यवच्छेद एव लक्ष्यः स प्रारब्धः स यावत् अपरिसमाप्तः अपरिपूर्णस्तावद्वर्त्त

इत्युच्यते । प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्त्तमानस्तस्मिन् उक्तलक्षणे वर्त्तमाने कालेऽभिधेये वाच्यमाने सति धातोस्तिबादयो महिपर्य्यन्ता अष्टादश प्रत्यया विभक्तिलक्षणा भवन्ति, प्रयुज्यन्ते इत्यर्थः । तत्र तिबादयो मस्पर्य्यन्ताः परस्मैपदसंज्ञाः ते आदयो महिपर्य्यन्ता आत्मनेपदसंज्ञाः । अथ ग्रन्थान्तरे एतेषामेवाष्टादशवचनानां संज्ञान्तरमाह । अस्येति । पाणिनीयानाम् आचार्य्याणां पाणिन्युक्तग्रन्थपाठिनां वा मते अस्य तिबादेरष्टादशसंख्यस्य प्रत्ययगणस्य लट् इति संज्ञा ज्ञेया । वर्त्तमाने लट् १, विधिसम्भावनयोर्लिङ् २, आशीःप्रेरणयोर्लोट् ३, अनद्यतने० लङ् ४, परोक्षे लिट् ५, आशिषि लिङ् ६, श्वस्तने लुट् ७, भविष्यति लृट् ८, क्रियातिपत्तौ लृङ् ९, भूते लुङ् १० इति दशलकारास्तत्र वर्त्तमाने लट् । एतेषामेव प्रत्ययानां त्रित्रिवचनविभागभेदेन पुरुषसंज्ञामाह ।

## नाम्नि च युष्मदि चास्मदि च भागैः ।

**नामादिषु उपपदेषु प्राप्तेषु सत्सु त्रिभिर्भागैरेते प्रत्यया भवन्ति । ते च त्रयो भागा यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । नाम्नि प्रयुज्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषः । युष्मदि मध्यमः । तथैवास्मद्युत्तमः । भू सत्तायाम् ।**

नाम्नि च युष्मदि च अस्मदि च भागैः । (सप्तपदं सूत्रम्) नामादिष्विति । देवः देवौ देवाः । अथवा सः तौ ते इति नाम । त्वम् युवां यूयम् इति युष्मद् । अहम् आवां वयम् इति अस्मद् । नामयुष्मदस्मल्लक्षणेषु पदेषु उपपदेषु समीपे प्रयुज्यमानेषु परस्मैपदिनामात्मनेपदिनां च प्रत्येकं त्रिभिर्भागैश्छेदैः कृत्वा एते उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति । तत्र तिप् तस् अन्ति इति परस्मैपदे । ते आते अन्ते इत्यात्मनेपदे । सिप् १, थस् २, थ ३, से, आथे २, ध्वे ३ इति परस्मैपदात्मनेपदयोर्मध्यमपुरुषसंज्ञा । मिप् १ वस् २ मस् ३ परस्मैपदे । ए १ वहे २ महे ३ आत्मनेपदे इत्युत्तमपुरुषसंज्ञा ॥ ३ ॥ अथ नामादिषु प्रथमादिपुरुषप्रयोगशिक्षामाह । नाम्नीति । नाम्नि सामान्यलक्षणे प्रयुज्यमाने उच्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषो भवति । युष्मदस्मदोः प्रयोगेऽप्रयोगे

मध्यमपुरुषोत्तमपुरुषौ भवतः। ते च त्रयो भागाः यथाक्रमं प्रथममध्यमो-त्तमसंज्ञा भवन्ति। तेषां ग्रन्थेषूदाहरणानि प्रदर्श्यन्ते। प्रयुज्यमाने यथा, चम्पूकथायां—'जयति गिरिसुतायाः कामसन्तापवाहिन्युरसि रसनिषेकश्चान्दन-श्चन्द्रमौलिः' इति। यदि वा—'तं सन्तः श्रोतुमर्हन्ति।' तथाऽप्रयुज्यमाने यथा रत्नमालायाम्—'शिशिरपूर्वमृतुत्रयमुत्तरं त्वयनमाहुरहश्च तदामरम्।' इत्यत्र बुधा इत्यप्रयुज्यमानेऽपि नाम्नि आहुरिति प्रथमपुरुषप्रयोगः। तथा युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यमपुरुषः। यथा, कुमारसम्भवे—'त्वं पितृणामपि पिता देवानामपि देवता। परतोऽपि परश्चासि विधाता वेधसामपि' ॥१॥ इति प्रयुज्यमाने मध्यमपुरुषप्रयोगः। अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमपुरुषः। प्रयु-ज्यमाने यथा। 'तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे भयदैः कालमीशम्'। अप्रयुज्यमाने यथा। 'मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्य-ताम्' इति। अथ परस्मैपदप्रयोगशिक्षामाह।

## कर्त्तरि पं च।

पं च परस्मैपदं कर्त्तरि भवति। चकारादात्मनेपद-मपि। तत्र भू इत्येतस्मात्परस्मैपदिनोऽब्विकरणात् कर्त्तरि तिबादयो योज्यन्ते। तत्रैकत्वविवक्षायां प्रथमपुरुषैकवचने भू तिप् इति स्थिते। पकारः पित्कार्य्यार्थः।

कर्त्तरि पं च। त्रिपदम्। पम् इति परस्मैपदं तिप् तस् अन्ति इत्यादि नवलक्षणं कर्त्तरि कर्तृत्वेऽर्थे भवति। न केवलं परस्मैपदं किन्तु आत्मनेपद-मपि कर्तृत्वे भवति। अयं भावः। परस्मैपदिनां धातूनां कर्त्तरि परस्मैपदं भवति। आत्मनेपदिनामात्मनेपदं भवति। उभयपदिनां तु उभे अपि आत्मने-पदपरस्मैपदे भवतः। यथा 'जयन्ति सन्तः' इति परस्मैपदम्। तदनु च विज-यन्ते इत्यात्मनेपदम्। 'सारस्वतीमृजुं कुर्वे' इत्यत्र करोतेर्धातोरात्मनेपदम्। 'प्रक्रियाकौमुदीं कुर्म' इति परस्मैपदम्। एवमन्यत्राप्यूह्यम्। कर्मणि तु आत्मने-पदमेव भवति। अत्र प्रथमं यदुक्तं भ्वादिरिति सूत्रेण भूइत्यादीनां धातुसंज्ञा प्रतिपादिता तेन भूधातोर्दशानामपि लकाराणां प्रयोगं चिकीर्षुः प्रथमं वर्त्तमा-नार्थलिङ्क्रियायोगं दर्शयति। लटेति। तेषु परस्मैपदात्मनेपदोभयपदलक्षणेषु

धातुषु भूसत्तायामित्यादिधातुवदात्तत्वात्परस्मैपदी वर्त्तते। स चाब्विकरणो भवति। विक्रियतेऽवस्थान्तरं भजते धातुरनेनेति विकरणम्। यथा प्रकृति-प्रत्ययार्थाभिधानेन सहापीविकरणम्। यद्वा प्रकृतिप्रत्ययान्तःपाती गणविभाग-कारकः प्रत्ययो विकरण सचाप्कर्त्तरीत्याद्याख्यातोक्तः प्रत्ययस्तद्विकरणमुच्यते। अब्विकरणं यस्यासौ अब्विकरणस्तस्मात्परस्मैपदिनोऽब्विकरणाच्च तिबादयः परस्मैपदार्था नव प्रत्यया योज्यन्ते। इह हि धातवो दशधा। तत्राब्विकरणा भ्वादयः १, लुग्विकरणा अदादयः २, लुग्विकरणा अपि द्विरुक्ता ह्वादयः ३, यवि-करणा दिवादयः ४, उविकरणाः स्वादयः ५, नम्विकरणा रुधादयः ६, उप्-विकरणास्तनादयः ७, अविकरणास्तुदादयः ८, नाविकरणाः क्र्यादयः ९, स्वार्थे-ऽयन्ताश्चुरादयः १०। तेषु भूधातुरब्विकरणस्तस्मात्तिबादयः प्रयोज्यन्ते। भूस-त्तायाम् अयं धातुः सत्तायां विद्यमानार्थे भवनार्थे। परस्मैपदी। परतोऽन्यत् स्मात्। अकर्मकोऽयम्। भुङ् प्राप्तौ आत्मनेपदी। सकर्मकोऽयम्। द्वयो-र्धात्वोरूपाणि निगद्यन्ते। तत्रादौ परस्मैपदिनो रूपाणि कथ्यन्ते। पश्चादात्मने-पदिनः। भूधातोस्तिबाद्यो नव विभक्त्यो भवन्ति। भूप्रथमपुरुषैकवचनं तिप्। अत्र पकारः पित्कार्य्यार्थः, पित्कार्य्यं च। अपित्सार्वधातुकं ङित्। अत्रादावौप्पित्तिप्सिप्। उत्तौ इत्यादि तदर्थोऽयं पकारः। 'भू ति' इति स्थिते।

## अप् कर्त्तरि।

**धातोरप्प्रत्ययो भवति कर्तरि विहितेषु त्यादिषु चतुर्षु दिप्पर्य्यन्तेषु परतः। पकारो विकरणभेदज्ञापनार्थो गुणार्थश्च। प्रकृतिप्रत्ययान्तः पतति यः प्रत्ययः स विकरणः।**

अप् ( प्र० ए० ) कर्त्तरि ( स० ए० ) द्विपदं सूत्रम्। धातोरिति भ्वादिधातोः प्रत्ययान्ताच्च धातोः कर्त्तरि अप्प्रत्ययो भवति तिबादिषु दिबाद्यन्तेषु चतुर्षु वर्त्त-मानार्थविधिसम्भावनार्थाशीःप्रेरणार्थानद्यतनार्थलक्षितेषु चतुर्षु प्रत्ययगणेषु परेषु सत्सु अप्रत्ययो भवतीत्यर्थः। अप् इत्यत्र पकारो विकरणभेदज्ञापनार्थः। यतो-ऽप्राप्प्रत्ययोऽवशिष्यते तुदादेः इत्यत्राप्यकारोऽवशिष्यते। इत्थम् अप्प्रत्ययस्यान्तरं न लक्ष्येत। अतः प्रत्ययभेदज्ञापनार्थमयं पकारः। पित्कार्य्यार्थश्च। भू अ इति स्थिते।

गुणः ।

धातोरन्त्यभूतस्य नामिनो गुणो भवति । अवादेशः । भवति । इयर्थविवक्षायां तस् ।

गुणः । ( प्र० ए० ) सौ० धातोः धातुसम्बन्धिनोऽन्त्यभूतस्य नामिनः इवर्णोवर्णऋवर्णानां गुणः संज्ञासम्युक्तो भवति । क्वचित्पिति परे इति दृश्यते सदानियतम् । पितं विनापि बिभराञ्चक्रतुरित्यादौ गुणस्य दृश्यमानत्वात् । भो अति इति स्थिते । अवादेशश्चेति । भोअव् स्वरहीनम् । भवति इति सिद्धम् । इयर्थविवक्षायाम् । द्वयोर्वाच्यमानयोः सतोः प्रथमपुरुषद्विवचनं तस् । ( अप्कर्त० ) भू अ तस् इति स्थिते गुणः । ननु अप्प्रत्ययं विनापि गुणः क्रियतां तदर्थं सूत्रमाह ।

अपित्तादिर्ङित् ।

पकारेतस्तादिकञ्च विहायान्यः प्रत्ययो ङित् संज्ञो भवति । अन्य इति किम् । इडामायवर्जितो दशलकारान्तःपातो ङित् । आदिशब्दात्सीसिग्रहणम् ।

( अपित्तादि० ) प इत् यस्यासौ पित् । त आदिर्यस्यासौ त्वादिः पिच्च तादिश्च पित्तादी । ताभ्यामन्योऽपित्तादिः ( प्र० ए० ) ङ् इत् यस्यासौ ङित् ( प्र० ए० ) द्विपदं पकारानुबन्धं तिप् अप् प्रत्ययादिकं तादिकम् । ता । तारौ । तारस् । इत्यादिश्वस्तनार्थप्रत्ययं च विहाय त्यक्त्वा योऽन्यः प्रत्ययः स ङकारानुबन्धं विनापि आख्याते ङित्संज्ञो भवति । पकारेतं तादिकं चेति आदिशब्दात्सिसीग्रहणम् । तेन भूतार्थे सिप्रत्यये परे अवर्त्तिष्ट अदर्शयत् इत्यादौ गुणः । तथा आशिषि सीष्टप्रत्यये परे चेषीष्ट स्तोषीष्टेत्यादौ गुणः । अथ ङित्प्रयोजनमाह ।

क्ङित्यहुसि ।

क्किति ङिति च परे धातोर्गुणो भवति हुसंवर्जयित्वा । कृतद्विर्वचनस्य उसि परे तु गुणो भवति । ततो ङित्त्वात्तसि गुणप्रतिषेधेऽप्प्रत्ययनिमित्तो गुणो भवत्येव । स्तोर्विं-

**सर्गः। भवतः। बह्वर्थविवक्षायां भव अन्ति इति स्थिते।**

**अदे।**

**अकारस्य लोपो भवति अकारे एकारे च परे। अदे इत्यत्र अकारैकारौ तिबादिप्रत्ययस्येत्यर्थः। भवन्ति भवसि भवथः भवथ।**

क्ङित्यद्वास। क्च ङ्च क्ङौ तौ इतौ यस्य स क्ङित् तस्मिन् क्ङिति (स० ए०) द्विरुक्ति द्विरुक्तौ धातुः। द्वेः द्विरुक्तस्य धातोः उस् द्वास् तस्मादन्यो-ऽद्वास्। तस्मिन् अद्वासि (स० ए०) द्विपदं सूत्रम्। किति पिति व्यतिरिक्ते वा वादौयक् प्रत्ययादौ च ङिति तादिवर्जिते प्रत्यये यङ्प्रत्ययादौ च परे धातो-र्नामिनो गुणो न भवति। तत्रापि विशेषमाह। द्वासमित्यादि द्वेर्द्विरुक्तस्य धातोः उस् द्वास् तं द्वासं वर्जयित्वाऽन्यत्र गुणो न भवतीत्यर्थः। कृतद्विर्वचनादिति अप्प्रत्ययस्य लुकि कृते भ्वादेर्धातोर्द्विरुक्तात् कृतद्वित्वात्परस्य थोऽन्स्थाने उसादेशो विहितः तस्मिन् परे सति ङित्त्वेऽपि गुणो भवतीत्यर्थः। ततोऽत्र प्रस्तुते भूधातो तस्य ङित्त्वात्तसि परे गुणप्रतिषेधेऽपि अप्प्रत्ययनिमित्तो गुणो भवत्येव गुणे कृते ओ अव्। स्वर०। सो० भवतः इति सिद्धं बह्वर्थानां बहूनां वक्तुमिच्छा यत्र क्रियते तत्र बहुवचने भू अन्ति इति स्थिते (अप्कर्त्त०) (गुणः) ओ अव्। स्वर० भव अन्ति इति जातम्। सूत्रम्। अत्र एत्त अदे तस्मिन् (स० ए०) साङ्के०। अकारस्य त्यादिप्रत्ययस्थे अकारे एकारे च परे लोपो भवति। अनेन वमध्य-स्थितस्याऽप्प्रत्ययसम्बन्धिनोऽकारस्य लोपः। स्वर०। भवन्ति इति प्रथमपुरुषस्य वचनत्रयसाधनम्। एवं भवसि। भवथः। भवथ। इति मध्यमपुरुषे वचनत्रय-साधना। उत्तमपुरुषवचनत्रयेऽपि अप्प्रत्यये नामिनो गुणे च कृते। ओ अव्। स्वर० भवामि भववः। भवमः। इति स्थिते सूत्रम्।

**वमोरा।**

**अकारस्य आत्वं भवति वकारे मकारे च परे। भवामि भवावः भवामः। स राजा धार्मिको भवति। त्वं साधु-र्भवसि। अहमाम्मविद्भवामि। इत्यादि प्रयोक्तव्यम्।**

व्च म्च व्मौ तयोर्व्मौः। (स० दि०) आ (प्र० ए०)। साङ्क्षि०। प्रत्ययसम्बन्धिनोऽकारस्य तिबादिवकारे मकारे च परे आत्वं भवति। अनेनाऽपोऽकारस्य आकारः। भवामि। भवाव। भवामः। इति सिद्धम्। अथ ग्रन्थकारः उक्तिप्रयोगमाह। स राजा धार्मिको भवति। अत्र राजा इति कर्तृपदम्। भवतीति क्रियापदम्। धातोः कर्मनिरपेक्षत्वात् अकर्मकत्वं धार्मिक इति विशेषणपदम्। एवं तौ राजानौ धार्मिकौ भवतः। ते राजानो धार्मिका भवन्ति। त्वं साधुर्भवसि। युवां साधू भवथः। यूयं साधवो भवथ। अहम् आत्मविद् भवामि। आवाम् आत्मविदौ भवावः। वयम् आत्मविदो भवामः। इत्यादि उक्तिवाक्यं प्रयोज्यम्। अथ पुरुषभेदमाह। नामयुष्मदस्मदां द्वयोस्त्रयाणां वा युगपद्योगे कस्य पुरुषस्य क्रियापदं भवतीत्यत आह सूत्रम्।

## अव्यवधानाच्च पुरुषविशेषः।

**यस्य क्रियापदेन व्यवधानं नास्ति ततः पुरुषविशेषः। अत्र व्यवधानं सूत्रस्थं ग्राह्यं न तु वाक्यस्थम्। सूत्रक्रमेण पुरुषप्रयोगो भवति। साधू स च त्वं च भवथः। अहं, त्वं, स च पण्डिता भवामः। भूङ् प्राप्तौ आत्मनेपदी। तस्मात्ते प्रभृतीनि नव वचनानि प्रयोज्यानि। अपृगुणाबः। भवते।**

अव्यवधानाच्चेति। अव्यवधानात् पुरुषविशेषः। अव्यवधानाच्च पुरुषक्रियाभिः सहाऽव्यवधानादन्तरराहित्यात् प्रथममध्यमोत्तमानां क्रमेण पुरुषविशेषः, चकारात् क्रियाभिर्व्यवधानादन्तरसाहित्यात् उत्तममध्यमप्रथमानां व्युत्क्रमेण पुरुषविशेषः, मध्यमप्रथमयोर्मध्यमः, उत्तममध्यमयोरुत्तमः। उत्तममध्यमप्रथमेषूत्तमः। एवं सर्वलकारेषु ज्ञेयम्। स च त्वं च भवथः इति क्रमव्युत्क्रमे पुरुषविशेषः। अहं स च भवावः। अहं च त्वं च भवावः। अहं च त्वं च स च भवामः। इति व्युत्क्रमो प्यत्रैव ज्ञातव्यः॥ १॥ (अव्यवधानात् अन्तररहितत्वात् क्रियायाः सामीप्यात् पुरुषविशेषः प्रयोक्तव्यः। प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाणां विशेषः स्यात्। अयमर्थः। नामयुष्मदस्मदां पुरुषत्रयाणां मध्ये द्वयोस्त्रयाणां वा युगपत्-

प्रयोगे सति यत्क्रियायाः समीपस्थं पदं तस्यैव पदस्य पुरुषो भवति । तस्यैव पुरुषस्य क्रियापदं प्रयोज्यम् । यथा साधू स च त्वं भवथः इति । अत्र स च त्वं च इत्यत्र युष्मदः क्रियासमीपवर्त्तित्वात् क्रियाया मध्यमपुरुषः । नामयुष्मदोः प्रयोगात् द्विवचनम् । स च त्वं च साधू भवतः । अत्र नाम्नः क्रियायाः समीपवर्त्तित्वात् प्रथमपुरुषद्विवचनस्य प्रयोगः । एवं स च त्वं च अहं च साधवो भवामः इत्याद्यपि ज्ञेयम् । व्याकरणान्तरे तु युगपद्वचने पूरः पुरुषाणाम् अन्यत्र द्वयप्रयोगे त्रययोगे च परास्रयमेव वचनं न तु क्रियायाः सामीप्यऽप्यादिमपुरुषवचनम्, इति वर्त्तमाने साधना । भूङ्प्राप्तौ । ङित्वादात्मनेपदी । तस्माद्धातोः तेप्रभृतीनि नव वचनानि प्रयोज्यानि । अप् कर्त्तरि । गुणः । ओ अव् । भवते । भू आते इति स्थिते । अप् कर्त्तरि । गुणः । । ओ अव् । भव् आते इति स्थिते सूत्रम् ।

## आदाथ ई ।

**आकारात्परस्यात् आथ्सम्बन्धिन आकारस्य ईकारो भवति । भवेते, भवन्ते । भवसे, भवेथे, भवध्वे । अदे । भवे भवावहे भवामहे । स श्रियं भवते ।**

आदाथ ई । आ ( पं० ए० ) सांके० । आत् च आथ् च आदाथ् तस्य आदाथः द १ इ ११ लो० आदौ सव० । लध्वे आदवे लोपश् । त्रिपदं सूत्रम् । अकारात्परस्य आते आथे आतां आथाम् इति वर्त्तमाना आशीः प्रेरणाऽनद्यतन प्रथमपुरुषमध्यमपुरुषद्विवचनस्याकारस्य इकारादेशो भवति । अनेन आते इत्याकारस्य इकारः । अ ई ए । भवेते । भू अन्ते इति स्थिते अप् कर्त्तरि । गुणः । उ अव् । अदे । भवन्ते भवसे । भू आथे इति स्थिते । अप् कर्त्तरि । गुणः । उ अव् आदाथ ई । अनेन आकारस्य इकारः । अ ई ए भवेथे । भवध्वे । भू ए इति स्थिते अप् कर्त्तरि । गुणः । ओ अव् । अदे । भवे । ब्सीरा । भवावहे भवामहे । स पुरुषः श्रियं लक्ष्मीं भवते । इति उदाहरणम् । अथ द्वितीयलकारमाह । विधिसम्भावनयोः इद सूत्रम् ।

## विधिसम्भावनयोः ।

**विधिः कर्त्तव्यार्थोपदेशः । सम्भावनं कल्पनमूहस्तत्**

यादादय: प्रत्यया भवन्ति । लिङिति चैषां संज्ञा पाणिनीयानाम् ।

## परस्मैपदानि ।

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | यात् | याताम् | युस् |
| २ | यास् | यातम् | यात |
| ३ | याम् | याव | याम |

## आत्मनेपदानि ।

| | | | |
|---|---|---|---|
| १ | ईत | ईयाताम् | ईरन् |
| २ | ईथास् | ईयाथाम् | ईध्वम् |
| ३ | ईय | ईवहि | ईमहि |

विधिश्च सम्भावनञ्च विधिसम्भावने तयोर्विधिसम्भावनयो: (स० द्वि०) शेषाणि अष्टादशापि पदानि प्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । अथ विधिसंभावनयोरिति पदं व्याचष्टे विधिरित्यादि । कर्त्तव्य: कर्त्तुं योग्यो योऽर्थ: तस्योपदेश: शिक्षा स कर्त्तव्यार्थोपदेश: अथवाऽज्ञातस्य वस्तुनो ज्ञापनं विधि: । कर्त्तव्यार्थोपदेशो यथा विप्रो वेदमधीते । अज्ञातज्ञापनं प्रात:स्नात्यादिशिक्षारूप: सर्वोऽप्ययं विधि: तथा सम्भावनं कल्पनं विचारणमुच्यते । तस्य पर्य्यायान्तरम् ऊह इति वितर्क इत्यर्थ: । ततो विधौ सम्भावने च यादादयोऽष्टादश प्रत्यया: परस्मैपदात्मनेपदभेदेन भवन्ति । एषां यादादीनामष्टानां पाणिनीयपाठकानां मते लिङ् इति संज्ञा । लिट् इत्यशुद्ध: पाठ: । तत्र प्रथमपुरुषैकवचने 'भूयात्' इति स्थिते । अपकर्त्त० गुण: । ओ अव् । स्वरहीनं० । भव यात् इति स्थिते । सूत्रम् ।

## याईः ।

अकारात्परो या ई भवति । अईए । भवेत् भवेताम् भवेयु: ।

याट्। (प्र० ए०) सांके०। अकारात्परो विधिसम्भावनसम्बन्धी प्रत्ययाव-यवो या इति वर्णः स इ भवति। अनेन या इत्यस्य इकारः। आद्गुणः। भवेत् एवं प्रथमपुरुषबहुवचनोत्तमपुरुषैकवचनं वर्जयित्वा सर्वत्र या इत्यस्य इकारः। आद्गुणः। भवेताम्। बहुवचने भव युस् इति स्थिते। सूत्रम्

## युस इट्।

**अकारात्परस्य युस इडागमो भवति। भवेः, भवेतम्, भवेत।**

युस्। (ष० ए०) इट् (प्र० ए०) द्विपदं सूत्रम्। अकारात्परस्य युस् इत्येतस्य वचनस्य इडागमो भवति। टित्त्वादादौ। आद्गुणः। भवेयुः। भवेः भवेतं भवेत। सर्वत्र या इतीकारः। उत्तमपुरुषैकवचने भव याम् इति स्थिते। सूत्रम्।

## यामियम्।

**अकारात्परो यामियं भवति। भवेयम् भवेव भवेम। शिष्यो गुरुशुश्रूषको भवेदिति विधिः। भवेदसौ वेदपारगो ब्राह्मणत्वादिति सम्भावनम्। भवेत, भवेयाताम्, भवे-रन्। भवेथाः, भवेयाथाम्, भवेध्वम्। भवेय, भवेवहि, भवेमहि। अहं हरिभक्तिं भवेय।**

याम्। (ष० ए०) इयम् (प्र० ए०) अकारात्परस्य याम् इति वचनस्य इयम् इत्यादेशो भवति गुरुत्वात् सर्वस्यादेशः। आद्गुणः। भवेयम्। द्वित्वबहुत्वयोः या इतीकारः। भवेव भवेम इति सिद्धम्। अथोदाहरणमाह। शिष्यो गुरु-शुश्रूषको भवेदिति विधिः। अत्र शिष्यस्य गुरुशुश्रूषारूपः कर्त्तव्यार्थः अस्योपदेशो विधिः। शिष्येण गुरुशुश्रूषा कर्त्तव्येत्युपदिश्यते। ततोऽत्रविधौ यादादयः। तथासौ ब्राह्मणो ब्राह्मणत्वात् वेदपारगो भवेत् इति सम्भावने सम्भवेऽर्थे यादादयः प्रत्ययाः स्युः। ब्राह्मणत्वेन वेदपारगत्वं सम्भाव्यते इत्यर्थः। एवमन्यान्यपि उदा-हरणानि ज्ञेयानि। तथात्मनेपदिनो भुङ्धातोरीतादीनि नव वचनानि प्रयो-ज्यानि। भू ईत इति स्थिते अप् कर्त्तरि गुणः। ओ अव्। स्वरहीनम्। आद्गुणः।

भवेत। भवेयाताम्। भवेरन्। अन्यानि रूपाणि सुधी ऊहन्ति। तानि अनेनैव प्रकारेण साध्यानि। अहं हरिभक्तिं भवेयेत्युदाहरणम्। समाप्तोऽयं लिङ्लकारः। अथ लोट्लकार: कथ्यते। सूत्रम्।

### आशी:प्रेरणयो:।

अप्राप्तप्रार्थनमाशी: परस्येष्टार्थशंसनं प्रेरणं प्रवर्त्तनं तत्र तुवादय: प्रत्यया भवन्ति। एषा संज्ञा लोट्।

#### परस्मैपदानि।

| | एकवचनानि। | द्विवचनानि। | बहुवचनानि। |
|---|---|---|---|
| १ | तुप् | ताम् | अन्तु |
| २ | हि | तम् | त |
| ३ | आनिप् | आवप् | आमप् |

#### आत्मनेपदानि।

| | | | |
|---|---|---|---|
| १ | ताम् | आताम् | अन्ताम् |
| २ | स्व | आथाम् | ध्वम् |
| ३ | ऐप् | आवहैप् | आमहैप् |

आशी:प्रेरणयो:। आशीश्च प्रेरणञ्च आशी:प्रेरणे तयो: आशी:प्रेरणयो: (स० द्वि०) शेषाणि तुवादीनि आमहैप् पर्य्यन्तान्यष्टादशपदानि प्रथमैकवचनं साङ्केतिकानि एवमेकोनविंशतिपद सूत्रम्। आशिषं प्रेरणञ्च व्याचष्टे। अप्राप्तस्य वस्तुन: स्वयं प्रार्थनं मे इदं वस्तु भवतु इत्याशी:। परस्यान्यजनस्य वा इष्टार्थशंसनं वाञ्छितार्थकथनं वा आशीरुच्यते। तथा हे सौम्येदं कार्यं कुरु इति तत्प्रवर्त्तनं तदेव प्रेरणं तत्र आशिषि प्रेरणे च तुवादय आमहैप् पर्य्यन्ता अष्टादशप्रत्यया: परस्मैपदात्मनेपदभेदेन भवन्ति। एषां च तुवादीनां पाणिनीयतन्त्रे लोट् इति संज्ञा कथ्यते। तत्र परस्मैपदिनो भूधातोस्तुवादयो नवप्रत्यया भवन्ति। भू तुप्। इति स्थिते। अप् कर्त्तरि। गुण:। ओ अव्। स्वरहीनम्। पकार:। भवतु। भू तुप्। इति स्थिते। सूत्रम्।

## तुह्योस्तातङाशिषि वा वक्तव्यः ।

### भवतु-भवतात्, भवताम्, भवन्तु ।

तुह्योः० । तुश्च हिश्च तुही तयोः तुह्योः । आशीःप्रेरणे तुप् हि इत्येतयोः वचनयोः आशिष्यर्थे वाच्यमाने तातङ् इत्यादेशो वा भवति । ङकारो ङित्कार्यार्थः । गुणनिषेधार्थ । न त्वन्त्यादेशार्थः । अत्र तु अप्प्रत्ययनिमित्तो गुणो भवत्येव । अकार उच्चारणार्थः । गुरुत्वात् सर्वस्य तात् इति । तेन प्रथमपुरुषैकवचने रूपद्वयम् । अनेन सूत्रेण भू तात् इति जाते अप्कर्तरि । गुणः । ओ अव् । स्वरहीनं० । भवतात् । भवताम् । भव अन्तु इति स्थिते । अदे । अनेनाकारस्य लोपः । भवन्तु । मध्यमपुरुषैकवचने । भव हि । इति स्थिते । सूत्रम् ।

### अतः ।

**अकारात्परस्य हेर्लुग्भवति । न तु तातङः । तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं नत्वन्त्यादेशार्थम् । भव-भवतात्, भवतम्, भवत । भवानि, भवाव, भवाम । आयुष्मान् भवतु भवान् । अध्ययनायोद्यतो भव सौम्य । भवताम्, भवेताम्, भवन्ताम् । भवस्व, भवेथाम्, भवध्वम् । भवै, भवावहै, भवामहै । हरिं भवस्व स त्वम् ।**

अतः । ( पं० ए० ) अकारादुत्तरस्य हि इति वचनस्य लुग्भवति । न तु तातङः । अनेन हेर्लुक् । भव इति सिद्धम् । द्वितीयरूपे तुह्योरिति तातङादेशः । भवतात् । भवतम् । भवत । उत्तमपुरुषवचनत्रयेऽपि । आडुत्तमस्य पिच्च । भवानि । भवाव । भवाम । अर्थोदाहरणम् । भवान् आयुष्मान् भवतु । दीर्घायुर्भवतु इत्याशीः । एवं भवन्तौ आयुष्मन्तौ भवताम् । भवन्तः आयुष्मन्तो भवन्तु । अत्र यद्यपि भवच्छब्दो युष्मदर्थो तथापि सामान्येन नामरूपत्वात् प्रथमपुरुषप्रयोगः । हे सौम्य त्वम् अध्ययनाय पठनाय उद्यतः सावधानो भव । अत्र प्रेरणे मध्यमपुरुषैकवचनप्रयोगः । एवमन्यदप्युदाहरणं ज्ञेयम् । तथात्मनेपदिनो भूङ्धातोस्तामादयो नवप्रत्यया भवन्ति । भू ताम् इति स्थिते । अप्कर्तरि । गुणः । ओ अव् । स्वरहीनं० ।

भवताम्। भव आताम् इति स्थिते। 'आदाथइ' अनेनाकारस्य ईकारः। भवेताम्। भवे। भवन्ताम्। भवस्व। आदाथइ। भवेथाम्। भवध्वम्। एऐऐ। भवै। सवर्णे दीर्घः। भवावहै। भवामहै। हरिं भवस्व त्वम् इत्युदाहरणम्। अथ। लङ्लकारः कथ्यते। सूत्रम्।

## अनद्यतनेऽतीते।

अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः। प्रथमयामद्वयं सोऽद्यतनस्ततोऽन्योऽनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले दिबादयः प्रत्यया भवन्ति। एषां संज्ञा लङ्।

### परस्मैपदानि।

| एकवचनानि। | द्विवचनानि। | बहुवचनानि। |
|---|---|---|
| १ दिप् | ताम् | अन् |
| २ सिप् | तम् | त |
| ३ अमिप् | व | म |

### आत्मनेपदानि।

| | | |
|---|---|---|
| १ तन् | आताम् | अन्त |
| २ थास् | आथाम् | ध्वम् |
| ३ ईं | वहि | महि |

दिसिमि इत्येतेषामिकार उच्चारणार्थः। तनो नकार इण्तन्थकर्त्तरीति विशेषणार्थः। वावसाने इति दकारस्य तकारः।

अनद्यतने इत्यादि। अद्यभवोऽद्यतनस्तदन्योऽनद्यतनः। तस्मिन् अनद्यतने (स० ए०) अतीते (स० ए०) अग्रे दिबादीन्यष्टादशपदानि। प्रथमैकवचनानि वार्त्तिकानि। एवं विंशतिपदं सूत्रम्। अथ वृत्तिकारोऽनद्यतनेऽतीते

इति पदं व्याचष्टे। अतीताया इति वर्त्तमानदिनात् प्राक् अतीताया गताया रात्रेः अन्त्ययामद्वयात् अर्वाक् वर्त्तमानदिनं संयोज्य यावत् आगामिन्या आसन्नवर्त्तिन्या रात्रेः प्रथमप्रहरद्वयं सोऽष्टप्रहरप्रमाणः कालोऽद्यतन इत्युच्यते। गतरात्रेः पश्चिमप्रहरद्वयं सकलो दिवसः आगामिन्या रात्रेः पूर्वं प्रहरद्वयं सोऽद्यतनः ततोऽन्यः कालोऽनद्यतनः स च अनद्यतनो द्विधा अतीताऽनागतभेदात्। तत्रातीते गतेऽनद्यतने काले वाच्यमाने धातोः दिबादयो महिङ्पर्यन्ताः परस्मैपदात्मनेपदभेदेनाऽष्टादशप्रत्यया भवन्ति। एषां अष्टादशानां पाणिनीयमते लङ् इति संज्ञा। अनद्यतने लङ्। दिसिमीत्यादि। तत्र दिप् सिप् मिप् इत्येतेषां पकारः पित्कार्यार्थः। इकार उच्चारणार्थः। तेन द् स् अम् इत्येव स्थिष्यते। आत्मनेपदे तन् इति वचनस्य नकारः इण्तन्यकर्त्तरीति सूत्रार्थः। परस्मैपदिनो भूधातोर्दिबादयो नव प्रत्यया भवन्ति। भू दिप् इति स्थिते अप्कर्त्तरि। गुणः। ओ अव्। स्वरहीनं०। प्रथमपुरुषैकवचने 'दावसाने' अनेन दस्य तः। अभवत् इति जाते। सूत्रम्।

## दिबादावट्।

**दिबादौ परे धातोरडागमो भवति। अभवत्, अभवताम्, अभवन्। अभवः, अभवतम्, अभवत। अभवम्, अभवाव, अभवाम। ह्योऽभवत्त्वत्पुत्रः। अभवत, अभवेताम्, अभवन्त। अभवथाः, अभवेथाम्, अभवध्वम्। अभवे, अभवावहि, अभवामहि। स राज्यमभवत।**

दिबादावट दिप् आदिर्यस्यासौ दिबादिः। तस्मिन् दिबादौ ( स० ए० ) अट् ( प्र० ए० ) मध्ये उ अव्। द्विपदं सूत्रम्। दिबादौ प्रत्यये परे सति धातोः अट् इत्यागमो भवति टित्त्वादादौ। अभवत्। अभवद्। अभवताम् बहुवचने अदे इत्यकारलोपः। स्वर०। अभवन्। मध्यमपुरुषैकवचने सो०। अभवः। अभवतम्। अभवत। उत्तमपुरुषैकवचने 'अदे'। स्वर०। अभवं द्वित्वबहुत्वयोः। व्योरा। अभवाव। अभवाम। अथोदाहरणम्। ह्यः अतीतदिने पूर्वेद्युः तव पुत्रोऽभवत्। एवं ह्यः तव पुत्रावभवताम्। ह्यः तव पुत्रा अभवन्। ह्यस्त्वम् अभवः। ह्यो युवामभवतम्। ह्यो यूयमभवत। ह्योऽहमभवम्। ह्यः

द्वितीये । भाविनी रः । द्विपदं सूत्रम् । णादौ परे द्वित्वे जाते सति पूर्वस्य द्विरुक्तरूपस्य भकारस्य तथा भूधातुसम्बन्धिन ऊकारस्य च आकारादेशो भवति । यद्यप्यासेत्यादौ आकारकरणं विनैव सिद्धिस्तथापि व्यानशे आनञ्ज आनर्च इत्यादिसिद्ध्यर्थमकारत्वमिति पूर्वस्य भू इत्येतस्य णा । आ भू ण इति जाते । सूत्रम् । ह्रस्वः ( प्र० ए० ) एकपदम् । पूर्वसम्बन्धिनः दीर्घस्य ह्रस्वो भवति । अनेन पूर्वस्य ह्रस्वः ।

## झपानां जबचपाः ।

**पूर्वसम्बन्धिनां झपानां जबाश्चपाश्च भवन्ति । झढधघभानां जडदगबा भवन्ति । खफछठथानां चटतकपा भवन्ति ।**

झपानां जबचपाः । झपानां ( ष० ब० ) जबाश्च चपाश्च जबचपाः (प्र० ब०) पूर्वसम्बन्धिनां झपानां जबाः चपा भवन्ति । झढदघभानां जडदगबा भवन्ति खफछठथानां कपचटता भवन्ति इत्यनेन सूत्रेण भकारस्य बकारो जातः । पुनश्च बभू ण इति जाते सूत्रम् ।

## भुवो वुक् ।

**भुवो वुगागमो भवति णादौ स्वरे परे । बभूव बभूवतुः बभूवुः ।**

भुवः ( ष० ए० ) वुक् । ( प्र० ए० ) भूधातोः णमादौ स्वरे परे वुगागमो भवति कित्त्वादन्ते उकार उच्चारणार्थः वुग्विधानसामर्थ्यादेव गुणवृद्धी न भवतः । स्वरहीनं० । बभूव । बभूवतुः । बभूवुः । *बभूथ । थलीति सूत्रम् ।

## क्रादेर्णादेः ।

**डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् संवरणे । द्रु गतौ । श्रु श्रवणे । स्रु प्रस्रवणे ष्टुञ् स्तुतौ ।**

कृसृभृवृस्तुद्रुस्रुश्रुषु इत्येतस्मात्परस्य वसादेर्थादेर्गणस्येट् न भवत्यन्यस्माद्भवतीति नियमादनिटोऽपीडागमः। यदागमास्तत् गुणीभूतास्तद् ग्रहणेन गृह्यन्ते इति न्यायादिटोऽपि धात्वन्तत्वेन थपि वुक्। बभूविथ बभुवथुः बभूव। बभूव बभूविव बभूविम। बलिर्बलवान् बभूव। बभूवे बभूवाते। बभूविरे बभूविषे। बभूवाथे।

कादेः। कआदिर्यस्यासौ कादिस्तस्मात् कादेः (पं० ए०) थादेः (ष० ए०) द्विपदं सूत्रम्। डुकृञ्करणे। सृगतौ। डुभृञ्धारणपोषणयोः। वृञ्वरणे। द्रुगतौ। स्रु श्रवणे। ष्टुञ्स्तुतौ। इत्येतेभ्यो धातुभ्यः परस्य वस् प्रत्याहारादेर्थादिगणस्य। वस्प्रत्याहारः आदौ यस्य स वस्प्रत्याहारादिस्तस्य वस्प्रत्याहारादेः थप् व मासे ध्वे वहे महे। इति प्रत्ययस्येडागमो न भवति। यथा चकर्थ। ससर्थ। बभर्थ। दुद्रोथ। शुश्रोथ। तुष्टोथ। इत्यादौ इडागमो न भवति। अन्यस्माद्धातोस्तु इडागमो भवति। यतो निषेधः प्राप्तिपूर्वको भवतीति। एभ्यो धातुभ्य इड्निषेधेऽन्यस्माद्धातोः इट् भवतीति नियमः। इति भूधातोः थबादिषु स्वरादिव्यतिरिक्तेषु थकारवकारमकारेषु इडागमो भवति। स्वर० बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम। बलिर्बलिराजा बलवान् बभूव। एवं रामलक्ष्मणौ बलवन्तौ बभूवतुः। पाण्डवा बलवन्तो बभूवुः। त्वं बलवान् बभूविथ। इत्युदाहरणम्। इति लिट्लकारस्य परस्मैपदम्। अथात्मनेपदं लिख्यते। बभूवे। बभूवाते। बभूविरे। बभूविषे। बभूवाथे। एतेषु रूपेषु पूर्वोक्तसूत्रेणैव सिद्धिः। बभूविध्वे इति जाते सति। सूत्रम्

## नामिनोऽचतुर्णां धोढः।

नाम्यन्ताद्धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोश्च धस्य ढो भवति। अत्र सेटो वेत्याहेति वक्तव्यम्। बभूविध्वे बभूविढ्वे। बभूवे बभूविवहे बभूविमहे। रामो राज्यं बभूवे।

नामिनोऽचतुर्णां धो ढः। नाम अस्यास्तीति नामी तस्य नामिनः (पं० ए०)

अपतुर्यां (ष० व०) धः (प० ए०) ढः (प्र० ए०) नामी अन्तो यस्य सः नाम्यन्तः तस्मात् नाम्यन्तात् धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्-लिटोः धस्य ढकारो भवति। अनेन सूत्रेण धकारस्य ढकारो जातः। अत्र अस्मिन् सूत्रे सेटो ह्लादेति वक्तव्यम्। अस्यार्थः। इटा सह वर्त्तमानः सेट् तस्मात् सेटः (पं० ए०) ह्लात् वा भवति इति विकल्पेन धस्य ढो भवति। अतो बभूविध्वे। बभूविढ्वे। इति रूपद्वयं जातम्। बभूवे। बभूविवहे। बभूविमहे। रामो राज्यं बभूवे। भूधातो लिंट्लकारः समाप्तिमगमत्। एवं पञ्च लकारा उक्ताः। अथ षष्ठो लकारः प्रारभ्यते। सूत्रम्।

## आशिषि।

### धातोराशिषि यादादयो भवन्ति। एषां संज्ञा लिङ्।

### परस्मैपदानि।

| | एकवचनानि। | द्विवचनानि। | बहुवचनानि। |
|---|---|---|---|
| १ | यात् | यास्ताम् | यासुस् |
| २ | यास् | यास्तम् | यास्त |
| ३ | यासम् | यास्व | यास्म |

### आत्मनेपदानि।

| | | | |
|---|---|---|---|
| १ | सीष्ट | सीयास्ताम् | सीरन् |
| २ | सीष्ठास् | सीयास्थाम् | सीध्वम् |
| ३ | सीय | सीवहि | सीमहि |

आशिषि। (स० ए०) अर्थे यादादीन्यष्टादश पदानि प्रथमैकवचनान्तानि सांकेतिकानि। एकोनविंशतिपदं सूत्रम्। धातोः कीदृशायामाशिषि अप्राप्तप्रार्थ-नाकथनायां परस्येष्टार्थशंसनलक्षणायां वाच्यमानायां यादादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति। पाणिनीयानां मते एषां संज्ञा लिङ्। भूधातोः परस्मैपदित्वात् अत्र यादादयः प्रत्यया भवन्ति। सूत्रम्।

आशीर्वादादेः पं किदिति वक्तव्यम् ।

ततो गुणाभावः । भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म । स श्रीमान् भूयात् । भू सीष्ट इति स्थिते ।

आशीर्वादादेरिति । आशीर्वादादेः पं परस्मैपदं कित् भवति इति वक्तव्यम् कित्त्वात् गुणाभावः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयासम् । भूयास्व । भूयास्म । स पुरुषः श्रीमान् । लक्ष्मीवान् भूयात् । इत्युदाहरणम् । एवं तौ श्रीमन्तौ भूयास्ताम् । ते श्रीमन्तो भूयासुः । भूङ् प्राप्तौ इति धातोरात्मने पठितात् सीष्टादयो नव प्रत्यया भवन्ति । भू सीष्ट इति स्थिते । सुगमः । औसीष्ट इति जाते । सूत्रम् ।

सिसतासीस्यपामिट् ।

धातोः परेषां सि स तासी स्यप् इत्येतेषामिडागमो भवति । गुणावादेशौ । षत्वम् । भविषीष्ट भविषीयास्ताम् भविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । धीध्वधानेऽपि ढत्वम् । भविषीढ्वम् भविषीय भविषीवहि भविषीमहि । हरिभक्तिं भविषीष्ठाः ।

सिसतासीस्यपामिट् । सिश्च सश्च ता च सीश्च स्यप् च सिसतासीस्यपः तेषाम् । सिसतासीस्यपां ( ष० ब० ) इट् ( प्र० ए० ) द्विपदं सूत्रम् । सिः भूते सिः । स इति स्वार्थः सः । तादिः श्वस्तन्यर्थेऽष्टादशको गणः । सी सीष्ट सीयास्ता-मित्यादिः आशीरर्थात्मनेपदे नवको गणः । स्यप्भविष्यत्क्रियातिपत्त्योः । धातोः परेषाम् इत्येतेषां प्रत्ययानामिडागमो भवति । टित्त्वादादौ । अत्र प्रथमं सीष्टादिकस्याङित्त्वात् गुणं विधाय तत इडागमः । अथवा इडागमे कृतेऽपि टित्त्वे सति ङित्त्वाभावात् गुणकरणे न दोषः । षत्वम् । कित्वात् । भविषीष्ट । भवि-षीयास्तां भविषीरन् । भविषीष्ठाः । भविषीयास्थाम् । भविषीध्वम् । धीध्व-धानेऽपि ढत्वं भवेत् । भविषीढ्वम् । भविषीय । भविषीवहि । भविषीमहि ।

त्वं हरिभक्तिं भविषीष्ठा इत्युदाहरणम्। इत्यात्मनेपदिनी रूपाणि। समाप्तिमगमत् षष्ठो लकार:।

अथ सप्तमो लकार: प्रारभ्यते।

श्वस्तने।

श्व आगतेऽह्नि भाविन्यर्थे तादयो भवन्ति। एषां संज्ञा लुट्।

## परस्मैपदानि।

| एकवचनानि। | द्विवचनानि। | बहुवचनानि। |
|---|---|---|
| १ ता | तारौ | तारस् |
| २ तासि | तास्थस् | तास्थ |
| ३ तास्मि | तास्वस् | तास्मस् |

## आत्मनेपदानि।

| | | |
|---|---|---|
| १ ता | तारौ | तारस् |
| २ तासे | तासाथे | ताध्वे |
| ३ ताहे | तास्वहे | तास्महे |

इड्गुणाव:। भविता भवितारौ भवितार:। भवितासि भवितास्थ: भवितास्थ। भवितास्मि भवितास्व: भवितास्म:। श्वस्ते हरि: प्रत्यक्षो भविता। भविता भवितारौ भवितार:। भवितासे भवितासाथे भविताध्वे। भविताहे भवितास्वहे भवितास्महे। श्वो हरिं भविताहे।

श्वस्तने। श्वो भव: श्वस्तनपाक्षिक् श्वस्तने (स० ए०) ता तारौ तारस्। इत्याद्यष्टादश पदानि सांकेतिकानि प्रथमैकवचनान्तानि इत्येकोनविंशतिपदं सूत्रम्। व्याख्या: श्व आगामिदिने भाविनि कालेऽर्थे तादयोऽष्टादश प्रत्यया: परस्मैपदात्मने-

भवन्ति । एषां पाणिनीयानां मते लुट्संज्ञा । प्रथमं परस्मैपदिनो धातो रूपाणि । भू ता इति स्थिते । गुणः । सूत्रम् । सिसतासीस्यपामिट् । इत्यनेन सूत्रेण इट् । ओ अव् । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वः प्रातःकाले तव हरिः प्रत्यक्षो भविता । अथात्मनेपदिनो भूङ्धातो रूपाणि पूर्वोक्तेनैव सत्रेण साधितव्यानि । भविता भवितारौ भवितारः । भवितासे भवितासाथे भविताध्वे भविताहे । भविताह्वे भवितास्वहे भवितास्महे । इति रूपाणि । 'श्वो हरिं भविता' इत्युदाहरणम् । एतेषामुदाहरणानि विस्तरभयात् न लिखितानि । लुट्लकारोऽयं समाप्तिं प्राप्तः । समाप्तोऽयं सप्तमो लकारः । ७ ।

---

## अथाष्टमो लकारः प्रारभ्यते ।

### त्यादौ भविष्यति स्यप् ।

**धातोर्भविष्यति काले स्यप् प्रत्ययो भवति तिबादिष्वष्टादशसु परेषु । अस्य संज्ञा लृट् । भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः । कल्किर्धर्मप्रवर्तको भविष्यति । भविष्यते भविष्येते भविष्यन्ते । भविष्यसे भविष्येथे भविष्यध्वे । भविष्ये भविष्यावहे भविष्यामहे । सार्वभौमराज्यं भविष्यते ।**

त्यादौ भविष्यति स्यप् । त्यादौ ( स० ए० ) भविष्यति (स. ए.) स्यप् ( प्र० ए० ) त्रिपद सूत्रम् । भविष्यति इति भविष्यन् तस्मिन् भविष्यति काले धातोः तिबादाष्टादशसु परस्मैपदात्मनेपदवचनेषु परेषु स्यप् प्रत्ययो भवति । पकारः पित्कार्यार्थः । पाणिनीयानां मते अस्य लृट् इति संज्ञा । भू तिप् इति स्थिते । त्यादौ भविष्यति स्यप् । अनेन सूत्रेण स्यप् प्रत्ययः । सिसतासीस्यप् । अनेन सत्रेणेट् गुण इति सूत्रेण गुणः । ओ अव् इति सूत्रेण । अव् । क्रिलात् इति सूत्रेण सकारस्य षकारः । पूर्वोक्तेन सूत्रेण भविष्यति इति रूप

सिद्धम्। अत्रान्यानि सूत्राणि पूर्वोक्तानि ज्ञेयानि। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः। कल्किनामेश्वरस्यावतारो धर्मप्रवर्त्तको भविष्यति इत्युदाहरणम्। इति परस्मैपदिनो रूपाणि कथितानि। अथात्मनेपदिनो रूपाणि कथ्यन्ते। पूर्वोक्तैनैव सूत्रेणात्मनेपदिनोऽपि रूपाणि सिध्यन्ति। भविष्यते। भविष्येते। भविष्यन्ते। भविष्यसे। भविष्येथे। भविष्यध्वे। भविष्ये। भविष्यावहे। भविष्यामहे। सावर्णिर्मनूराज्यं भविष्यते। इत्युदाहरणम्। इत्यात्मनेपदिनो रूपाणि। समाप्तोऽयं लृट् लकारः। समाप्ते प्राप्तोऽयमष्टमो लकारः।

**अथ नवमो लकारो निगद्यते।**

---

**स्यप् क्रियातिक्रमे।**

**धातोः क्रियाया अतिक्रमे कुतश्चिद्वैगुण्यादनिष्पत्तौ सत्यां दिवादिपरः स्यप्रत्ययो भवति भविष्येऽर्थे क्वचिद्भूतेऽपि। अस्य संज्ञा लृङ्। अडागमः अभविष्यत्—अभविष्यद् अभविष्यताम् अभविष्यन्। अभविष्यः अभविष्यतम् अभविष्यत। अभविष्यम् अभविष्याव अभविष्याम। यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्यत्। अभविष्यत अभविष्येताम् अभविष्यन्त। अभविष्यथाः अभविष्येथाम् अभविष्यध्वम्। अभविष्ये अभविष्यावहि अभविष्यामहि। यदि अभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत्।**

स्यप् क्रियातिक्रमे। द्विपदं सूत्रम्। स्यप् (प्र० ए०) क्रियातिक्रमे (स०ए०) क्रियाया अतिक्रमोऽभवनं क्रियातिक्रमः तस्मिन् क्रियातिक्रमे क्रियायाः कर्तृव्यापाररूपाया धात्वर्थलक्षणायाः कार्यस्य वातिक्रमे कुतश्चित् कारणात् अनिष्पत्तौ असिद्धौ सत्यां धातोर्दिवादिषु विभक्तिषु परतः स्यप् प्रत्ययो भवति। पाणिनी-

यानां मते एषां लृङ् इति संज्ञा। भू दिप् इति स्थिते। अनेन सूत्रेण स्यप्रत्ययः। स्यसतासीत्यपाम्। अनेन सूत्रेणेडागमः। 'गुणः' इत्यनेन सूत्रेण गुणः। ओ अव्। इति सूत्रेणाव्। 'क्विलात्' इति सूत्रेण सकारस्य षकारः। 'वावसाने' अनेन तकारस्य दकारो भवति। 'दिबादावट्' इति सूत्रेणाडागमो भवति। स्वरहीनं०। अभविष्यत्। अभविष्यताम्। अभविष्यन्। 'अटे' इति सूत्रेणाकारस्य लोपः कार्यः॰ प्रथमपुरुषस्य बहुवचने। अभविष्यः। अभविष्यतम्। अभविष्यत। अटे। अभविष्यम्। व्योरा। अभविष्याव। अभविष्याम। अथोदाहरणम्। यदि सुवृष्टिः सुराज्यं च अभविष्यत् तदा सुभिक्षमभविष्यत्। इति परस्मैपदिनो भूधातो रूपाणि। अथात्मनेपदिनो भूङ्धातो रूपाणि कथ्यन्ते। तेषामनेनैव सूत्रेण सिद्धिः। अभविष्यत अभविष्येतां अभविष्यन्त। अभविष्यथाः अभविष्येथां अभविष्यध्वम्। अभविष्ये अभविष्यावहि अभविष्यामहि। यदभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत्। समाप्तिं गतो नवमोऽयं लृङ्लकारः। अन्येतराण्युदाहरणानि न दर्शितानि विस्तरभयात्।

---

## अथ दशमो लकारः प्रारभ्यते।

### भूते सिः।

**धातोर्भूतमात्रे काले सिः प्रत्ययो भवति। दिबादिपरः। अस्य संज्ञा लुङ्। इकारः सेरिति विशेषणार्थः। अभूस् त् इति स्थिते।**

भूते (स० ए०) सिः। (प्र० ए०) धातोर्भूतमात्रे तत्कालोत्पन्नमात्रे अतीते कालेऽर्थे सिप्रत्ययो भवति दिबादौ परे। इकारः सेरितिविशेषणार्थः। अस्य पाणिनीयानां मते लुङ् इति संज्ञा। भू दिप् इति स्थिते। भूते सिः अनेन सूत्रेण सिप्रत्ययः। इकारः सेः। दिबादावट्। अनेनाडागमः। वावसाने। अनेन दकारस्य तकारः। पूर्वोक्तसूत्रैः अभूस् त् इति जातम्। तत्र सूत्रम्।

दादेः पे ।

परस्मैपदे परे अपित् । दाधास्थेण्भूपिबतिभ्यः परस्य सेर्लोपो भवति ।

दादेः ( पं० ए० ) पे ( स० ए० ) अपित् दा धा स्था इण् भू पा पाने इत्ये तेभ्यः परस्य भूतार्थस्य सेर्लोपो भवति परस्मैपदविषये । द्वितीयं सूत्रम् ।

शाच्छासाघ्राधेटो वेति वक्तव्यम् ।

भुवः सिलोपो लुग्वाच्यः । लुकि न तन्निमित्तम् । लुकि सति तन्निमित्तं कार्य्यं न स्यात् । तेन गुणेड्वृद्धयो न । अभूत् अभूताम् ।

शाच्छेति । शाच्छासाघ्राधेट् एभ्यो धातुभ्यः सिलोपो वा भवति इति वक्तव्यम् । भुवः ( ष० ए० ) इदं सूत्रमस्ति । भूधातोः सिलोपो लुग् वाच्यः । लुकि न तन्निमित्तम् । तेन गुणेड्वृद्धयो न भवन्ति । अभूत् । अभूताम् । बहुवचने अभू अन् इति स्थिते । सूत्रम् ।

भुवः सिलोपे स्वरे वुग्वक्तव्यः ।

अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम । अभूदृष्टिः । आत्मनेपदे । सिः इट् गुणावौ षत्वं ष्टुत्वं अट् । अभविष्ट अभविषाताम् ।

भुवः ( पं० ए० ) भूधातोः सिलोपे कृते सति स्वरे परे अमि अनि च वुगागमो भवति । ककारो गुणप्रतिषेधार्थः । स्थाननियमार्थश्च । उकार उच्चारणार्थः । इति अनि वकारागमः । स्वरहीनं० । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम । इति परस्मैपदिनो भूधातो रूपाणि । अभूत् दृष्टिरित्युदाहरणम् । अथात्मनेपदिनो भूङ्धातो रूपाणि कथ्यन्ते । आत्मनेपदे सिः इट् गुणावौ षत्वं ष्टुत्वम् अट् एते भवन्ति । अभविष्ट । अभविषाताम् । अभविष् अन्त इति स्थिते । सूत्रम् ।

## आतोऽन्तोऽदनतः।

आत आत्मनेपदस्यान्त इत्येतस्याद्भवति। अकारादुत्तरस्य न भवति। अभविषत। अभविष्टाः अभविषाथाम्।

आतोऽन्तोऽदनतः। आतः (ष० ए०) अन्तः (प्र० ए०) अत् (प्र० ए०) अत् अकारः न अत् अनत तस्मात् अनतः (पं० ए०) आद्ये पदद्वयेऽतीत्यः। उभौ। एदौ। इतोऽग्रे यथा अबेक्षया। चतुःपदं सूत्रम्। आत्मनेपदसम्बन्धिन प्रथमपुरुषबहुवचनस्य अन्ते इत्यस्यात् भवति। अन्ते इत्यस्याते इति भवति। अन्ताम् इत्यस्याताम् अन्त इत्यस्यात भवतीति भावः। परम् अकारादुत्तरस्य न भवति। अनेनान्ते इत्यस्याते कृते स्वरहीनम्। अभविषत। अभविष्ठाः। अभविषाथाम्। अभविस् ध्वम्। इति स्थिते सूत्रम्।

## ध्वे च सेर्लोपः।

ध्वे परे सेर्लोपो भवति। वा सस्य द इति केचित्। अभविध्वम्-अभविढ्वम्। अभविषि अभविष्वहि। अभविष्महि। देवदत्तो राज्यमभविष्ट।

ध्वे च सेर्लोपः। ध्वे (स० ए०) च अव्ययम्। सेः (ष० ए०) लोपः (प्र० ए०) ध्वे परे सति सेर्लोपो भवति। अभविध्वम्। वा सस्य दकारो भवति। इति केचित् केषाञ्चिदाचार्याणां मतेन सकारस्य दकारो भवति। स्वरहीनम्। अभविध्वम्। अभविषि अभविष्वहि अभविष्महि। इत्यात्मनेपदिनो रूपाणि। देवदत्तो राज्यमभविष्टेत्युदाहरणम्।

## माङि लुङेव वक्तव्यः।

### सर्वलकारापवादः।

माङि। माङि प्रयुज्यमाने लुङ्लकार एव वक्तव्यः। सर्वलकारापवादो भवति।

मेटः ।

माशब्दे प्रयुज्यमाने अटो लोपो भवति । मा स्म हर्ष्यं-भक्तो भवान् भूत् ।

मेटः । इद सूत्रमस्ति । मे ( स० ए० ) अटः । ( ष० ए० ) द्विपदं सूत्रम् । निषेधार्थमाशब्दे प्रयुज्यमाने दिबादिनिमित्तोत्पन्नस्याटोऽडागमस्य लोपो भवति । अनेन सूत्रेणाटो लोपो भवति । मा हर्ष्यभक्तो भवान् भूत्, इत्यादि प्रयोगसिद्धिः ।

स्मयोगे भूतार्थता वक्तव्या ।

स्मयोगे भूतार्थता वक्तव्या । स्पष्टमिदं सूत्रम् । द्वितीयं सूत्रम् ।

मास्मयोगे लङ् च ।

मास्मभवत् । मास्मभूत् । चिती संज्ञाने । इकार इदित्कार्यार्थः । पूर्ववत्तिबादयः । अप् कर्त्तरि ।

मास्मयोगे लङ् च । स्पष्टम् । च पुनः मास्म इत्येतयोः द्वयोः योगे लङ् लकारो भवतीत्यर्थः । मा स्म भवत् । इत्युदाहरणम् द्वितीयसूत्रस्य । मा स्म भूत् । इत्युदाहरणं प्रथमसूत्रस्यास्ति इति भू सत्तायाम् इत्यस्य भूङ् प्राप्तौ इत्यस्य च रूपाणि दर्शितानि । तत्र भूधातुः परस्मैपदी ज्ञातव्यः । परतोऽन्यत् इति सूत्रात् । भूङ्धातुरात्मनेपदी ज्ञातव्यः ङित्वात् । परस्मैपदिनः परस्मैपदानि भवन्ति । आत्मनेपदिन आत्मनेपदानि भवन्तीति ज्ञातव्यम् । अत सङ्क्षेपेण सन्धिर्न कृतः । बालानां सुखेन बोधकरत्वात् । समाप्तोऽयं दशमो लकारो लुङ् ॥ १० ॥ इति हर्षोधातो रूपाणि । अथ भ्वादिगणः प्रारभ्यते । तत्रादौ परस्मैपदप्रक्रिया कथ्यते । चिती संज्ञाने । इकार इदित्कार्यार्थः । पूर्ववत् तिबादयो भवन्ति । अप् कर्त्तरि । अनेनाप् । चित् अप् तिप् इति जाते सूत्रम् ।

उपधाया लघोः ।

धातोरुपधाया लघोर्नामिनो गुणो भवति । चेतति

चेतत: चेतन्ति ॥ १ ॥ चेतेत् चेतेताम् चेतेयु: ॥ २ ॥ चेततु—चेततात् चेतताम् चेतन्तु ॥ ३ ॥ अचेतत् अचेतताम् अचेतन् ॥ ४ ॥ द्वित्वम् । चिचेत । क्त्वाद्गुणाभाव: । चिचिततु: चिचितु: । चिचेतिथ चिचितथु: चिचित । चिचेत चिचितिव चिचितिम ॥ ५ ॥ क्त्वाद्गुणाभाव: । चित्यात् चित्यास्तां चित्यासु: ॥ ६ ॥ चेतिता चेतितारौ चेतितार: ॥ ७ ॥ चेतिष्यति चेतिष्यत: चेतिष्यन्ति ॥ ८ ॥ अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन् ॥ ९ ॥ चित् स्मित् इति श्रिते । सिसता० इतोट् ।

उपधाया लघो: । उपधाया: (ष० ए०) लघो: (ष० ए०) द्विपदं सूत्रम् । धातोरुपधाभूतस्य लघोर्नामिन: । क्ङिद्वर्जिते प्रत्यये परे गुणो भवति । पकार: । स्वर० । लट् । चेतति । चेतत: । चेतन्ति । चेतसि । चेतथ: । चेतथ । चेतामि । चेताव: । चेताम: । लिङ् । चेतेत् । चेतेताम् । चेतेयु: । चेते: । चेतेतम् । चेतेत । चेतेयम् । चेतेव । चेतेम । लोट् । चेततु । चेततात् । चेतताम् । चेतन्तु । चेत । चेततात् । चेततम् । चेतत । चेतानि । चेताव । चेताम । लुङ् । अचेतत् । अचेतताम् । अचेतन् । अचेत: । अचेततम् । अचेतत । अचेतम् । अचेताव । अचेताम । लिट् । द्विश्च । स्वस्वरादिर्द्विरुक्ति: । चि चित् णप् इति स्थिते । णकार: । पकार: । गुण: । स्वरहीनं० । चिचेत । क्त्वाद्गुणाभाव: । चिचिततु: । चिचितु: । चिचेतिथ । चिचितथु: । चिचित । चिचेत । चिचितिव । चिचितिम । लिङ् । चित्यात् । चित्यास्तां चित्यासु: । चित्या: । चित्यास्तम् । चित्यास्त । चित्यासम् । चित्यास्व । चित्यास्म । लुट् । चेतिता । चेतितारौ । चेतितार: । चेतितासि । चेतितास्थ: । चेतितास्थ । चेतितास्मि । चेतितास्व: । चेतितास्म: । लृट् । चेतिष्यति । चेतिष्यत: । चेतिष्यन्ति । चेतिष्यसि । चेतिष्यथ: । चेतिष्यथ । चेतिष्यामि । चेतिष्याव: । चेतिष्याम: । लृङ् । अचेतिष्यत् । अचेतिष्यताम् । अचेतिष्यन् । अचेतिष्य: । अचेतिष्यतम् । अचेतिष्यत । अचेतिष्यम् । अचेतिष्याव । अचेति-

ष्याम। लुङ्। चित् सि दिप् इति स्थिते। सिसता०। अनेन सूत्रेण इट्। चित् इट् सि दिप् इति जाते सूत्रम्।

**सेः।**

**सिशब्दात्परयोर्दिस्योरीडागमो भवति।**

**इट ईटि।**

**इट उत्तरस्य सेर्लोपो भवति ईटि परे। अचेतीत् अचेतिष्टाम्।**

सेः। (प० ए०) सिशब्दात् परयोर्दिस्योरीडागमो भवति। अनेनेट् तदा चित् इट् सि ईट् दिप् इति जातम्। तत्र सूत्रम्। इट ईटि। इटः (पं० ए०) ईटि (स० ए०) इट उत्तरस्य सेरीटि परे लोपो भवति। इति दिस्योर्विषये सिलोपः। अनेन सूत्रेण सिलोपः कार्य्यः। तदा चित् इट् ईट् दिप् इति जाते। टकारः। दि सि मि। पकारः। तदा चित् इ ई द् इति स्थिते गुणः। सवर्णे। स्वरहीनं०। दिबादावट्। वावसाने। एभिः पूर्वोक्तैः सूत्रैः। अचेतीत् इति रूपं सिद्धं भवति। अचेतीत्। अचेतिष्टाम्। अचेति सि अन् इति स्थिते सूत्रम्।

**स्याविदः।**

**सेराकारान्ताद्विदश्चोत्तरस्यान उस् भवति। अचेतिषुः। अचेतीः अचेतिष्टम् अचेतिष्ट। अचेतिषम् अचेतिष्व अचेतिष्म। च्युतिर् आसेचने इरनुबन्ध इरितो वेति विशेषणार्थः। उच्चरितप्रध्वंसी ह्यनुबन्धः च्योतति, च्योतेत्, च्योततु, अच्योतत्। च्युत् णप् द्वित्वम्।**

स्याविदः। (पं० ए०) एकपदं सूत्रम्। सेः भूतार्थोत्पन्नात् आकारान्तात् दा इत्यादेः विद ज्ञाने इत्यस्माद्धातोश्च परस्य अन उस् भवति। अनेनान उस् जातः। स्वरहीनं०। सोर्विसर्गः। अचेतिषुः। अचेतीः। अचेतिष्टम्। अचेतिष्ट। अचेतिषम्। अचेतिष्व। अचेतिष्म। समाप्तिं प्राप्तोऽयं धातुः।

च्युतिर् आसेचने इह धनुबन्धोऽस्ति इरितो वा इति सूत्रस्य विशेषणार्थः । उच्चरितप्रध्वंसी ह्यनुबन्धो भवति । पूर्ववत् तिबादयः । उपधाया लघोः । अनेन गुणः । लट् । च्योतति । च्योततः । च्योतन्ति । लिङ् । च्योतेत् । च्योतेताम् । च्योतेयुः । लोट् । च्योततु । च्योततात् । च्योतताम् । च्योतन्तु । लङ् । अच्योतत् । अच्योतताम् । अच्योतन् । सुगमत्वात् । एतेषां विवेचनं न कृतम् । लिट् । चुत् णप् इति स्थिते । द्विश्च । चुत् चुत् णप् इति जाते सूत्रम् ।

## पूर्वस्य हसादिः शेषः ।

पूर्वस्यादिर्हसः शिष्यते अन्यो लुप्यते । चुच्योत चुच्युततुः चुच्युतुः । चुच्योतिथ चुच्युतथुः चुच्युत । चुच्योत चुच्युतिव चुच्युतिम । च्युत्यात् च्योतिता च्योतिष्यति अच्योतिष्यत् । अच्योतीत् अच्योतिष्टाम् अच्योतिषुः । अच्योतीः अच्योतिष्टम् अच्योतिषम् अच्योतिष्व अच्योतिष्म ।

पूर्वस्य हसादिः शेषः । पूर्वस्य ( ष० ए० ) द्वयोर्हसानां वा संयुक्तानामसंयुक्तानामादिः ( प्र० ए० ) हसादिः शेषः । अथवा हस इति पृथक्पदं साङ्केतिकं प्रथमैकवचनान्तम् । द्विर्वचने कृते सति पूर्वरूपस्य संयोगे सति आदिमो हसः शिष्यते रक्ष्यतेऽन्यो द्वितीयो लुप्यते । अनेन यकारतकारयोर्लोपः कार्यः । तदा चुच्युत् णप् । इति जाते । गुणः । उपधाया लघोः । स्वरहीनं० । णकारः । पकारः । चुच्योत । चुच्युततुः । चुच्युतुः । चुच्योतिथ । चुच्युतथुः । चुच्युत । चुच्योत । चुच्युतिव । चुच्युतिम । लिङ् । च्युत्यात् । च्युत्यास्ताम् । च्युत्यासुः । लुट् । च्योतिता । च्योतितारौ । च्योतितारः । लृट् । च्योतिताष्यति । च्योतिष्यतः । च्योतिष्यन्ति । लृङ् अच्योतिष्यत् । अच्योतिष्यताम् । अच्योतिष्यन् । लुङ् । अच्योतीत् । अच्योतिष्टाम् । अच्योतिषुः । अस्य धातोर्लुङ्लकारे सेरपवादो ङप्रत्ययो विकल्पेन भवति । तद्विधायकं सूत्रम् ।

## इरितो वा ।

इरितो धातोर्वा ङः प्रत्ययो भवति दिवादिभ्यः परस्मै०

दृशादेः पश्यादिः ।

दृशादेर्धातोः पश्यादिरादेशो भवति चतुर्षु परेषु । दृश् ऋ सृ शद् सद् पा घ्रा ध्मा स्था म्ना दाण् एते दृशादयः । पश्य ऋच्छ धौ शीय सीद पिब जिघ्र धम तिष्ठ मन यच्छ एते पश्यादयः । पश्यति, पश्येत्, पश्यतु, अपश्यत् । ददर्श, ददृशतुः, ददृशुः । सृजिदृशोस्थपो वेट् । ददर्शिथ । गुणः । रारो झसे दृशाम् । षत्वम् । दद्रष्ठ ददृशथुः ददृश । ददर्श ददृशिव ददृशिम । दृश्यात्, द्रष्टा, द्रक्ष्यति, अद्रक्ष्यत् । अत उपधायाः । अद्राक्षीत् । झसात् । ष्टुत्वम् । अद्राष्टाम् अद्राक्षुः । पचे । इरितो वा । दृशाङे गुणः । अदर्शत् अदर्शताम् अदर्शन् । ऋ गतौ । ऋच्छादेशः । ऋच्छति ऋच्छेत् ऋच्छतु आर्च्छत् । रः । असात् ऋ अर् । वृद्धिः । आर आरतुः आरुः ।

दृशादेः पश्यादिः । दृश् आदिर्यस्यासौ दृशादिस्तस्य दृशादेः ( ष० ए० ) पश्य आदिर्यस्यासौ पश्यादिः ( प्र० ए० ) दृशादेर्धातोस्तिवादौ विभक्तिचतुष्टये परे पश्य इत्यादिः आदेशो भवति । अनेन पश्यादेशः । पश्य अप् तिप् इति जाते अदे स्वरहीनं० । पश्यति । लिट्लकारे । उपधायाः । अनेन गुणः । ददर्श । ददृशतुः । ददृशुः । ददर्शिथ । सृजिदृशोरिति सृजिदृशोर्धात्वोः थपो वा इट् भवति । अनेनास्य थपि वा इट् भवति । इडभावे । ददृश् थप् इति जाते । गुणः । उपधाया लघोः । रारोझसेदृशाम् । अनेन अरो रजातः । छशषराजादेः । ष्टुत्वम् । दद्रष्ठ । रारोझसे । द्रष्टा । अत उपधायाः । अद्राक्षीत् । झसात् । अद्राष्टाम् । अस्य इरितो वानेन ङप्रत्ययो भवति । तदा अदृश् ङ दिप् इति जाते । दृशादेः । दृशादेर्धातोर्ङकारे परे गुणो भवति । अनेन गुणः । ङकारो ङित्कार्यार्थः स्वर० । अदर्शत् । ऋ गतौ । दृशादेः । अनेन ऋच्छादेशः । अदे । ऋच्छति । चतुर्णां लकाराणां रूपाणि सन्ति ।

सुगमत्वात् व्याख्यानं न कृतम्। ऋ 'णप्' इति स्थिते द्वित्वं। उः। अ ऋ णप् इति जाते ऋ अर्। अर् णप् इति जाते। अत उपधायाः। अनेन वृद्धिः। आर। गुणोऽर्त्तिसवर्णे। आरतुः आरुः। सूत्रम्।

## अत्यर्तिव्ययतीनां थपो नित्यमिट्।

**आरिथ आरथुः आर। आर आरिव आरिम।**

अत्यर्त्ति०। अत्यर्त्तिव्ययतीनां धातूनां थपो नित्यमिट् भवति। अलतो० अस्य विकल्पस्यायमपवादः। आरिथ। ऋ यात् इति स्थिते।

## गुणोऽर्तिसंयोगाद्योः।

**अर्त्तेः संयोगादेॠदन्तस्य च गुणो भवति यकि यङि किति णादावाशीर्य्यादादौ च। अर्य्यात् अर्त्ता। ऋद्धनतः स्यपः अरिष्यति आरिष्यत्।**

गुणोऽर्त्तिसंयोगाद्योः। अर्त्तिश्च संयोगादिश्च अर्त्तिसंयोगादी तयोः अर्त्तिसंयोगाद्योः। ऋ गतावित्यस्य धातोः संयोगादेॠदन्तस्य च ऋकारस्य गुणो भवति यकि यङि किति णादौ आशीर्य्यादादौ च। अनेनारतुः इति रूपं सिद्धं भवति गुणोऽनेन तदा अर्य्यात्। गुणः। अर्त्ता। ऋद्धनतः स्यपः। अनेनास्यट्। गुणः। अरिष्यति। स्वरादेः। आरिष्यत्।

## सर्तिशास्त्यर्तिभ्यो ङो लुङि।

**सेरपवादः। लित्पुषादेर्ङः आरत् आरताम् आरन्। अर्त्तेर्वा ङः। सेरपवादो लुङीति केचित्। आर्षीत्। सृ गतौ। धावादेशः। धावति। शीघ्रगतावेव धावादेशः। सरति। ससार सस्रतुः सस्रुः। क्रादित्वात्। ससर्थ सस्रथुः सस्र। ससार ससर सस्रिव सस्रिम।**

सर्तिशास्त्यर्तिभ्यो ङो लुङि सेरपवादः। सर्तिशास्ति अर्ति एभ्यो धातुभ्यो ङप्रत्ययो भवति सेरपवादः। अनेनास ङः। इयादेः स्वरादेः। आरत्।

ऋर्तेः। ऋर्त्तेर्धातोर्वा ङप्रत्ययो भवति। लुङि सेरपवादः। इति केचिदाचार्या वदन्ति। तेषां मते सेः। स्वरादेः। आर्षीत् इति रूपं सिद्धं भवति। सृगतौ। धावादेशः। धावति शीघ्रगतावेव धावादेशः। तदभावे। सरति। लिट् लकारे। ससार। थपि क्रादित्वान्नेट्। ससर्थ। सृ यात् इति स्थिते सूत्रम्।

## यादादौ।

ऋकारस्य रिङादेशो भवति यादादौ परस्मैपदे परे। ङकारो व्यवधानार्थः। तेन ये इति न दीर्घः। स्रियात् सर्त्ता सरिष्यति असरिष्यत्। पुषादित्वात्ङः। असरत् असरताम् असरन्। शद्लृ शातने।

यादादौ। यादादौ (स० ए०) एकपदं सूत्रम्। आशीरर्थे यादादौ परे धातोरृकारस्य रिङ् इत्यादेशः परस्मैपदे एव। अत्रापि ङकारो ये इति सूत्रेण विहितदीर्घनिषेधार्थः। स्रियात्। सर्त्ता। ऋतः स्तपः। सरिष्यति। असरिष्यत्। पुषादि० अनेन ङः। ड्यादेः। असरत्। शद्लृ शातने। शीयादेशः।

## शीयादेशे आत्मनेपदं वाच्यम्।

शीयते शीयेत शीयताम् अशीयत शशाद। लोपः पचाम्। शेदतुः शेदुः। शेदिथ-शशत्थ शद्यात् शत्ता शत्स्यति अशत्स्यत्। ऌदित्वात्ङः। अशदत् षद्लृविशरणगत्यवसादनेषु। सत्वम्। सीदादेशः। सीदति। ससाद सेदतुः सेदुः। सेदिथ-ससत्थ सद्यात् सत्ता सत्स्यति असत्स्यत् असदत्। निपूर्वः। न्यषदत्। पा पाने पिबादेशः। पिबति पिबेत् पिबतु अपिबत्। पपौ पपतुः पपुः। पपिथ-पपाथ। दादेरे पेयात् पाता पास्यति अपास्यत्। दादेः पे। अपात्। घ्रा गन्धोपादाने। जिघ्रादेशः। जिघ्रति जिघ्रेत् जिघ्रतु

अजिघ्रत्। जघ्रौ जघ्रतुः जघ्रुः। जघ्रिथ-जघ्राथ। घ्रायात्, घ्रेयात्, घ्राता, घ्रास्यति, अघ्रास्यत्, अघ्रासीत्, अघ्रात्। ध्मा शब्दाग्निसंयोगयोः। धमादेशः। धमति, धमेत्, धमतु, अधमत्, दध्मौ, ध्मायात्, ध्मेयात्, ध्माता, ध्मास्यति, अध्मास्यत् अध्मासीत्। ष्ठा गतिनिवृत्तौ। आदेः षः सः। सकारे जाते निमित्ताभावेन ठस्य थः। तिष्ठादेशः। तिष्ठति, तिष्ठेत्, तिष्ठतु, अतिष्ठत्। शर्पूर्वाः खयः। तस्थौ तस्थतुः तस्थुः। स्थेयात्, स्थायात्, स्थाता, स्थास्यति, अस्थास्यत्। निपूर्वः। षत्वम्। न्यष्ठात्। म्ना अभ्यासे। मनादेशः। मनति, मनेत्, मनतु, अमनत्। मम्नौ मम्नतुः मम्नुः। मम्निथ-मम्नाथ। म्नायात्, म्नेयात्, म्नाता, म्नास्यति, अम्नास्यत्, अम्नासीत्। दाण् दाने। यच्छादेशः यच्छति, यच्छेत्, यच्छतु, अयच्छत्। ददौ ददतुः ददुः। दादेरे। देयात्, दाता, दास्यति, अदास्यत्, अदात्। ह्वृ कौटिल्ये। ह्वरति, ह्वरेत्, ह्वरतु, अह्वरत्, जह्वार। गुणोऽर्त्तिसंयोगाद्योः। जह्वरतुः जह्वरुः।

शीयादेशः। शीयादेशे कृते सति आत्मनेपदं वाच्यम्। अनेनास्यात्मनेपदत्वम्। शीयते। लिट्लकारे। अत उपधायाः। शशाद। लोपः पचाम्। शेदतुः। अत्त्वतः० अनेन वा इट्। शेदिथ। खसे चपा झसानाम्। शशत्थ। शद्यात्। खसे चपा झसानाम्। शत्ता। अन्यानि सूत्रे सन्ति लितृपुषादेर्ङः। अनेनास्य ऌदित्वात् ङः। अशदत्। षद्ऌ विशरणगत्यवसादनेषु। सत्वम्। सीदादेशः। सीदति। ससाद। लोपः। सेदतुः। अत्त्वतः। सेदिथ। खसे चपा०। ससत्थ। खसे०। सत्ता। अन्यानि सन्ति। लुङ्लकारे लित् पुषादेर्ङः। असदत्। अयं धातुर्यदा निपूर्वो भवति तदा 'प्रादेश' अनेन षत्वम्। न्यषदत्। पा पाने। पिबादेशः। पिबति। लिट्लकारे 'आ

णप्' इति स्थिते। द्वित्व। ह्रस्वः। आतो णप् डौ। पपौ। आतोऽनपि। पपतुः। अजतो०। पपिथ। पपाथ। दादेरे। पेयात्। दादेः पे। अनेन सेर्लोपो भवति। अपात्। अपाताम्। अपुः। आतोऽनपि इत्यनेनाकारस्य लोपः। घ्रा गन्धोपादाने। जिघ्रादेशः। जिघ्रति। घ्रा णप् इति स्थिते। द्वित्व। ह्रस्वः। रः। झपानाम्। कुहोश्चुः। आतो णप् डौ। जघ्रौ। अजतः। जघ्रिथ। जघ्राथ। संयोगादेः। घ्रायात्। घ्रेयात्। आदन्तानाम्। अघ्रासीत्। आच्छासा०। अनेन वा सेर्लोपः। अघ्रात्। ष्ठा गतिनिवृत्तौ। 'आदेः ष्णः सः' अनेन षस्य सः। 'निमित्ताभावे०'। अनेन न्यायेन ठस्य थः। इष्वादेः। तिष्ठादेशः। तिष्ठति। 'स्था णप्' इति स्थिते द्वित्व। ह्रस्वः। शसात् झपानाम्। सवर्णत्वात्। आतो णप्। तस्थौ। दादेरे। स्थेयात्। स्थायात्। लुङ्लकारे। निपूर्वोऽयम्। दादेः पे। अनेन सेर्लोपो भवति। प्रादेश। न्यष्ठात्। म्ना अभ्यासे। मनादेशः। पूर्ववत् तिबादयः। अदे। मनति। पूर्वस्य। मम्नौ। अजतः। मम्निथ। मम्नाथ। संयोगादेः। म्नायात्। म्नेयात्। अन्यानि सूत्रे सन्ति। लुङ्लकारे। आदन्तानाम्। अम्नासीत्। दाण् दाने। इष्वादेः। अनेन यच्छादेशः। यच्छति। दाणप् इति स्थिते। द्वित्व। ह्रस्वः। आतो णप् डौ। ददौ। आतोऽनपि। ददतुः। अजतः। ददिथ। ददाथ। दादेरे। देयात्। लुङ्लकारे दादेः पे। अनेन सेर्लोपो भवति। अदात्। ह्वृ कौटिल्ये। कुटिलस्य भावः कौटिल्यं तस्मिन् कौटिल्ये। गुणः। ह्वरति। ह्वृ णप् इति स्थिते द्वित्व। रः। पूर्वस्य। कुहोश्चुः। धातोर्नामिनः। अनेन वृद्धिः। जह्वार। गुणार्तिसंयोगाद्योः। अनेन किति णबादौ गुणः। जह्वरतुः।

## ऋदन्तस्य थपो नेट्।

जह्वर्थ जह्वरथुः जह्वर। जह्वार-जह्वर जह्वरिव जह्वरिम। ह्वर्यात्, ह्वर्ता। ऋतः स्यपः। ह्वरिष्यति, अह्वरिष्यत्। वृद्धिः। अह्वार्षीत् अह्वार्ष्टाम्। स्कन्दिर् गतिशोषणयोः। स्कन्दति, स्कन्देत्, स्कन्दतु, अस्कन्दत्। चस्कन्द चस्कन्दतुः चस्कन्दुः। चस्कन्दिथ।

. ऋदन्तस्य । ऋदन्तस्य धातोः यप इट् न भवति । अह्वर्षं । ह्वर्यात् । ह्वर्त्ता । ह्वर्त्तः । ह्वरिष्यति । अह्वरिष्यत् । सिचि । अनेन सिचात् वृद्धिः । अह्वार्षीत् । स्कन्दिर् गतिशोषणयोः । इर् अनुबन्धः इरितो वा इति सूत्रस्य विशेषणार्थः । स्कन्दति । लिट्लकारे । स्कन्द् णप् इति स्थिते द्वित्वं । भसात् । पूर्वस्य । कुहोश्चुः । चस्कन्द । ऋत्संयोगात् । अनेनाकित्त्वात् नोलोपः इति सूत्रेणानुस्वारस्य लोपो न भवति । चस्कन्दतुः । अस्वतः । अनेनास्य वेट् । चस्कन्दिथ । इडभावे चस्कन्द थप् इति स्थिते सूत्रम् ।

## हसात्परस्य झसस्य सवर्णे झसि लोपो वाच्यः ।

**चस्कन्थ । नो लोपः । स्कद्यात्, स्कन्ता, स्कन्त्स्यति, अस्कन्त्स्यत् ।**

हसात् । हसात् परस्य सवर्णे झसि परे लोपो वाच्यः । अनेन दस्य लोपः । चस्कन्थ । नोलोपः । स्कद्यात् । हसात् । स्कन्ता । खसे चपा झसानाम् । स्कन्त्स्यति । अस्कन्त्स्यत्

## सावनिटो नित्यं वृद्धिः ।

**णित्वविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः । अस्कान्त्सीत् । इरितो वा । अस्कदत् । तॄ प्लवनतरणयोः । तरति, तरेत्, तरतु, अतरत् । कित्त्वाभावाद्गुणः । ऋत्संयोगादेर्णादेरकित्त्वं वाच्यम् । तॄफलभजत्रपाम् । इत्येत्वपूर्वलोपौ । ततार तेरतुः तेरुः । तेरिथ ।**

सावनिटः । सौ परे सति अनिटो धातोर्नित्यं वृद्धिर्भवति । अस्य धातोर्वृद्धिप्राप्तिरेव नास्ति । तत्राह । णित्वविधानसामर्थ्यात् । अनुपधाभूतस्यातोऽकारस्य वृद्धिः । खसे चपा झसानाम् । अस्कान्त्सीत् । इरितो वा । अनेनास्य वा ङप्रत्ययो भवति । नोलोपः । अस्कदत् । तॄ प्लवनतरणयोः । गुणः । तरति । अन्यानि मूले सन्ति । लिट्लकारे । ततार । ऋत्संयोगात् । अनेनाकित्त्वाद

गुणः। तृफलभजत्रपाम्। अनेनाभ्यासलोपपूर्वलोपौ अथवः। तेरतुः। तृ आदित्ति स्थिते सूत्रम्।

ऋत इर्।

ऋकारस्य इर् भवति किति ङिति च परे। तीर्विद्वे। तीर्यात्।

ऋत इर्। ऋतः (ष० ए०) इर् (प्र० ए०) ऋकारस्य किति ङिति च परे इर् भवति। तीर्विद्वे। अनेन दीर्घः। तीर्यात्। 'सद् इट् सा' इति स्थिते सूत्रम्।

ईटो ग्रहाम्।

ग्रहादीनामिट ईकारो भवति। तरीता-तरिता, तरीष्यति-तरिष्यति, अतरीष्यत्-अतरिष्यत्। अतारीत् अतारिष्टाम् अतारिषुः।

ईटो ग्रहाम्। ई (प्र० ए०) इटः (ष० ए०) ग्रहाम्। (ष० ब०) ग्रहादीनां धातूनामिट ईकारो भवति न तु याटी ऋङ् वृङ् ऋदन्तानां वा भवति। अनेनाभ्यासेट ईकारो भवति। तरीता। तरिता। अन्यानि मूले सन्ति। अतारीत्। अतारिष्टाम्। अतारिषुः। अवेट ईकारे प्राप्ते सूत्रम्।

वृद्धिहेतौ साविटो न दीर्घो वाच्यः।

रञ्ज् रागे। उभयपदी।

वृद्धिहेतौ०। वृद्धिहेतौ सौ परे इटो दीर्घो न वाच्यः। अनेन लुङ्लकारे दीर्घाभावः। रञ्ज् रागे। उभयपदी।

अपि रञ्जदंशषञ्जष्वञ्जाम्।

एषामनुस्वारस्य लोपो भवति अपि परे। रजति, रजते, रजेत्, रजेत, रजतु, रजताम्, अरजत्, अरजत। ररञ्ज ररञ्जतुः ररञ्जुः। ररञ्जिथ-ररङ्क्थ ररञ्जथुः ररञ्ज। ररञ्जे, रज्यात्, रंक्षीष्ट, रङ्क्ता, रंक्ष्यति, रंक्ष्यते, अरंक्ष्यत्, अरंक्ष्यत,

अरांक्षीत्। चोः कुः। खसे चपा०। षत्वम्। अरा-ङ्क्ताम् अरांक्षुः। अरङ्क्त अरंक्षाताम् अरंक्षत। दंश दशने। दशति, दशेत्, दशतु, अदशत्। ददंश ददंशतुः ददंशुः। ददंशिथ-ददंष्ठ ददंशथुः। दश्यात्। ष्टुत्वम्। दंष्टा, दंक्ष्यति, अदंक्ष्यत्। णित्वे। णिस्वावृद्धिः। षढोः कः सि। अदांक्षीत्। षञ्ज् सङ्गे। सजति, सजेत्, सजतु, असजत्, ससञ्ज, ससञ्जिथ ससङ्क्थ, सज्यात्, सङ्क्ता, संक्ष्यति, असंक्ष्यत्। असांक्षीत् असांक्ताम् असांक्षुः। कित् रोगापनयने संशये च।

अपि रञ्जदंशषञ्जष्वञ्जाम्। अपि (स० ए०) रञ्जदंशषञ्जष्वञ्जां (ष० ब०) रञ्जदंशषञ्जष्वञ्ज एषां धातूनामनुस्वारस्य लोपो भवति अपि परे। अनेनास्यानु-स्वारस्य लोपो भवति। रजति। रजते। अन्यानि सूत्रे लिखितानि सन्ति। लिट्लकारे ररञ्ज। अकित्त्वादनुस्वारस्य लोपो न भवति। ररञ्जतुः। अत्वतः। ररञ्जिथ। ररञ्ज् थप् इति स्थिते चोः कुः। खसे चपा झसानाम्। ररङ्क्थ। आत्मनेपदे। ररञ्जे। नोर्लोपः। रज्यात्। चोः कुः। खसे चपा झसानां रंक्षीष्ट। अरांक्षीत्। झसात्। चोः कुः। खसे। अरांक्ताम्। अरांक्षुः। आत्मनेपदे। अरंक्त। अरंक्षातां अरंक्षत। दंश्। दशने। 'अपि रञ्जदंश०' अनेनास्यापि लोपो भवत्यनुस्वारस्य। दशति। ददंश। ददंशतुः। अत्वतः। ददंशिथ। इडभावे। ददंश् थप् इति जाते। कृशषराजादेः षः। अनेन षकारः। ष्टुभिः ष्टुः। ददंष्ठ। नो लोपः। दश्यात्। दंष्टा। षढोः कः सि। दंक्ष्यति। णित्वे। अनेन वृद्धिः। षढोः कः सि। अदांक्षीत्। षञ्ज सङ्गे। आदेः ष्णः स्नः अनेन षस्य सः पूर्ववत्तिबादयः। सजति लिट्लकारे ससञ्ज। अत्वतः। अनेनास्य वेट् ससंजिथ। इडभावे। ससञ्ज् थप् इति जाते। चोः कुः। खसे चपा झसानाम्। ससंक्थ। नोर्लोपः। सज्यात्। संज् ता इति स्थिते। चोः कुः। खसे चपा झसानाम्। खरहीनं०। सङ्क्ता। संज् स्यप् तिप् इति स्थिते चोः कुः। खसे षढोः कः सि। क्षित्वात्०। कपयोगे।

संस्यति। असंस्यत्। साविट:। असावीत्। कसात्। असां सां असांसु:। किस् रोगापनयने संशये च।

## गुप्भ्य:।

गुप् तिज् कित् मान् बध् दान् शान् एभ्य: स्वार्थे स: प्रत्ययो भवति। धातोश्च द्वित्वम्। कुहोश्चु:। गुप्तिज्-किद्भ्य: क्षमानिन्दाक्षमारोगापनयनेषु स:। तेन गोपति तेजति केतति। स धातु:। गुबादिभ्य: सस्येण्नेष्यते।

गुप्भ्य:। गुप्भ्य:। (पं० ब०) गुप् तिज् कित् मान् बध् दान् शान् इत्यादिभ्यो धातुभ्य: स्वार्थे। धात्वर्थे एव। इगर्थं विनैव दशस्वपि लकारेषु क्ष्ति च सप्रत्ययो भवति तत्सन्नियोगे। द्वित्वं। अनिर्दिष्टार्था: प्रत्यया: स्वार्थे एव भवन्ति। गुप् तिज् किद्भ्य: क्षमात् निन्दाक्षमारोगापनयनेषु स: प्रत्ययो भवति। तेन गोपति। तेजति। केतति। इत्यत्र पूर्वोक्तसूत्रेण सप्रत्ययो धातो: द्वित्वं च भवति। तदा कि कित् स इति जाते चो: कु: अनेन कस्य च:। चिकित् स इति जाते। 'सेसत्' अनेनेटि प्राप्ते। गुपादिभ्यो धातुभ्य: सस्य इट् न इष्यते आचार्यै:। अनेन इट्निषेध:। उपधाया लघो:। अनेन गुणे प्राप्ते।

## नानिटि से।

इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति। तिप्। चिकित्सति चिकित्सेत् चिकित्सतु अचिकित्सत्। चिकित्सांचकार चिकित्सामास चिकित्सांबभूव। चिकित्स्यात् चिकित्सिता चिकित्सिष्यति अचिकित्सिष्यत् अचिकित्सीत् अचिकित्सिष्टाम्। पत्लृ पतने। पतति, पतेत्, पततु अपतत्। पपात पेततु: पेतु:। पत्यात् पतिता पतिष्यति अपतिष्यत्। लित्पुषाद्यङि:।

नानिटि से। ना (प्र० ए०) अनिटि (स० ए०) से (स० ए०) इड्व-

ञिते सप्रत्यये परे धातोर्गुणो न भवति अनेन गुणाभावः। चिकित्स इति जाते 'सधातुः' अनेन धातुत्वात् तिबादयः। चिकित्स् तिप् इति स्थिते। अप् कर्त्तरि। अदे। चिकित्सति। अन्यानि मूले सन्ति। लिट् लकारे कासादिप्रत्ययादाम्। चिकित्सांचकार। अन्ये द्वे मूले स्तः। चिकित्स्यात्। लुङ् लकारे। अचिकित्सीत्। अचिकित्सिष्टाम्। पत्ऌ पतने। पूर्ववत् तिबादयः। पतति। लिट् लकारे। अत उपधायाः। पपात। लोपः पचां किल्ये। पेततुः। पतिता। लुङ् लकारे 'लित् पुषादिर्ङः' अनेन ङः प्रत्ययो भवति। अपत् ङ दिप् इति जाते सूत्रम्।

## पतेर्ङे पुगागमो वाच्यः।

**अपप्तत्। भ्रमु चलने।**

पतेर्ङे। पतेर्धातोः ङप्रत्यये परे पुगागमो वाच्यः किच्चादन्ते स्वरद्दीर्घं०। अपप्तत्। अपप्तताम्। भ्रमु चलने।

## शमां दीर्घः।

**शमादीनां दीर्घो भवति यकारे परे। शम् दम् श्रम् भ्रम् चम् क्रम् मद् एते शमादयः। भ्राम्यति भ्रमति, भ्राम्येत् भ्रमेत्, भ्राम्यतु-भ्रमतु, अभ्राम्यत्-अभ्रमत्-बभ्राम।**

शमां दीर्घः। शमां (प० ब०) दीर्घः (प्र० ए०) द्विपदं सूत्रम्। शमादीनां धातूनां दीर्घो भवति। यकारे परे। शमादयो मूले उक्ताः। भ्रम् तिप् इति स्थिते 'भ्रमुभ्रम' अनेन यः प्रत्ययः। भ्रम् य तिप् इति जाते 'शमां दीर्घः।' अनेन दीर्घः। भ्राम्यति। यप्रत्ययाभावे दीर्घाभावः। भ्रमति। अन्यानि मूले सन्ति। लिट् लकारे। अत उपधायाः। अनेन वृद्धिः। फणानां। बभ्राम।

## फणादीनामेत्वपूर्वलोपौ वा वाच्यौ।

**फणतिभ्राजिराजौ च भ्राजिभ्लाशौ स्वमिस्वनौ।**

भ्रमित्वसी ... र्थ्यंतिस्त्र दर्शते तु फणादयः ॥

भ्रेमतुः बभ्रमतुः भ्रेमुः बभ्रमुः । भ्रेमिथ-बभ्रमिथ, भ्रम्यात्, भ्रमिता, भ्रमिष्यति, अभ्रमिष्यत्, अभ्रमीत् । टु वम् उद्गिरणे । टु इत्संज्ञकः । वमति, वमेत्, वमतु, अवमत् ववाम ।

फणादीनां॰ । फणादीनां एत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वाएत्वपूर्वलोपौ । भ्रेमतुः । बभ्रमतुः । भ्रेमिथ । बभ्रमिथ । फणादयः श्लोकेनोक्ताः । भ्रम्यात् । भ्रमिता । लुङ्लकारे अभ्रमीत् । टु वम् उद्गिरणे । टु इत्संज्ञकः । वमति । लिट्लकारे 'शसददवादि॰' अनेन निषेधे प्राप्ते सूत्रम् ।

## वम एत्वपूर्वलोपौ वा वाच्यौ ।

वेमतुः-ववमतुः वेमुः-ववमुः । वम्यात्, वमिता, वमिष्यति, अवमिष्यत्, अवमीत् । फण गतौ । फणति, फणेत्, फणतु, अफणत् । पफाण फेणतुः फेणुः । फण्यात्, फणिता, फणिष्यति, अफणिष्यत्, अफाणीत् अफणीत् । स्वनस्यमू शब्दे । स्वनति, स्वनेत्, स्वनतु, अस्वनत् । सस्वान स्वेनतुः स्वेनुः । स्वन्यात्, स्वनिता, स्वनिष्यति, अस्वनिष्यत्, अस्वानीत्-अस्वनीत् । वस निवासे । वसति, वसेत्, वसतु, अवसत् । वस् णप् इति स्थिते । द्वित्वम् ।

वमः । 'वम' धातोरेत्वपूर्वलोपौ वा वक्तव्यौ । अनेन अस्य वा एत्वपूर्वलोपौ । ववाम । वेमतुः । ववमतुः । वमिता लुङ्लकारे अवमीत् । फण गतौ । फणति । लिट्लकारे । ... उपधायाः । अपानां । पफाण । फणादीनाम् । अनेन वा एत्वपूर्वलोपौ भवतः । ... । पफणतुः । पफणिथ । फेणिथ । फणिता । अफणीत् । स्वनस्यमू शब्दे । स्वनति । स्यमति । सस्वान । सस्याम । स्वनिता । स्यमिता । अस्वानीत् । अस्वनीत् । 'ह्मयादेः' अनेन वा वृद्धिः । अस्यामीत् ।

अवसीत्। वस निवासे। वसति। वस् णप् इति स्थिते विग्रे। ववम् णप् इति जाते सूत्रम्। ग्रवादौ पूर्वस्य।

## ग्रवादौ पूर्वस्य।

ग्रवादौ परे यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं भवति। यकारवकाररेफाणामिकारोकारऋकारा भवन्ति। सस्वरस्य संप्रसारणं दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः।

ग्रवादौ। (स० ए०) पूर्वस्य (ष० ए०) यजादीनां यज वप् स्वप् वह् वेञ् वप् वद् वसां श्वयतेर्ग्रहादीनां ग्रह् ज्या व्येञ् ह्वेञ् व्यध् वश् व्यच् प्रच्छ् भ्रस्ज् सयजादीनां च धातूनां पूर्वस्य द्वित्वस्य ग्रवादौ परे सम्प्रसारणं भवति। यकार-वकाररेफाणाम् इकारोकारऋकारा भवन्ति। सस्वरस्याचरस्य सम्प्रसारणं भवति। ह्रस्वस्याचरस्य ह्रस्वः। दीर्घस्याचरस्य दीर्घः।

> ग्रहिज्यावयो व्यधिर्वष्टिर्विचतिर्वृश्चतिस्तथा।
> पृच्छतिर्भृज्जतिश्चैव नवैते तु ग्रहादयः॥

## पूर्ववकारस्योत्वे।

अत उपधायाः। उवास। उवस् अतुस् इति स्थिते।

ग्रहादयः श्लोकेनोक्ताः सन्ति। अनेन पूर्वस्य वकारस्य सम्प्रसारणं जातम्। ह्रस्वत्वात् ह्रस्वः। अनेन सूत्रेण पूर्वस्य वकारस्य उकारः। तदा उवस् णप् इति जाते। अत उपधायाः। स्वरहीनं०। उवास। ववस् अतुस् इति स्थिते। ग्रवादौ पूर्वस्य अनेन पूर्वस्य सम्प्रसारणम्। उवस् अतुस् इति जाते। सूत्रम्।

## यजां यवराणां य्वृतः सम्प्रसारणं किति।

यजादीनां संप्रसारणं भवति किति परे।

यजां यवराणां य्वृतः सम्प्रसारणं किति। यजां (ष० ब०) यवराणां (ष० ब०) इश्च उश्च ऋत् च य्वृतः (प्र० ब०) सम्प्रसारणं (प्र० ए०) किति (स० ए०) पञ्चपदं सूत्रम् ग्रहादीनां तु किति ङिति च परे सम्प्रसारणं भवति।

यजादीनां तु केवले किति परे एव सम्प्रसारणं भवति। अत एव पृथक् सूत्रकरणम् यत्तु स्वप्स्यमोर्यङि सम्प्रसारणं तत्र प्रक्रियायां पृथक् सूत्रमस्ति। स्वपिस्यमिव्येञां यङि अथवा स्वप्स्येञ्ह्वयां ग्रहादिमध्ये यद् ग्रहणं तत् यङि प्रत्यये सम्प्रसारणार्थं नान्यत्र। यजादीनां धातूनां यकारवकारयोः किति परे सम्प्रसारणं भवति। यवराणामित्यत्र रकारग्रहणं ग्रहां ङ्किति। इति सम्प्रसारणसूत्रे तदर्थं ज्ञेयम्। यकारवकाररेफाणाम् इकारोकारऋकारा भवन्ति। सस्वरस्य सम्प्रसारणं भवति। ह्रस्वस्य ह्रस्वः। दीर्घस्य दीर्घः। अनेन द्वितीयस्य वकारस्य सम्प्रसारणं भवति।

यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः।
वदसौ श्वयतिर्वक्तिरेकादश यजादयः॥
सवर्णे दीर्घः सह।

यजादयस्तु मूले श्लोकेनोक्ताः। उउस् अतुस् इति स्थिते सूत्रम्।

## घसादेः षः।

घसिशासिवसीनां सस्य षो भवति षत्वनिमित्ते सति। जक्षतुः जक्षुः। उवसिथ-उवस्थ। संप्रसारणम्। षत्वम्। उष्यात्। वस्ता।

घसादेः षः। घस् आदिर्यस्य सः घसादिः तस्य घसादेः (ष० ए०) षः (प्र० ए०) किलात्परस्य। घसॢ अदने। शास् अनुशिष्टौ वस् निवासे इत्येतेषां धातूनां सकारस्य षकारो भवति। अत्र 'किलात्' इति सूत्रस्य प्राप्तिरेव नास्ति तस्मात् सूत्रं कृतम्। अनेन सस्य षः। स्वरहीनं०। जक्षतुः। जक्षुः। अवत्तः। उवसिथ। उवस्थ। यजाम्। घसादेः। उष्यात्। वस्ता। वस् स्यप् तिप् इति स्थिते सूत्रम्।

## सस्तोऽनापि।

सकारस्य तकारो भवति अनपि सकारे परे। वत्स्यति अवत्स्यत्। वृद्धिः। अवात्सीत्। भसात्। प्रत्ययलोपे

प्रत्ययलक्षणमिति न्यायात् । अवात्ताम् अवात्सुः । वद व्यक्तायां वाचि । वदति, वदेत्, वदतु, अवत् । उवाद ऊदतुः ऊदुः । उवदिथ । उद्यात्, वदिता, वदिष्यति, अवदिष्यत्, अवादीत् । टुओश्वि गतिवृद्ध्योः । टुकारौकारौ कार्यार्थौ । इर् इत्संज्ञकः । श्वयति, श्वयेत्, श्वयतु, अश्वयत् ।

सस्योऽनपि । सस्योऽनपि । सः ( ष० ए० ) तः ( प्र० ए० ) अनपि (स०ए०) त्रिपदं सूत्रम् । धातोः सकारस्यानपि विषये णवादिविभक्तिषट्कविषये सकारे परे तकारो भवति । अनेन सकारस्य तकारो भवति । वत्स्यति । अवत्स्यत् । मार्वनिटो नित्यम् । अनेन वृद्धिः । अवात्सीत् । झसात् । अस्योऽनपि । प्रत्ययलोपे० इति न्यायात् वृद्धिः । अवात्ताम् । अवात्सुः । वद व्यक्तायां वाचि । वदति । लिट् लकारे णबादौ । अनेन सम्प्रसारणम् । अत उपधायाः । अनेन वृद्धिः । उवाद । यजाम् । ऊदतुः । ऊदुः । उवदिथ । सम्प्रसारणम् । उद्यात् । वदिता लुङ्लकारे । अवादीत् । हसादेः । अवदीत् । टुओश्वीर् गतिवृद्ध्योः । टुकारौ कार्य्यार्थौ । इर् इत्संज्ञकः । पूर्ववत् तिबादयः । गुणः । एअय् । श्वयति । लिट् लकारे सूत्रम् ।

श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम् ।

ततो द्वित्वम् । शुशाव शुशुवतुः शुशुवुः । शुशविथ । संप्रसारणाभावपक्षे शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ । संप्रसारणं ये । शूयात्, श्वयिता, श्वयिष्यति, अश्वयिष्यत् ।

श्वयतेः । श्वयतेर्धातोर्णादौ परे प्रथमं सम्प्रसारणं वा वाच्यम् । अनेनास्य पूर्वं सम्प्रसारणं ततो द्वित्वम् । शुशु णप् इति जाते धातोर्नामिनः । अनेन वृद्धिः । शुशाव । शुशु अतुस् इति जाते । गुणार्तौ । अनेन वकारे प्राप्ते नानर्थ्यीवः । अनेन वक्ष्यमाणेन सूत्रेण तन्निषेधः । किंतु इय् एव भवति ।

शुशुवतुः । शुशुविथ । सम्प्रसारणाभावपक्षे धातोर्नामिनः । शिश्वाय । गुणातो: । शिश्वियतुः । गुणः । शिश्वयिथ । सम्प्रसारणं ये । शूयात् । श्वयिता । श्वयिष्यति । अश्वयिष्यत् । अश्वि इसि इट् दिप् इति जाते । णित्वे । अनेन सेर्वि-ध्यात् वृद्धेः प्राप्तौ । सूत्रम् ।

## श्वयतेः सौ वृद्ध्यभावो वाच्यः ।

अश्वयीत् अश्वयिष्टाम् अश्वयिषुः । इरितो वा ।

श्वयतेः । श्वयतेर्धातोः सौ परे वृद्ध्यभावो वाच्यः । अनेन तन्निषेधः । गुणः । इट ईटि । इत्यादिसूत्रैः अश्वयीत् इति रूपं सिद्धं भवति । अस्येरितोवानेन वा ङप्रत्ययो भवति । तदा अश्वि ङ दिप् इति जाते सूत्रम् ।

## श्वयतेरिल्लोपो ङे वक्तव्यः ।

अश्वत् ।

श्वयतेः । श्वयतेर्धातोर्ङप्रत्यये परे इकारस्य लोपो वक्तव्यः । अनेनेकारस्य लोपो भवति । अश्वत् अश्वताम् अश्वन् । अन्यदपि सूत्रम् ।

## श्वयतेर्ङे द्वित्वं वा ।

अशिश्वियत् इत्यादि ।

### इति भ्वादिषु परस्मैपदिप्रक्रिया ।

श्वयतेः । श्वयतेर्धातोः ङप्रत्यये परे द्वित्वं वा भवति । पूर्ववत् । गुणातो: । अशिश्वियत् । अशिश्वियताम् । अशिश्वियन् । इत्यादीनि रूपाणि ज्ञातव्यानि । इति भ्वादिगणस्य परस्मैपदिप्रक्रिया कथिता । अथात्मनेपदिप्रक्रिया कथ्यते ।

---

# अथ भ्वादिषु आत्मनेपदिप्रक्रिया ।

एध वृद्धौ । एधते, एधेत, एधताम्, ऐधत । काशादि-

प्रत्ययादाम्। एधांचक्रे। आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृञ आत्मनेपदं भ्वसोर्नात्मनेपदम्। एधामास एधांबभूवविधानसामर्थ्यादस्तेर्भूभावो न। इट्। एधिषीष्ट एधिता एधिष्यते ऐधिष्यत ऐधिष्ट ऐधिषाताम्। ईक्ष दर्शनाङ्कनयोः। ईक्षते, ईक्षेत, ईक्षताम्, ऐक्षत, ईक्षांचक्रे, ईक्षिषीष्ट, ईक्षिता, ईक्षिष्यते, ऐक्षिष्यत, ऐक्षिष्ट। दद दाने। ददते, ददेत, ददताम्, अददत, शसदद्वा० इति नैत्वपूर्वलोपौ। ददद्रे ददद्राते ददद्रिरे। ददिषीष्ट, ददिता, ददिष्यते, अददिष्यत, अददिष्ट। ष्वष्क गतौ। नामधातु० अनेन सत्वाभावः। ष्वष्कते, ष्वष्केत, ष्वष्कताम्, अष्वष्कत, षष्वष्के, ष्वष्किषीष्ट, ष्वष्किता, ष्वष्किष्यते, अष्वष्किष्यत, अष्वष्किष्ट अष्वष्किषाताम्। ऋज गतौ स्थैर्य्ये स्पर्शे च। उपधाया लघोः। अर्जते, अर्जेत, अर्जताम्, आर्जत। नुगशाम्। आश्वीर्वादी। आनृजे, अर्जिषीष्टि, अर्जिता, अर्जिष्यते, आर्जिष्यत, आर्जिष्ट। ष्वञ्ज परिष्वञ्जने। सत्वम्। अपिरञ्जदंशषञ्जष्वञ्जाम्। स्वजते, स्वजेत, स्वजताम्, अस्वजत। सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे।

एध वृद्धौ। एध अयं धातुर्वृद्ध्यर्थे। एध इत्यत्राकारोऽनुदात्तस्ततोऽयं धातुरनुदात्तेत्। तेनात्मनेपदी। तदेव ग्रन्थकार आह। अकार आत्मनेपदार्थः। तत्तस्मात्कारणाद्विभक्तिचतुष्टयेऽपि पराणि ते आते अन्ते। तथा ईत ईयातां ईरन्। ताम् आताम् अन्ताम्। तत् आताम् अन्त इत्यादीनि वचनानि योज्यानि तत्र वर्त्तमानात्मनेपदे प्रक्रिया लिख्यते। अवादिप्रयोगः। अप्कर्त्तरीत्यादिकार्य्यं पूर्ववत्। सर्वत्राप्कर्त्त०। स्वर०। एधते। एवं द्विवचने एध् आते इति स्थिते। अप्कर्त्तरि। आदार्थ०। एधेते। बहुवचनेऽदे इत्यकारलोपः। स्वर०

एधन्ते। एधसे। द्विवचने। आदाथइ: इतीकार: अइए एधेथे। एधध्वे उत्तमपुरुषैकवचने अटे। एधे द्वित्वबहुत्वे व्मोरा एधावहे। एधामहे। अधीदाह० धर्मादिति। अद: समीपवर्त्ति राज्यं धर्मात् एधते वर्द्धते। इति वर्त्तमानप्रक्रिया। विधिसम्भावनयो: इत्यादीनि वचनानि योज्यानि। सर्वत्राप्कर्त्तरि। स्वर०। अइए। एधेत एधेयाताम् एधेरन् इत्यादीनि रूपाणि। साधु: श्रीमन्तो मनुष्यो धर्मतोधर्मात् एधेत इति विधि:। आशी: प्रेरणयो: ताम् आताम् अन्ताम् इत्यादयो नव प्रत्यया:। अपकर्त्तरि। आतान् आथाम् इत्यत्र आदाथइ: अइए। अन्तामित्यत्र अटे। स्वरहीनं। मध्यमपुरुषद्विवचने। आदाथइ:। अइए। एकत्वद्वित्वयोरविशेष:। उत्तमपुरुषैकवचने एऐऐ। एधै। द्वित्वबहुत्वयो: यावर्णे। एधताम्। एधेताम्। इत्यादीनि उदाहरणानि ज्ञेयानि। तथायुरेधताम्। अथानद्यतने एध्धातोस्तनादीनि नव वचनानि योज्यानि। सर्वत्राप्कर्त्तरि। दिबादावट्। अनेन प्राक् अडागम:। स्वरादे:। अनेन द्वितीयोऽडागमो भवति। अइए। एऐऐ। ऐधत। ऐधेताम्। ऐधन्त। कासादिप्रत्ययादाम्। अनेनाम्। एधांचक्रे। आम्प्रत्ययो यस्माद्धातोर्विहित: स धातुश्चेत् आत्मनेपदी तर्हि अनुप्रयुक्तस्य कृधातोरात्मनेपदं भवति अस्भ्वोर्धात्वोरात्मनेपदं न भवति। अनेन व्याख्यानेन अस्भ्वोर्यदानुप्रयोगस्तदात्मनेपदिनोऽपि धातो: परस्मैपदं भवति। एधामास। एधांबभूव। अनुप्रयोगविधानसामर्थ्यादस्तेर्धातोर्भूभावो न भवति। एधिषीष्ट। अन्यानि मूले सन्ति। पूर्वोक्तैरेव सूत्रै: सिध्यन्ति। लुङ्लकारे। एध् सि तन् इति जाते। सिस्तता। अनेनेट्। दिबादावट्। स्वरादे:। ऐधिस्तन् इति जाते। क्विलात्०। ष्टुभि:ष्टु:। ततोनकारो०। ऐधिष्ट। ऐधिषाताम्। ऐधिषत। ईक्ष दर्शनाङ्कनयो:। ईक्षधातुर्दर्शनार्थे अङ्कनार्थे वा अङ्कनं परीक्षणम्। अत्रापि अकार आत्मनेपदार्थ:। तेन विभक्तिचतुष्टयेऽपि आत्मनेपदानि प्रयोज्यानि। सर्वत्र चतुर्लकारेऽप्कर्त्तरि। अनेनाप्प्रत्ययो भवति। एधतिवत् प्रक्रिया। लघूपधत्वाभावात् गुणो न भवति। ईक्षते। ईक्षेत। ईक्षताम्। दिबादावट्। स्वरादे:। अइए। एऐऐ। ऐक्षत। कासादिप्र०। ईक्षांचक्रे। ईक्षामास। ईक्षांबभूव। ईक्षिषीष्ट। ईक्षिता। अन्यानि मूले लिखितानि तानि सुगमान्येवातो व्याख्यानं न कृतम्। लुङ्लकारे। ऐक्षिष्ट। ऐक्षिषाताम्। ऐक्षिषत। दद दाने। अत्राप्यकार आत्मनेपदार्थ:। ददते। ददेत। ददताम्। अददत। लोप:। अनेनैत्वपूर्वलोपे प्राप्ते अस-

इदवादि०। अनेन तन्निषेधः। ददते। ददिषीष्ट। ददिता। लुङ्। अददिष्ट। अददिषाताम्। अददिषत। सुगमोऽयं धातुः। ष्वष्क गतौ। नामधातुः। अनेन सत्वाभावः। ष्वष्कते। पूर्वस्य हलादिः। षष्वष्के। षष्वष्काते। षष्वष्किरे। ष्वष्किषीष्ट। ष्वष्किता। लुङ्लकारे। अष्वष्किष्ट। अष्वष्किषाताम्। अष्वष्किषत। ऋज् गतौ स्थैर्ये स्पर्शे च अकार आत्मनेपदार्थः पूर्ववत् तिबादयः। उपधायाः। अनेन गुणः। अर्जते। अर्जेत। अर्जताम्। स्वरादेः। आर्जत। ऋज् अप् इति स्थिते। द्विश्च। रः। नुगमास् अनेन पूर्वस्य नुगागमो भवति। आश्वीर्वादो। स्वरद्दीनम्। आनृजे। आनृजाते। आनृजिरे। अर्जिषीष्ट। अर्जिता। स्वरादेः। आर्जिष्ट। आर्जिषाताम्। आर्जिषत। ष्वञ्ज परिष्वङ्गे। आदेः षः सः। अनेन सत्वम्। अपिरञ्ज०। अनेनानुस्वारस्य लोपः। स्वजते। स्वजेत। स्वजताम्। अस्वजत। द्विश्च। सस्वञ्जे। सस्वञ्जाते। सस्वञ्जिरे।

## स्वजतेर्णादौ वा कित्त्वम्।

सस्वजे सस्वजाते सस्वजिरे। चोः कुः। खसे चपा। धत्वम्। कषसंयोगे क्षः। स्वंक्षीष्ट, स्वंक्ता, स्वंक्ष्यते, अस्वंक्ष्यत। झसात्। अस्वंक्त, अस्वंक्षाताम् अस्वंक्षत। अस्वंक्थाः। त्रपूष् लज्जायाम्। ऊकारषकारौ कार्यार्थौ। त्रपते, त्रपेत, त्रपताम्, अत्रपत। तृफलभजत्रपाम्। इत्येत्वपूर्वलोपौ। त्रेपे त्रेपाते त्रेपिरे। ऊदितो वा। त्रपिषीष्ट-त्रप्सीष्ट, त्रपिता, त्रप्ता, त्रपिष्यते-त्रप्स्यते, अत्रपिष्यत-अत्रप्स्यत। अत्रपिष्ट अत्रपिषाताम् अत्रपिषत। अत्रप्त। तिज् निशाने क्षमायां च। गुप्तिज्किद्भ्यः सन्। तितिक्षते, तितिक्षेत, तितिक्षताम्, अतितिक्षत। तितिक्षांचक्रे, तितिक्षाम्बभूव, तितिक्षामास, तितिक्षिषीष्ट, तितिक्षिता, तितिक्षिष्यते, अतितिक्षिष्यत-अतितिक्षिष्ट। गुप गोपन-

**कुत्सनयोः। जुगुप्सते जुगुप्सेत, जुगुप्सताम्, अजुगुप्सत, जुगुप्साञ्चक्रे, जुगुप्साम्बभूव, जुगुप्सामास, जुगुप्सिषीष्ट, जुगुप्सिता, जुगुप्सिष्यते, अजुगुप्सिष्यत, अजुगुप्सिष्ट। मान विचारणे। द्वित्वम्। ह्रस्वः।**

स्वजतेः। स्वजतेर्धातोर्णादौ वा कित्त्वं वाच्यम्। कित्त्वान्नो लोपः। अनेनैवानुस्वारस्य लोपो भवति। सस्वजे। सस्वजाते। सस्वजिरे। स्वज् सीष्ट इति स्थिते चोः कुः। अनेन जकारस्य गकारः। खसे०। अनेन गस्य कः। क्विलात्। अनेन सस्य षः। कषसं०। स्वङ्क्षीष्ट। चोः कुः। खसे०। अनेन गस्य कः। स्वरहीनं०। स्वङ्क्ता। स्वङ्क्ष्यते। अस्वङ्क्ष्यत। झसात्। अनेन सेर्लोपः। अस्वङ्क्त। त्रपूष् लज्जायाम्। ऊकारषकारौ कार्य्यार्थौ। पूर्ववत्त आदयः। त्रपते। लिट्लकारे त्रत्रप् थप् इति स्थिते तृफलभजत्रपाम्। अनेनैत्वपूर्वलोपौ भवतः। त्रेपे। त्रेपाते। त्रेपिरे। अस्य धातोरूदितो वानेनेड्विकल्पो भवति। त्रपिषीष्ट। त्रप्सीष्ट। लुङ्लकारे। अत्रपिष्ट। इडभावे झसात्० अनेन सेर्लोपो भवति। तदा अत्रप्त। अत्रप्साताम्। अत्रप्सत। तिज् निशाने क्षमायां च। निशानं तीक्ष्णीकरणम् इति सिद्धान्तकौमुद्यामुक्तम्। गुप्तिज्भ्यः। अनेन स्वार्थे सप्रत्ययो भवति धातोर्द्वित्वञ्च। तितिज् स् अप् ते इति जाते। चोः कुः। अनेन जस्य गः। खसे चपा अनेन गस्य कः। क्विलात्। कषसं०। अटे। अनेनाकारस्य लोपो भवति। स्वरहीनं०। तितिक्षते। तितिक्षेत। तितिक्षताम्। अतितिक्षत। लिट्लकारे कासादिप्रत्ययादाम्। अनेनाम्प्रत्ययो भवति। तितिक्षाञ्चक्रे। आम्प्रत्ययो यस्मात्। अनेन व्याख्यानेन भ्वस्योरनुप्रयोगे सति। आत्मनेपदं भवति। तेन तितिक्षाम्बभूव। तितिक्षामास। अन्यानि मूलि सन्ति। तानि सुगमान्येव। लुङ्लकारे। अतितिक्षिष्ट। गुप गोपनकुत्सनयोः। गुप्तिज्भ्यः। अनेनास्य धातोरपि सप्रत्ययो भवति। धातोर्द्वित्वं च। तदा। गुगुप् स इति जाते। कुहोश्चुः। अनेन गस्य जः। जुगुप् स इति जाते। 'स धातुः' अनेन धातुत्वात् त आदयः प्रत्यया भवन्ति। तदा जुगुप्सते इति जाते। अप् कर्त्तरि। अटे। जुगुप्सते। लिट्लकारे। जुगुप्साञ्चक्रे। जुगुप्सामास। जुगुप्साम्बभूव। लुङ्लकारे अजुगुप्सिष्ट। अजुगुप्सिषाताम्। अजुगुप्सिषत। अन्येषां लकाराणां

रूपाणि सूत्रे सन्ति तस्मात् न लिखितानि। मान विचारणे। अकार इत् आत्मनेपदार्थः। गुप्‌भ्यः अनेन सन्दिले भवतः। ह्रस्वः। 'म मान् स' इति जाते। सूत्रम्।

## इः से ।

पूर्वस्याकारस्येकारो भवति से परे ।

इः से। इ ( प्र० ए० )। अः ( ष० ए० ) से ( स० ए० ) धातोः पूर्वस्य अकारस्य इकारो भवति सप्रत्यये परे। अनेनाकारस्य इकारः। तदा। मिमान् स इति जाते। सूत्रम्।

## मानादीनां पूर्वस्य दीर्घो वक्तव्यः ।

मीमांसते, मीमांसेत, मीमांसताम्, अमीमांसत, मीमांसाञ्चक्रे, मीमांसामास, मीमांसाम्बभूव, मीमांसिषीष्ट, मीमांसिता, मीमांसिष्यते, अमीमांसिष्यत अमीमांसिष्ट। वध निन्दायाम्। आदिजबानाम्। बीभत्सते, बीभत्सेत, बीभत्सताम्, अबीभत्सत, बीभत्साञ्चक्रे, बीभत्सिषीष्ट, बीभत्सिता, बीभत्सिष्यते, अबीभत्सिष्यत, अबीभत्सिष्ट। पण व्यवहारे स्तुतौ च। पन च। आयः। पणायते, पणायेत, पणायताम्, अपणायत, पणायाञ्चक्रे। आयाभावपक्षे। पेणे पेणाते पेणिरे। पणायिषीष्ट-पणिषीष्ट। पणायिता-पणिता पणायिष्यते-पणिष्यते अपणायिष्यत-अपणिष्यत अपणायिष्ट-अपणिष्ट। एवं पन च। क्रमु कान्तौ।

मानादीनाम्। मान् वध् दान् शान् इत्येतेषां धातूनां पूर्वस्य सप्रत्यये परे दीर्घो वक्तव्यः। अनेन पूर्वस्येकारस्य दीर्घः। स धातुः। अप् कर्त्तरि। नश्चाप-

दात्ते। मीमांसते। लिट् लकारे। मीमांसाञ्चक्रे। लुङ्लकारे। अमीमांसिष्ट। इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। पिष्टपेषणैः किं प्रयोजनम्। बध निन्दायाम्। अकार उभयपदार्थः। गुप्भ्यः। आदिजबानाम्। यः से। मानादीनाम्। स धातुः। अप्कर्त्तरि। अदे। खसे चपा०। बीभत्सते। लिट्लकारे। बीभत्साञ्चक्रे। अन्यानि सूत्रे सन्ति। लुङ्लकारे। अबीभत्सिष्ट। पण व्यवहारे स्तुतौ च। आयः। धूपिपाणिभ्यां आयः प्रत्ययो भवति। स धातुः। अप्कर्त्तरि। सवर्णे दीर्घः सह। पणायते। पणायेत। पणायताम्। अपणायत। पणायाञ्चक्रे। आयप्रत्ययोऽनपि वा भवति। सूत्रोक्तत्वात्। आयाभावपक्षे। लोपः पचाम् अनेकासंयुक्तपूर्वलोपौ। पेणे। पेणाते। पेणिरे। पणाय इट् सीष्ट इति जाते। यतः। स्वरहीनं०। क्लित्वात्। पणायिषीष्ट। आयाभावपक्षे। पणिषीष्ट। पणायिता। पणिता। लुङ्लकारे। अपणायिष्ट। अपणिष्ट। एवं पनधातोरपि रूपाणि ज्ञेयानि। कमु कान्तौ। कान्तिरत्र इच्छा। उकार इत् आत्मनेपदार्थः।

**कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः।**

**अनपि तु वा वृद्धिः।**

**स धातुः। अप्गुणौ। अयादेशः। कामयते, कामयेत, कामयताम्, अकामयत, कामयाञ्चक्रे-चकमे, कामयिषीष्ट-कमिषीष्ट, कामयिता-कमिता, कामयिष्यते-कमिष्यते, अकामयिष्यत अकमिष्यत, अकामित त् इति स्थिते।**

कमेः। कमेर्धातोः स्वार्थे ञिः प्रत्ययो वक्तव्यः। अनपि तु वा वक्तव्यः। कम् ञि इति जाते। अत उपधायाः। अनेन वृद्धिः। स धातुः। ञकारो ञित्कार्य्यार्थः। अप्कर्त्तरि। गुणः। एअय्। कामयते। कामयेत। कामयताम्। अकामयत। कामयाञ्चक्रे। ञेरभावपक्षे चकमे। कामयिषीष्ट। कमिषीष्ट। कामयिता। कमिता। अन्यानि सूत्रे सन्ति। लुङ्लकारे। अकामि तत् इति स्थिते।

## ञेरङ् द्विश्च ।

**ञ्यन्ताद्धातोर्भूतेऽर्थे अङ्प्रत्ययो भवति दिबादौ परतः। सेरपवादः । धातोश्च द्वित्वम् ।**

ञेरङ् द्विश्च । इद सूत्रम् । ञे: ( पं० ए० ) अङ् ( प्र० ए० ) द्वि: (प्र०ए०) च ( प्र० ए० ) चतुःपद सूत्रम् । ञिप्रत्ययान्ताद्धातोर्भूतमात्रेऽतीते काले सिविषये दिबादौ परे अङ्प्रत्ययो भवति । सेरपवादो धातो: द्वित्वं भवति । चकारात् श्रिद्रुस्रुभ्यो ञिप्रत्ययाभावेऽपि अङ् द्वित्व च ।

## ञेः ।

**इडागमवर्जिते अनपि विषये ञेर्लोपो भवति । ह्रस्वः ।**

ञे: । ञे: ( प० ए० ) इडागमवर्जिते अनपि विषये ञिप्रत्ययस्य लोपो भवति । तदा । अ का काम इति स्थिते ह्रस्वः । कुहोश्चुः । तदा । अचकाम् तन् इति जाते सूत्रम् ।

## अङि लघौ ह्रस्व उपधायाः ।

**अङि सत्युपधाया ह्रस्वो भवति पूर्वसम्बन्धिनोऽकारस्ये-कारो भवति लघुनि धात्वक्षरे परे ।**

अङि लघौ ह्रस्व उपधायाः । अङि । ( स० ए० ) लघौ । ( स० ए० ) ह्रस्वः ( प्र० ए० ) उपधायाः ( प० ए० ) अङि प्रत्यये सति । धातो: लघौ परे पूर्वसम्बन्धिनोऽकारस्य इकारो भवति । दीर्घाद्धातोरुपधाया ह्रस्वोऽपि भवति । अनेन अकारस्य इकारः । उपधाया ह्रस्वः । तदा अचिकम् अङ् तन् । इति जाते । सूत्रम् ।

## लघोर्दीर्घः ।

**अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि**

धात्वचरे परे। अचीकमत अचीकमेताम् अचीकमन्त। ञेरभावपक्षे।

लघोर्दीर्घः। लघोः। (ष० ए०) दीर्घः। (प्र० ए०) ञ्चि सति। इस्मादेर्लघोः। पूर्वस्य दीर्घो भवति लघुनि धात्वचरे परे सति। अनेनेकारस्य दीर्घः ङकारः तनो नकारः। स्वरहीन०। अचीकमत। अचीकमेताम्। अचीकमन्त। ञेरभावपक्षे सूत्रम्।

## कमेरङ् द्वित्वे वाच्ये।

अग्लत्वाभावान्न दीर्घकारी। अचकमत। अय गतौ। अयते, अयेत, अयताम्, आयत।

कमेः। कमेर्धातोरङ्प्रत्ययद्वित्वे वाच्ये। अनेनाङ्प्रत्ययः। द्वित्वं च भवति। अग्लत्वाभावात् न दीर्घकारी। अचकमत। अचकमेताम्। अचकमन्त। इत्यादीनि रूपाणि ज्ञेयानि। अय गतौ। पूर्ववत् ते आदयः प्रत्यया भवन्ति। अयते। यदायं धातुः परापूर्वः स्यात्तदा वक्ष्यमाणेन सूत्रेण लत्वं भवति।

## परापूर्वे अयतावुपसर्गरेफस्य लत्वं वाच्यम्।

पलायते, पलायेत, पलायताम्, अपलायत, अयांचक्रे, अयामास, अयाम्बभूव, अयिषीष्ट, अयिता, अयिष्यते, आयिष्यत। आयिष्ट, आयिषाताम्, आयिषत। आयिढ्वं-आयिध्वम्। दयदानगतिहिंसादानेषु। दयते। अयतिवत् प्रक्रिया। घट चेष्टायाम्। घटते, घटेत, घटताम्, अघटत। कुहोश्चुः। जघटे, घटिषीष्ट, घटिता, घटिष्यते, अघटिष्यत, अघटिष्ट। ईह चेष्टायाम्। ईहते, ईहेत, ईहताम्, ऐहत, ईहाञ्चक्रे, ईहिषीष्ट ईहिता, ईहिष्यते, ऐहिष्यत, ऐहिष्ट। काशृङ् दीप्तौ। काशते, काशेत,

काशताम्, अकाशत । विददरिद्रा० काशाञ्चक्रे चकाशे, काशिषीष्ट, काशिता, काशिष्यते, अकाशिष्यत, अकाशिष्ट। कासृ शब्दकुत्सायाम् । कासते, कासेत, कासताम्, अकासत, कासाञ्चक्रे, चकासे, कासिषीष्ट, कासिता, कासिष्यते, अकासिष्यत, अकासिष्ट । षिवृ सेवने । सत्वम् । सेवते, सेवेत, सेवताम्, असेवत, सिषेवे, सिषेवाते, सेविषीष्ट, सेविता, सेविष्यते, असेविष्यत, असेविष्ट । गाङ् गतौ । सवर्णदीर्घे कृते । आकारत्वादातोऽन्तो दनतः । गाते गाते गाते । गेत, गाताम्, अगात । जगे, जगाते, जगिरे । गासीष्ट, गाता, गास्यते, अगास्यत, अगास्त, अगासाताम् । रुङ् गतौ भाषणे च । गुणः । रवते, रवेत, रवताम्, अरवत अरवेताम् । अनेकस्वरत्वादसंयोगपूर्वत्वाच्चोकारस्य वत्वे प्राप्ते ।

अयतौ । अयतौ धातौ परे उपसर्गरेफस्य लत्वं वाच्यम् । अनेन रकारस्य लकारः । तदा पलायते इति रूपं सिद्धम् । लिट्लकारे कासादिप्रत्ययादाम् अनेनाम् प्रत्ययो भवति । अयाञ्चक्रे । द्वे मूले स्तः । अयिषीष्ट । लुङ्लकारे । आयिष्ट । दय दानगतिहिंसादानेषु । अत्रापि धातोरयतिवत् रूपाणि ज्ञेयानि । घट चेष्टायाम् पूर्ववत् त आदयः । घटते । लिट्लकारे । कुहोश्चुः । अनेन घस्य झः । जघटे । जघटाते । जघटिरे । घटिषीष्ट । लुङ्लकारे । अघटिष्ट । ईह चेष्टायाम् । दीर्घोपधत्वात् न गुणः । ईहते । लुङ्लकारे आरादेः । ऐहत । लिट्लकारे । 'कासादि०' अनेनाम् । ईहाञ्चक्रे । ईहिषीष्ट । लुङ्लकारे । ऐहिष्ट । काशृङ् दीप्तौ । उकारङकारौ इतौ । काशते । लिट्लकारे । 'विददरिद्रा' अनेनात्र आम् प्रत्ययो भवति । काशाञ्चक्रे । आमभावे । कुहोश्चुः । ह्रस्वः । चकाशे । काशिषीष्ट । लुङ्लकारे । अकाशिष्ट । कासृ शब्दकुत्सायाम् । ऋकार इत् । पूर्ववत् त आदयः । कासते ।

लिट्लकारे कासादिप्रत्ययादाम्। अनेन नित्ये प्राप्ते विदद्‌रिद्रा० अनेन वा
त। कासाञ्चक्रे। आमभावे चकासे। कासिषीष्ट। कासिता। लुङ्लकारे।
अकासिष्ट। षिवु सेवने। 'आदेः ष्णः स्नः' अनेन सत्वम्। ऋकार इत् सेवते।
लिट्लकारे। सिषेवे। सिषेवाते। सिषेविरे। सेविषीष्ट। लुङ्लकारे।
असेविष्ट। गाङ् गतौ। ङकार आत्मनेपदार्थः। पूर्ववत् त आदयः। सवर्णे०।
गाते। गाते। आकारान्तत्वात्। 'अतोऽन्तोऽदनतः' अनेन अन्ते प्रत्ययस्य अते
भवति। सवर्णे०। गाते। गासे। गाथे। इत्यादीनि। अद्गए। गेत।
गाताम्। गाताम्। अगात अगाताम्। अगात। गा णप् इति स्थिते।
द्वित्व। ह्रस्वः। कुहोश्चुः। आतोऽनपि। जगे। जगाते। जगिरे। गासीष्ट।
गाता। गास्यति। लुङ्लकारे। अगास्त। अगासाताम्। अगासत। रुङ्
गतौ भाषणे च। पूर्ववत् त आदयः। गुणः। रवते। लिट्लकारे रुधातोः।
अनेनानेकस्वरासंयोगपूर्वत्वात् वकारे प्राप्ते। सूत्रम्।

## नानप्योर्वः।

**अनपि विषये धातोरुवर्णस्य वत्वं न भवति। तत उङ् रुधातोः। रुरुवे रुरुवाते रुरुविरे। रविषीष्ट, रविता, रविष्यते, अरविष्यत, अरविष्ट। देङ् पालने। दयते दयेत, दयताम्, अदयत।**

नानप्योर्वः। न (प्र० ए०) अनपि (स० ए०) ओः (ष० ए०) वः (प्र० ए०)
तिवादिचतुष्टयस्यापप्रत्ययो भवति नान्यविभक्तिगणस्य। ततो विभक्तिचतुष्टय-
वर्जितो विभक्तिगणोऽनप् कथ्यते, ततोऽनप्सम्बन्धिनि स्वरे परे धातोरुवर्णस्य
वत्व न भवति। किन्तु उवेव भवति। अनेनोव् भवति। रुरुवे। रुरुवाते।
रुरुविरे। रविषीष्ट। रविता। लुङ्लकारे अरविष्ट। अरविषाताम्। अर-
विषत। देङ् पालने। ङकार आत्मनेपदार्थः। दयते। लिट्लकारे सूत्रम्।

## दयतेर्णादौ दिग्यादेशो द्वित्वाभावश्च वक्तव्यः।

**दिग्ये। संध्यक्षराणामा०। दासीष्ट, दाता, दास्यते, अदास्यत।**

दयतेः । दयतेर्धातोर्णादौ परे सति दिग्यादेशो भवति । द्वित्वाभावश्च वक्तव्यः । आतोऽनपि । दिग्ये । दिग्याते । गिग्यिरे । सम्प्रचराणामा० । दासीष्ट । दाता । दास्यते । अदास्यत । अदासि तन् इति स्थिते सूत्रम् ।

## अपिद्दाधास्थामित्वं सेर्ङित्त्वयात्मनेपदे वाच्यम् ।

ङित्त्वान्न गुणः ।

अपिद्दाधास्थाम् । अपिद्दाधास्थां धातूनाम् इत्त्वं सेर्ङित्त्वं च आत्मनेपदे वाच्यम् । षष्ठीनिर्दि० । ङित्त्वात् गुणाभावो भवति । तदा अदि सि तम् इति जाते सूत्रम् ।

## लोपो ह्रस्वाज्झसे ।

ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे । अदित अदिषाताम् अदिषत । डीङ् विहायसा गतौ । डयते डयेत डयताम् अडयत । नुधातोः । डिड्ये, डयिषीष्ट, डयिता डयिष्यते, अडयिष्यत, अडयिष्ट । दैङ् त्रैङ् पालने । दायते, दायेत, दायताम्, अदायत ।

लोपो ह्रस्वाज्झसे । लोपः ( प्र० ए० ) ह्रस्वात् ( पं० ए० ) झसि ( स०ए० ) ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे । अनेन सेर्लोपो भवति । अदित । अदिषाताम् । अदिषत । डीङ् विहायसा गतौ । ङकारः सर्वत्रात्मनेपदार्थो ज्ञातव्यः । गुणः । डयते । डयेत । लिट्लकारे नुधातोरनेन इय् भवति । डिड्ये । डिड्याते । डिड्यिरे । गुणः । डयिषीष्ट । अन्यानि सूत्रे सन्ति । लुङ्लकारे । अडयिष्ट । अडयिषाताम् । अडयिषत । दैङ् त्रैङ् पालने पूर्ववत् तस्मादयः । ऐआय् । दायते । त्रायते । लिट्लकारे सूत्रम् ।

## दैङो णादौ दिग्यादेशो द्वित्वाभावश्च ।

दिग्ये, दासीष्ट । अपिद्दाधास्थामि० । लोपो ह्रस्वा-

ज्महे । अदित । तत्रे । अत्रास्त । द्युतङ् द्योतने । उपधाया लघोः । द्योतते, द्योतेत, द्योतताम्, अद्योतत ।

देङः । देङो धातोर्णादौ परे सति दिग्यादेशो विलाभावश्च भवति । आतोनपि । दिग्ये । दिग्याते । दिग्यिरे । सन्ध्यक्षराणा० । दासीष्ट । लुङ्लकारे । अपिद्दाधा० । लोपो ह्रस्वा० । अदित । अदिषाताम् । अदिषत । त्रैङ्धातोर्लिट्लकारे सन्ध्यक्षराणामा० । अनेनाकारः । द्विश्च । ह्रस्वः । पूर्वस्य । आतोनपि । अनेनाकारलोपः । तत्रे । तत्राते । तत्रिरे । अस्य धातोर्लुङ्लकारे सन्ध्यक्षरा० । अत्रास्त । अत्रासाताम् । अत्रासत । द्युतङ् द्योतने । अकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । "उपधायाः" अनेन गुणो भवत्यस्य । द्योतते । अन्यानि सूत्रे सन्ति । द्युत् ण इति स्थिते द्विश्च । द्यु द्युत् ण इति जाते सूत्रम् ।

## द्युतेः पूर्वस्य संप्रसारणं वक्तव्यं णादौ परे ।

दिद्युते, द्योतिषीष्ट, द्योतिता, द्योतिष्यते, अद्योतिष्यत, अद्योतिष्ट ।

द्युतेः । द्युतेर्धातोः पूर्वस्य सम्प्रसारणं वक्तव्यं णवादौ परे सति । अनेनास्य पूर्वस्य सम्प्रसारणम् । स्वरहीनम् । दिद्युते । दिद्युताते । दिद्युतिरे । द्योतिषीष्ट । द्योतिता । लुङ्लकारे । अद्योतिष्ट । सूत्रम् ।

## द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम् ।

लित्पुषादेर्ङः । अद्युतत् । वृतुङ् वर्तने । वर्तते वर्त्तेते वर्तन्ते । वर्तेत, वर्तताम्, अवर्तत, ववृते, वर्तिषीष्ट, वर्तिता, वर्तिष्यते, अवर्तिष्यत ।

द्युतादिभ्यः । द्युतादिभ्यो धातुभ्यो लुङि वा परस्मैपदं वाच्यम् अनेनास्य लुङि वा परस्मैपदं भवति । तदा "लित्पुषादेर्ङः" अनेन ङः । ङित्त्वात् गुणाभावः । अद्युतत् । अद्युतताम् । अद्युतन् । वृतुङ् वर्तने । उकार उच्चारणार्थः । वर्त्तते । लिट्लकारे द्विश्च । रः । ववृते । वर्त्तिषीष्ट । वर्त्तिता । वर्त्तिष्यते । अवर्त्तिष्यत् ।

## वृतादिभ्यः स्यप्स्योर्वा पं पेऽनिट्त्वं च ।

वृतु वृधु शृधु स्यन्दू कृपू एते वृतादयः । वर्त्स्यति, अवर्त्स्यत्, अवर्तिष्ट । परस्मैपदपक्षे लित्पुषादेर्ङः । अवृतत् । वृधुङ् वृद्धौ । वर्धते, वर्धेत, वर्धताम्, अवर्धत, ववृधे, वर्धिषीष्ट, वर्धिता, वर्धिष्यते, अवर्धिष्यत, वर्त्स्यति, अवर्त्स्यत्, अवर्धिष्ट, अवृधत् । शृधुङ् पर्दने । शर्धते, शर्धेत, शर्धताम्, अशर्धत, शशृधे, शर्धिषीष्ट, शर्धिता, शर्धिष्यते, अशर्धिष्यत, अशर्धिष्ट, शर्त्स्यति, अशर्त्स्यत्, अशृधत् । स्यन्दू प्रस्रवणे । स्यन्दते, स्यन्देत, स्यन्दताम्, अस्यन्दत, सस्यन्दे । ऊदितो वा । स्यन्दिषीष्ट, स्यन्त्सीष्ट, स्यन्दिता-स्यन्ता, सन्दिष्यते-स्यन्त्स्यते, स्यन्त्स्यति, अस्यन्दिष्यत, अस्यन्त्स्यत, अस्यन्त्स्यत्, अस्यन्दिष्ट, अस्यन्त । पक्षे अस्यदत् । कृपू सामर्थ्ये । गुणः ।

वृतादिभ्यः । वृतादिभ्यो धातुभ्यः स्यसोः परतो वा पं परस्मैपदम् अनिट्त्वञ्च वाच्यम् । वृतादयस्तु मूले उक्ताः । गुणः । वर्त्स्यति अवर्त्स्यत् । लुङ्लकारे । अवर्तिष्ट । परस्मैपदपक्षे । लित्पुषादेर्ङः । अनेनास्य ङः । अवृतत् । वृधुङ् । उपधाया लघोः । वर्द्धते । लिट्लकारे ववृधे । वर्द्धिषीष्ट । अस्य धातोरपि पूर्वधातुवत् रूपाणि साध्यानि । शृधुङ् पर्दने । पर्दनं गुदरवः । शर्धते । अयमपि तद्वत् । न किञ्चिद्विशेषः । स्यन्दू प्रस्रवणे । ऊकार इड्विकल्पार्थः । स्यन्दते लिट्लकारे द्वित्वम् । पूर्वस्य । सस्यन्दे । सस्यन्दाते । सस्यन्दिरे । अस्य धातोरूदितो वा अनेनेड्विकल्पो भवति । स्यन्दिषीष्ट । इडभावपक्षे 'खरि चपा [illegible] [illegible] दस्य तः । स्यन्त्सीष्ट । स्यन्दिता । स्यन्ता । स्यन्दिष्यते । इडभावप[illegible] खरि० । स्यन्त्स्यते । अस्यन्दिष्यत अस्यन्त्स्यत । अस्यन्दिष्ट । इडभावे [illegible] । परस्मैपदपक्षे लित्पुषादेर्ङः । नोलोपः । अनेन अनुस्वारस्य लोपो [illegible] । अस्यदत् । कृपू सामर्थ्ये । पूर्ववत् तथादयः । उपधायाः । सूत्र[illegible] ।

क्लृपो रोलः

क्लृपो रेफस्य लो भवति ऋकारस्य लृकारो भवति। कल्पते, कल्पेत, कल्पताम्, अकल्पत, चक्लृपे, कल्पिषीष्ट। इडभावपक्षे।

क्लृपो रोलः। क्लृपः (ष० ए०) रः (ष० ए०) लः (प्र० ए०) क्लृपो धातो रेफस्य लकारो भवति ऋकारस्य लृकारो भवति। अनेन रस्य लः। कल्पते। लिट्लकारे 'क्लृपो रोलः' अनेन ऋकारस्य लृकारः। चक्लृपे। कल्पिषीष्ट। अस्यापि ऊदित्वादिड्विकल्पो भवति। तदा क्लृप्सीष्ट इति जाते। उपधाया लघोः। अनेन गुणे प्राप्ते सति तन्निषेधकृत् सूत्रम्।

सिस्योः।

उपधाया गुणो न भवति सिस्योरनिटोः परतः। क्लृप्सीष्ट, कल्पिता-कल्प्ता, कल्पिष्यते-कल्प्स्यते, कल्प्स्यति, अकल्पिष्यत-अकल्प्स्यत, अकल्प्स्यत्, अकल्पिष्ट। अक्लृप्त अक्लृप्साताम् अक्लृप्सत। अक्लृपत्। व्यथ दुःखभयचलनयोः। व्यथते, व्यथेत, व्यथताम्, अव्यथत।

सिस्योः। सिश्च सीश्च सिसी तयोः सिस्योः (ष द्वि०)। सिस्योरनिटोः परत उपधाया गुणो न भवति। अनेन गुणाभावः। क्लृपो रो लः। क्लृप्सीष्ट। कल्पिता। कल्प्ता। कल्पिष्यते। कल्प्स्यते। अकल्पिष्यत। अकल्प्स्यत। परस्मैपदपक्षे कल्प्स्यति। अकल्प्स्यत्। अकल्पिष्ट। लित्पुषाद्येङः। क्लृपो रो लः। अक्लृपत्। अक्लृपताम्। अक्लृपन्। समाप्तोऽयं धातुः। व्यथ दुःख-भयचलनयोः। अकार आत्मनेपदार्थः। व्यथते।

व्यथतेर्लिटि द्वित्वादौ पूर्वस्य सम्प्रसारणं वक्तव्यम्।

विव्यथे, व्यथिषीष्ट, व्यथिता, व्यथिष्यते, अव्यथिष्यत,

अव्यथिष्ट। रमु क्रीड़ायाम्। रमते, रमेत, रमताम्, अरमत।

व्यथतेर्धातोर्घादौ परे पूर्वस्य संप्रसारणं वक्तव्यम्। इदं मूले सूत्रमस्ति अनेनास्य धातोः संप्रसारणं भवति। विव्यथे। विव्यथाते। विव्यथिरे। व्यथिषीष्ट। व्यथिता लुङ्लकारे। अव्यथिष्ट। रमु क्रीडायाम्। रमते। रमेत। रमताम्। अरमत। सूत्रम्।

## व्याङ्पर्युपेभ्यो रमः पम्।

विरमति, आरमति, परिरमति, उपरमति, रेमे, रंसीष्ट, रन्ता, रंस्यते, अरंस्यत, अरंस्त, अरंसाताम्। अरंसत। विपूर्वः। आदन्तानाम्। इतीट्सकौ। व्यरंसीत् व्यरंसिष्टाम्। ञित्वरा सम्भ्रमे। ञिआवितौ। त्वरते, त्वरेत, त्वरताम्, अत्वरत, तत्वरे, त्वरिषीष्ट, त्वरिता, त्वरिष्यते, अत्वरिष्यत, अत्वरिष्ट, अत्वरिढ्वं अत्वरिध्वम्। षह मर्षणे। सहते, सहेत, सहताम्, असहत, सेहे, सहिषीष्ट, सहिता। इषुसह० इति वेट्। होढः। तथोर्धः। ष्टुत्वम्। ढलोपः।

व्याङ्पर्युपेभ्यः। वि आङ् परि उप एभ्य उपसर्गेभ्यो रमधातोः पं परस्मैपदं भवति। विरमति। आरमति। परिरमति। उपरमति। लिट्लकारे। लोपः पचाम्। अनेनैत्वपूर्वलोपौ भवतः। रेमे। रेमाते। रेमिरे। नश्चापदान्ते झलि। अनेन मकारस्यानुस्वारो भवति। रंसीष्ट। रन्ता। लुङ्लकारे। अरंस्त। अरंसाताम्। अरंसत। यदायं धातुर्विपूर्वः स्यात् तदात्मनेपदं भवति। आदन्तानाम्। अनेन परस्मैपदे सति इट्सकौ भवतः। व्यरम् स् इट् स् ईट् दिप् इति स्थिते। इट ईटि सवर्णे०। स्वरहीनम्। नश्चापदान्ते। वावसाने। व्यरंसीत्। व्यरंसिष्टाम्। व्यरंसिषुः। ञित्वरा

संभ्रमे। ञिआवितौ। पूर्ववत् तश्रादयः। त्वरते। लिट् लकारे द्वित्व। पूर्वस्य हसादिः शेषः। तत्वरे। तत्वराते। तत्वरिरे। त्वरिषीष्ट। लुङ् लकारे अत्वरिष्ट। अत्वरिषाताम्। अत्वरिषत। षह मर्षणे। षादेः षः सः। अनेन सत्वम्। सहते। लिट् लकारे। 'लोपः पचाम्' अनेनैत्वपूर्वलोपौ। सेहे। सेहाते। सेहिरे। सहिषीष्ट। सहिता। 'इषुसह०' अनेनास्य वा इट् भवति। इडभावपक्षे सह् ता इति स्थिते। 'होढः' अनेन हस्य ढः। तथोर्धः अनेन तस्य धः। ष्टुभिः ष्टुः। ढि ढो लोपो दीर्घश्च। तदा सा ढा इति जाते। सूत्रम्।

## सहिवहोरोदवर्णस्य।

**सहिवहोरवर्णस्यौकारादेशो भवति ढलोपनिमित्ते ढकारे परे। सोढा सहिष्यते असहिष्यत असहिष्ट।**

### इति भ्वादिष्वात्मनेपदिप्रक्रिया।

सहिवहोरोदवर्णस्य। सहिश्च वह् च सहिवहौ तयोः सहिवहोः (ष० द्वि०) ओत् (प्र० ए०) अवर्णस्य (ष० ए०) सहिवहोर्धात्वोरवर्णस्य ओकारो भवति ढलोपनिमित्ते ढकारे परे। अनेन ओकारः। सोढा। सोढारौ। सोढारः। सहिष्यते। असहिष्यत। असहिष्ट। असहिषाताम्। असहिषत।

इति भ्वादिगणस्यात्मनेपदिप्रक्रिया समाप्तिमगमत्।

---

## अथोभयपदिप्रक्रिया।

राजृ दीप्तौ। ऋकार ऋदित्कार्यार्थः। राजति, राजते, राजेत्, राजेत, राजतु, राजताम्, अराजत्, अराजत, रराज। फणादित्वादेत्वपूर्वलोपौ। रेजतुः-रराजतुः, रेजुः-रराजुः, रेजे, राज्यात्, राजिषीष्ट, राजिता, राजिता, राजिष्यति, राजिष्यते, अराजिष्यत्, अराजिष्यत, अराजीत्,

**अराजिष्ट । खन खनने । खनति, खनते, खनेत्, खनेत, खनतु, खनताम्, अखनत्, अखनत, चखान । गमां स्वरे । चख्नतुः, चख्नुः । चख्ने, खन्यात् ।**

अथ भ्वादिगणस्योभयपदिप्रक्रिया कथ्यते । राजृ दीप्तौ । उभयपदिनो धातोस्तिवादयस्ताद्यश्च प्रत्यया भवन्ति । द्वयोः परयोः सतोरप् कर्त्तरि । अनेन अप् प्रत्ययो भवति । ऋकार ऋदित्कार्यार्थः । राजति । राजते । लिट्लकारे फणादीनां अ‍नेनास्य वा यत्वपूर्वलोपौ । रराज । रेजतुः । रराजतुः । रेजिथ । रराजिथ । आत्मनेपदे । रेजे । यत्वपूर्वलोपाभावे । रराजे । राज्यात् । राजिषीष्ट । राजिता । राजिता । अन्यानि मूले सन्ति तानि सुगमानि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति । लुङ्लकारे । अराजीत् । अराजिष्टाम् । अराजिषुः । अराजिष्ट । अराजिषाताम् । अराजिषत । खन खनने । अकार उभयपदार्थः । खनति । खनते । लिट्लकारे अत उपधायाः । अनेन वृद्धिः । कृद्वोश्च । चखान । चखन् अतुस् इति जाते 'गमांस्वरे' अनेनोपधाया लोपो भवति । खरह्रोनं० । चख्ने । खन्यात् । अत्रेदं सूत्रम् ।

**जनखनसनां ङ्किति ये आकारो वा वक्तव्यः ।**

**खायात्, खनिषीष्ट, खनिता, खनिता, खनिष्यति, खनिष्यते, अखनिष्यत्, अखनिष्यत, अखानीत्, अखनीत्, अखनिष्ट । हृञ् हरणे । हरति, हरते, हरेत्, हरेत, हरतु, हरताम्, अहरत । जहार जह्रतुः जह्रुः ।**

जनखनसनाम् । जन खन सन एतेषां धातूनां ङ्किति यकारे परे आकारो वा वक्तव्यः । षष्ठीनिर्दि० । खायात् । खनिषीष्ट । खनिता । खनिता । लुङ्लकारे ह्वसादेः । अनेनास्य वा वृद्धिः । अखानीत् । अखनीत् । अखनिष्ट । अखनिषाताम् । अखनिषत । हृञ् हरणे । अकार उभयपदार्थः । गुणः । हरति । हरते । लिट्लकारे धातोर्नामिनः । अनेन वृद्धिः । कृद्वोश्च । जहार । जह्रतुः ।

## ऋदन्तस्य थपो नेट्।

जहर्थ। जह्रे। यादादौ। ह्रियात्।

ऋदन्तस्य। ऋदन्तस्य धातोस्थप इट् न भवति। गुणः। जहर्थ। जह्रे। यादादौ। अनेन ऋकारस्य रिङादेशः। ह्रियात्। हृसीष्ट इति जाते। गुणः। अनेन गुणे प्राप्ते। तन्निषेधकं सूत्रम्।

## ऋः।

ऋकारस्य गुणो न भवति सिस्योरनिटोः परतः। हृसीष्ट। हर्त्ता। हर्त्तारः स्यपः। हरिष्यति, हरिष्यते, अहरिष्यत्, अहरिष्यत, अहार्षीत्। लोपो ह्रस्वाज्झसे। अहृत अहृषाताम् अहृषत। गुह् संवरणे।

ऋः। ऋः (ष० ए०) अनिटोः सिस्योः परत ऋकारस्य गुणो न भवति। अनेन गुणनिषेधः। हृषीष्ट। गुणः। हर्त्ता। हर्त्तारः स्यपः। अनेन स्यपि इड् भवति। गुणः। हरिष्यति। हरिष्यते। लुङ्लकारे। वृद्धिः। अहार्षीत्। लोपो ह्रस्वाज्झसे। अनेन सेर्लोपो भवति। अहृत। अहृषाताम्। अहृषत। गुह् संवरणे। ऊकार इड्विकल्पार्थः। पूर्ववत् तिबादयस्त आदयश्च प्रत्यया भवन्ति।

## गुहेरुपधाया ऊद्गुणहेतौ स्वरे।

गूहति-गूहते, जुगूह, जुगुहतुः, जुगूहिथ। जुगोढ, जुघुक्षे-जुगुहिषे, जुगुहिध्वे-जुगुहिढ्वे, गूहिसीष्ट-घुक्षीष्ट, गूहिता-गोढा, गूहिष्यति-घोक्ष्यति।

गुहेः। इदं सूत्रमस्ति। गुहेर्धातोरुपधाया ऊत् स्यात् गुणहेतौ स्वरे परे। अनेनास्योपधाया ऊत्। गूहति। गूहते। अन्यानि सूत्रे सन्ति तानि सुगमान्येवानेनैव क्रमेण साध्यानि। लिट्लकारे जुगूह। जुगुहतुः। गुहेः। जुगूहिथ। ऊदितो वा अनेनास्येड्विकल्पः। गुहेरिति सूत्रे 'स्वरादौ' इति वक्तव्यं तेन

हलादौ गुणनिमित्ते प्रत्यये परे ऊत् न भवति किन्तु गुणो भवति। जुगुह् थप् इति स्थिते गुणः। जगोह्। थप् इति जाते। हो ढः। तथोर्धः। ढिढो लोपो०। जुगोढ। आत्मनेपदे जुगुहे। जुगुहाते। जुगुहिरे। ऊदितो वा जुगुहिषे। इडभावे जुगुह् से इति जाते हो ढः। आदिजबानाम्। जुघुढ् से इति जाते षढोः कः सि। अनेन ढस्य कः। क्विलात्। कषसंयोगे क्षः। जुघुक्षे। जुगुहिषे। इडभावे। हो ढः भवे जबाः। जुगुढ्वे। गुह्यात्। गुह्यः। सिससता। गूहिषीष्ट। इडभावे। हो ढः। आदिजबानाम्। षढोः कः सि। क्विलात्। कष०। घुक्षीष्ट। गूहिता। इडभावे गुण 'उपधाया लघोः' अनेन सूत्रेण भवति। हो ढः। तथोर्धः। ढिढो०। गोढा। आत्मनेपदे गूहिता। गोढा। गूहिष्यति। इडभावे। उपधायाः। हो ढः। आदिजबानाम्। षढोः कः सि। क्विलात्। कषसं०। घोक्ष्यति। गूहिष्यते। घोक्ष्यते। अगूहिष्यत्। अघोक्ष्यत्। अगूहिष्यत। अघोक्ष्यत। लुङ्लकारे। अगूहीत्। इडभावे। 'हशषान्ता०' अनेन सक्प्रत्ययो भवति। अघुक्षत्। आत्मनेपदे। अगूहिष्ट। इडभावे। अगुह् सक् तन् इति स्थिते। हो ढः। आदिजबानाम्। अघुढ् स् क् तन् इति जाते। सूत्रम्।

## दुहदिहलिहगुहूभ्यः सको लुग्वा थकारत-कारयोराति।

### अगूढ-अघुक्षत्।

दुहदिहलिहगुहूभ्यः। दुह दिह लिह गुह् एभ्यो धातुभ्यः सको वा लुग् भवति थकारतकारयोराति आत्मनेपदे थकारे परेऽपि भवति। अनेन सको वा लुक्। तथोर्धः। ढिढोलोपो दीर्घश्च। अगूढ। लुगभावे। अघुढ् सक् तन् इति जाते षढोः कः सि। क्विलात्०। कषसंयोगे क्षः। अघुक्षत। अघुक्ष् आताम् इत्यत्र। आटायइः। अनेन आकारस्य इकारे प्राप्ते। सूत्रम्।

## आति सकोऽकारलोपः स्वरे।

अघुक्षाताम् अघुक्षत। अगूढाः-अघुक्षथाः, अघुक्षाथाम् अगूढ्वं-अघुक्षध्वम्। अघुक्षि अगुह्वहि-अघुक्षावहि

अगुह्महि अघुक्षामहि । दान आर्जवे । गुबृथः । यः । मानादीनां पूर्वस्य दीर्घो वक्तव्यः । दीदांसते, दीदांसेत्, दीदांसेत, दीदांसतु, दीदांसताम्, अदीदांसत्, अदीदांसत, दीदांसांचक्रे, दीदांसामास, दीदांसांबभूव, दीदांस्यात्, दीदांसिषीष्ट, दीदांसिता, दीदांसिष्यति, दीदांसिष्यते, अदीदांसिष्यत्, अदीदांसिष्यत, अदीदांसीत्, अदीदांसिष्ट । शान तेजने । शीशांसति, शीशांसते । दानवत् । भज सेवायाम् । भजति । भजते, भजेत्, भजेत, भजतु, भजताम्, अभजत्, अभजत, बभाज । तृफलभज० इत्येत्वपूर्वलोपौ । भेजतुः भेजुः । भेजिथ बभक्थ । भेजे भेजाते भेजिरे । भज्यात्, भक्षीष्ट, भक्ता, भक्ता, भक्ष्यति, भक्ष्यते, अभक्ष्यत्, अभक्ष्यत । अभाक्षीत् । अभाक्ताम् अभाक्षुः । अभक्त, अभक्षाताम्, अभक्षत । डुपचष् पाके । डुकारषकारौ कार्य्यार्थौ । पचति, पचते, पचेत्, पचेत, पचतु, पचताम्, अपचत्, अपचत । पपाच पेचतुः पेचुः । पेचे, पच्यात्, पक्षीष्ट, पक्ता, पक्ता, पक्ष्यति, पक्ष्यते, अपक्ष्यत्, अपक्ष्यत, अपाक्षीत् । अपक्त अपक्षाताम् अपक्षत । अञ्च गतौ याचने च । आञ्चीत् । व्यय गतौ । वव्यये, अव्ययीत् । श्रिञ् सेवायाम् । गुणः । श्रयति, श्रयते, शिश्राय, शिश्रियतुः, शिश्रिये, श्रीयात्, श्रयिषीष्ट, श्रयिता, श्रयिता, श्रयिष्यति, श्रयिष्यते, अश्रयिष्यत्, अश्रयिष्यत ।

आति । आति आत्मनेपदे सकः अकारस्य लोपो भवति स्वरे परे । अनेन अकारस्य लोपः । अघुक्षाताम् । अघुक्षत । अगूढाः । अघुक्षथाः । अघुक्षाथाम् ।

अगूढ्वम्। अगुचध्वम्। अघुचि। अगुह्वहि। अघुक्षावहि। अनचामहि। दान आर्जवे। गुब्ध्य:। य: सि। मानादीनाम्। म धातु:। नश्चापदान्ते। दीदांसति। दीदांसते। अन्यानि सूत्रे सन्ति। दीदांसाञ्चकार। दीदांसाचक्रे। द्वे सूत्रे स्त:। अस्यायत: दीदांस्यात्। दीदांसिषीष्ट। अन्यानि सूत्रे सन्ति। ते पूर्वोक्तैरेव सूत्रै: सिध्यन्ति। शान तेजने। गुब्ध्य:। शीशांसति। शीशांसते। दानवत्। भज सेवायाम्। भजति। भजते। लिट्लकारे। अत उपधाया:। बभाज। 'तृफलभज०' अनेनैत्वपूर्वलोपौ भवत:। भेजतु:। भेजे। भेजाते। चो: कु:। खरि। षढो: क: सि। क्त्रिलात। कषसं०। भक्षीष्ट। भक्ता। लुङ्लकारे। सावनिट:। अभाक्षीत। भक्षात। अभाक्ताम्। अभक्त। अभक्षाताम। डुपचष् पाके। 'डुकारषकारौ' कार्य्यार्थौ। पचति। पचते। लिट्लकारे लोप: पचाम्। अत उपधाया:। पपाच। पेचतु:। पेचे। पेचाते। पच्यात्। पच् सीष्ट इति स्थिते चो: कु:। क्त्रिलात। कष संयोगे च:। पक्षीष्ट। चो: कु:। पक्ता। लङ्लकारे सावनिट:। अपाक्षीत्। भसात्। अपाक्ताम्। आत्मनेपदे। अपक्त। अपक्षाताम्। अञ्चु गतौ याचने च। अञ्चति। अञ्चते। लिट्लकारे। आनञ्च। आनञ्चे। नीलोप:। अच्यात्। अङ्क्षीष्ट। अङ्क्ता। लुङ्लकारे। आञ्चीत्। आङ्क्त। श्रिञ् सेवायाम्। पूर्ववत् तिवादयस्त आदय:। अप् कर्त्तरि। गुण:। ए अय्। श्रयति। श्रयते। लिट्लकारे। द्वित्व। पूर्वस्य। 'धातोर्नामिन:' अनेन वृद्धि:। शिश्राय। नुधातो:। शिश्रियतु:। शिश्रिये। श्रीयात्। श्रयिषीष्ट। श्रयिता। अन्यानि सूत्रे सन्ति। लुङ्लकारे सूत्रम्।

## स्रुश्रिद्रुवां सेरङ् धातोर्द्वित्वं च।

अशिश्रियत् अशिश्रियत। त्विष् दीप्तौ। त्वेषति, त्वेषते, तित्वेष, तित्विषे, त्विष्यात्, त्विक्षीष्ट, त्वेष्टा, त्वेक्ष्यति, त्वेक्ष्यते, अत्वेक्ष्यत्, अत्वेक्ष्यत। इशषान्तात् सक्। अत्विक्षत।

स्रुश्रिद्रुवाम्। स्रु श्रि द्रु एतेषां धातूनां सेरङ् प्रत्ययो भवति धातोर्द्वित्वं च भवति। अशिश्रियत्। अशिश्रियत। त्विष् दीप्तौ। उपधाया लघो:। अनेन

गुणः। लेषति। लेषते। अन्यानि सुगमानि। लिट्लकारे। उपधायाः। पूर्वस्य। लिलेष। लिलिषतुः। आत्मनेपदे। लिलिषे। लिलिषाते। लिष्यात्। षढोः कः सि। लिचीष्ट। उतधायाः। ष्टुभिः ष्टुः। लेष्टा। अन्यानि मूले सन्ति। लुङ्लकारे। 'हृशषान्तात्सक्' अनेन सक् प्रत्ययो भवति। षढोः कः सि। क्विलात्। कषसंयोगे क्षः। अलिक्षत्। अलिक्षताम्। अलिक्षन्। आत्मनेपदे। अलिक्षत। अलिक्ष आताम् इति जाते आदाय इ। अनेन आकारस्य इकारे प्राप्ते सूत्रम्।

## सस्यात्मनेपदे स्वरे टिलोपो वाच्यः।

अकारलोपे कृते आतोऽन्तोदनतः। अलिक्षाताम् अलिक्षत। यज देवपूजासङ्गतिकरणदानेषु। यजति, यजते, यजेत्, यजेत, यजतु, यजताम्, अयजत्, अयजत। यादौ पूर्वस्य। इयाज। यजां यवराणां यृवृतः सम्प्रसारणम्। ईजतुः ईजुः। इजयिथ-इयष्ठ। ईजे, इज्यात्, यक्षीष्ट, यष्टा, यष्टा, यक्ष्यति, यक्ष्यते, अयक्ष्यत्, अयक्ष्यत। अयाक्षीत् अयाष्टाम् अयाक्षुः। अयष्ट अयक्षाताम् अयक्षत। अयष्ठाः अयक्षाथाम्।

सस्य। सस्य आत्मनेपदे स्वरे परे सति टेर्लोपो वाच्यः। अनेन अकारस्य लोपः।' स्वरहीनं०। अलिक्षाताम्। आतोऽन्तोऽदनतः। अलिक्षत। समाप्तोऽयं धातुः। यज देवपूजासंगतिकरणदानेषु। यजति। यजते। अन्यानि सन्ति मूले। लिट्लकारे। यज् णप् इति स्थिते द्विः। 'यादौ पूर्वस्य' अनेन संप्रसारणम्। अत उपधायाः। इयाज। य यज् अतुस् इति जाते। यादौ पूर्वस्य। यजां यवराणाम्। सवर्णे। ईजतुः। ईजुः। इयजिथ। ऋतो नित्यानिटः। अनेनास्य वा इड् भवति। इयज् थप् इति जाते। छश-षराजा॰ षः। अनेन जस्य षः। ष्टुभिः ष्टुः। इयष्ठ। आत्मनेपदे। दार्भ्यां सुपाभ्यां सः सारणं भवति। ईजे। ईजाते। ईजिरे। यजाम्। इज्यात्। छशषराजादे षः। षढोः कः सि। क्विलात्। कषसंयोगे। यक्षीष्ट। छश-

पराजादेः षः। ष्टुभिः ष्टुः। यष्टा। अन्यानि लिखितानि सन्ति तस्मान्न लिखितानि मया। तानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। लुङ् लकारे। 'वावन्निट' अनेन वृद्धिः। अयाक्षीत्। झसात्। अयाष्टाम्। अयाक्षुः। आत्मनेपदे। 'झसात्' अनेन सेर्लोपः। ष्टुभिः ष्टुः। अयष्ट। अयक्षाताम्। अयक्षत। अयज् स् ध्वं इति जाते।

## ध्वे च सेर्लोपः।

षत्वम्। झबे जबाः। ष्टुत्वम्। अयड्ढ्वम्। अयक्षि अयक्ष्वहि अयक्ष्महि। टुवप् बीजतन्तुसन्ताने। टुइत् वपति वपेत्। उवाप ऊपतुः ऊपुः। उवपिथ उवप्थ। ऊपे, उप्यात्, वप्सीष्ट, वप्ता, वप्स्यति, वप्स्यते, अवप्स्यत्, अवप्स्यत, अवप्सीत्, अवप्त। वह प्रापणे। वहति, वहते। उवाह ऊहतुः ऊहुः। उवहिथ। होढः। तथोर्धः। ष्टुत्वम्। ढलोपः। सहिवहोरोदवर्णस्य। उवोढ, उह्यात्, वक्षीष्ट, वोढा, वक्ष्यति, वक्ष्यते, अवक्ष्यत्, अवक्ष्यत, अवाक्षीत्, अवोढाम्, अवोढ अवक्षाताम् अवक्षत। वेञ् तन्तुसन्ताने। वयति, वयते।

ध्वे च सेर्लोपः। अनेन सेर्लोपः। कृशपराजादेः षः। षोढः। अनेन षस्य ढः। ष्टुत्वम्। अयड्ढ्वम्। टु वप् बीजतन्तुसन्ताने। टुइत्। वपति। वपते। लिट् लकारे यवादौ। अनेन संप्रसारणम्। अत उपधायाः। उवाप। इ संप्रसारणे भवतः अव। सवर्णे। ऊपतुः। अत्वतः। उवपिथ। इडभावे। उवप्थ। ऊपे। ऊपाते। ऊपिरे। यजां। उप्यात्। वप्सीष्ट। वप्ता। अन्यानि सूत्रं सन्ति। लुङ्लकारे। वावनिटः। अवाप्सीत्। झसात्। अवाप्ताम्। अवाप्सुः। आत्मनेपदे। अवप्त। अवप्साताम्। अवप्सत। वह प्रापणे। वहति। वहते। लिट् लकारे। यवादौ। पूर्वस्य। अत उपधायाः। उवाह। यजां। ऊहतुः। ऊहुः। उवहिथ। अत्वतः।

उवच्च थप् इति। जाते ह्रोढः। अनेन हस्य ढः। तथोर्धः। अनेन थस्य धः। ष्टुत्वम्। ढलोपः। सहिवहोरोदवर्णस्य। उवोढ। ऊहे। ऊहाते। ऊहिरे। यजाम्। उह्यात्। ह्रोढः। तथोर्धः। ष्टुत्वम्। ढलोपः। सहिवहोरोदवर्णस्य। वोढा। वोढा। षढोः कः सि। वक्ष्यति। वक्ष्यते। अन्यानि सन्ति सूत्रे। लुङ्लकारे। सावनिटः। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवोढ। अवक्षाताम्। अवक्षत। वेञ् तन्तुसंताने। ञकार उभयपदार्थः। वयति। वयते। लिट्लकारे। सूत्रम्।

## वेञो णादौ सम्प्रसारणाभावो वाच्यः।

**सन्ध्यक्षराणामा। ववौ। वादित्वान्नैत्वपूर्वलोपौ। ववतुः ववुः। ववे।**

वेञः। वेञो धातोर्णवादौ परे संप्रसारणाभावो वाच्यः। अनेनास्य संप्रसारणनिषेधो भवति। संध्यक्षराणामा। द्वित्वं। आतो णप् डौ। ववौ। लोपः। पचाम्। अनेनैत्वपूर्वलोपौ प्राप्तौ। 'शसददवादि' अनेन तन्निषेधः। आतोऽनपि। ववतुः। ववुः। आत्मनेपदे। ववे। ववाते। वविरे। सूत्रम्।

## वेञो वय् णादौ वा वक्तव्यः।

**उवाय।**

वेञः। वेञो धातोर्णवादौ परे वय् वाच्यः। वय् णप् इति स्थिते। द्वित्वं। वयादौ पूर्वस्य। अत उपधायाः। उवाय। वय् अतुस्। इति स्थिते। वयादौ सूत्रम्।

## ग्रहां क्ङिति च।

**ग्रहादीनां सम्प्रसारणं स्यात् किति ङिति च परे। इति सम्प्रसारणम्। यकारस्य सम्प्रसारणनिषेधः। ऊयतुः ऊयुः। उवयिथ ऊयथुः। ऊये ऊयाते ऊयिरे।**

ग्रहाम्। (ष० ब०) क्ङिति (स० ए०) च (प्र० ए०) त्रिपदं०। ग्रह उपा-

हानौ । ज्या वयोहानौ । वेञ् तन्तुसन्ताने । ह्वेञ् आह्वाने । व्यध् ताडने । वश् कान्तावभिलाषे । व्यच् व्यक्तीकरणे । प्रच्छ ज्ञीप्सायाम् ।पृच्छायां । भ्रस्ज पाके । व्रश्च् छेदने । इत्येतेषां सम्बन्धिनां यकारवकाररेफाणां किति ङिति च परे सम्प्रसारणं भवति । यकारस्य इकार: वकारस्य उकार: रेफस्य ऋकार: लकारस्य लृकार: सम्प्रसारणम् । अनेन द्वितीयं सम्प्रसारणम् । यकारस्य सम्प्रसारण-निषेधो वाच्य: । ऊव । ऊयतु: ऊयु: । ऊवयिथ आत्मनेपदे । ऊये । ऊयाते । ऊयिरे ।

## वयो यस्य किति णादौ वो वा वक्तव्य: ।

ऊवतु: ऊवु: । ऊवे, ऊयात्, वासीष्ट, वाता, वाता, वास्यति, वास्यते, अवास्यत्, अवास्यत, अवासीत् । आदन्तानाम् । इति इट्सकौ । अवासिष्टाम् । अवास्त । व्येञ् संवरणे । व्ययति व्ययते ।

वय: । वयो यस्य किति णादौ परे वकारो वा वक्तव्य: । तदा । ऊवाय । ऊवतु: । ऊवु: । आत्मनेपदे । ऊवे ऊवाते ऊविरे । यस्यां क्ङिति च । ऊयात् । सन्ध्यक्षराणामा । वासीष्ट । वाता । वाता । अन्यानि सूत्रे सन्ति । लङ्लकारे । आदन्तानाम् । अवासीत् । अवासिष्टाम् । अवासिषु: । अवास्त । अवासाताम् । अवासत । व्येञ् संवरणे । व्ययति । व्ययते । लिट्लकारे ।

## व्येञो णादौ नात्वम् ।

विव्याय विव्यतु: विव्यु: ।

व्येञ: । व्येञो धातोर्णकारादौ परे सन्ध्यक्षराणामा अनेन सूत्रेण आत्वं न भवति व्येञ् णप् इति स्थिते । द्विश्च । णवादौ पूर्वस्य । अनेन सम्प्रसारणं तदा । विव्ये णप् इति जाते । धातोर्नामिन: । विव्याय । विव्यतु: । विव्यु: ।

## अर्त्यातिव्ययतीनां थपो नित्यमिट् ।

विव्ययिथ । विव्ये, वीयात्, व्यासीष्ट, व्याता, व्याता,

व्यास्यति, व्यास्यते, अव्यास्यत् अव्यास्यत, अव्यासीत्, अव्यास्त । ह्वेञ् स्पर्धायाम् । ह्वयति, ह्वयते ।

अत्यर्त्ति० । विव्ययिथ । विव्ये । वीयात् । सम्प्रसारणम् । व्यासीष्ट । व्याता । व्याता । अन्यानि सुगमानि सन्ति । अव्यासीत् । अव्यास्त । ह्वेञ् स्पर्धायाम् । ह्वयति । ह्वयते । लिट्लकारे सूत्रम् ।

अद्विरुक्तस्य ह्वयतेः संप्रसारणं वक्तव्यम् ।

जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ । जुहुवे जुहुवाते जुहुविरे । हूयात् ह्वासीष्ट, ह्वाता, ह्वाता, ह्वास्यति, ह्वास्यते, अह्वास्यत्, अह्वास्यत ।

अद्विरुक्तस्य । अद्विरुक्तस्य ह्वयतेर्धातोः सम्प्रसारणं वक्तव्यम् । द्वित्वम् । धातो· र्नामिनः । जुहाव । जुहुवतुः । जुहुवुः । जुहविथ । जुहोथ । जुहुवे । जुहुवाते । जुहुविरे । सम्प्रसारणम् । हूयात् । ह्वासीष्ट । अन्यानि सुगमानि सन्ति । लुङ्लकारे । अह्वासीत् ।

अस्यतिवक्तिख्यातिलिपिसिचिह्वयतीनां सेर्ङी वा वाच्यः ।

अह्वत अह्वेताम् अह्वन्त । अह्वास्त । अह्वासाताम् अह्वासत । ऋत जुगुप्सायां कृपायां च ।

अस्यति वक्तिख्याति० । अस्यति वक्ति ख्याति लिपि सिचि ह्वयति एतेषां धातूनां सेर्ङी वा वाच्यः । आतोऽनपि । अह्वत् । अह्वत । अह्वेताम् । अह्वन्त । अह्वास्त । ऋत जुगुप्सायां कृपायां च ।

ऋतेरीयङ् स्वार्थेऽनपि तु वा ।

ऋतीयते, ऋतीयांचक्रे, आनर्त, ऋतीयिष्यते, आर्तीत्, आर्तीयिष्ट ।

इति भ्वादिषु उभयपदिप्रक्रिया ।

इत्यब्विकरणा भ्वादयो धातवः । १ । इति प्रथमगणः ।

ऋतेः । ऋतेर्धातोरीयङ्प्रत्ययो भवति स्वार्थे । अनपि तु वा भवति । ऋतीयते । ऋतीयाचक्रे । ईयङभावे । आनर्त्त । ऋतीयिष्यति । आर्त्तात् । आर्त्तीयिष्ट । इति भ्वादिगणस्योभयपदिप्रक्रिया समाप्ता । इत्यब्विकरणा भ्वादयो धातवः ।

**इदानीं लुग्विकरणा ददादेर्गणात्कर्तरि तिबादयो वर्ण्यन्ते ।**

**अद् भक्षणे । अप् ।**

इदानीं लुग्विकरणाददादेर्गणात् कर्त्तरि तिबादयो योज्यन्ते । अद् भक्षणे । पूर्ववत् तिबादयः । अकर्त्तरि । सूत्रम् ।

## अदादेर्लुक् ।

**अदादेर्गणादुत्पन्नस्यापो लुग्भवति । खसे चपा झसानाम् । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । अद्यात् । अत्तु अत्तात् अत्ताम् अदन्तु ।**

अदादेर्लुक् । अदादेः ( पं० ए० ) लुक् ( प्र० ए० ) द्विपदं० । अदादेर्धातुगणादुत्पन्नो योऽप्प्रत्ययः तस्य लुग्भवति । अनेन सर्वत्राऽपो लुक् । तत्र वर्त्तमाने तिप् तस् अन्ति सिप् थस् इत्येतेषु खसे चपा० इति दस्य तकारः । अत्ति । अत्तः । अदन्ति । अद्यात् । अत्तु । अत्तात् । अत्ताम् । अदन्तु । अद् हि इति स्थिते सूत्रम् ।

## झसाद्धिर्हेः ।

**झसादुत्तरस्य हेर्धिर्भवति । अद्धि-अत्तात् अत्तम् अत्त । अदानि अदाव अदाम ।**

झसाद्धिर्हेः । ( पं० ए० ) धि ( प्र० ए० ) हे ( ष० ए० ) झसादुत्तरस्य हि इति वचनस्य धिरित्यादेशो भवति । तातङादेशे कृते तु न भवति । खर० ।

अद्धि अत्तात्। अत्तम्। अत्त। उत्तमपुरुषे सर्वत्र। स्वर०। अदानि। अदाव। अदाम। अनद्यतनेऽप्प्रत्यय लुकि कृते। दिवादावट्। स्वरादेः। इत्यडागमद्वये च कृते उभयत्रापि स्व०।

अदादिस्योरडागमो वक्तव्यः।

जघास। गमां स्वरे। खसे चपा०। घसादेः षः। क्षः। जक्षतुः जक्षुः। जघसिथ। पचे। आद आदतुः आदुः। आदिथ। अद्यात्, अत्ता, अत्स्यति, आत्स्यत्।

अदादिस्योरिति। अदो धातोः परयोर्दिप् सिप् इत्येतयोः अडागमो भवति। अनेनाडागमः टित्वादादौ। स्वर० वावसाने। आदत्। तकारादौ। खसे०। आत्ताम्। आदन्। आदः आत्तम् आत्त। आदम्। आद्व। आद्म। अद् लृङ् इति स्थिते सूत्रम्।

सिसयोः।

अनयोः परयोरदधातोर्घस्लृ आदेशो भवति।

सिसयोः। सिसयोः परतः। अदधातोर्घस्लृ इत्यादेशो भवति। णबादौ वा भवति। लृकारः लृदित्कार्य्यार्थः। घस् णप् इति स्थिते। द्विश्च। कुहोश्चुः। झपानां जबचपाः। अत उपधायाः। जघास। जघस् अतुस् इति स्थिते। गमां स्वरे। अनेनोपधाया लोपः। खसे। अनेन घस्य कः। घसादेः षः। अनेन षत्वम्। कषसंयोगे। जक्षतुः जक्षुः। जघसिथ। पचे। आद। आदतुः। आदुः। अद्यात्। खसे०। अत्ता। अन्यानि मूले सन्ति। लुङ्लकारे। सिसयोः।

लृदित्वादङ्।

अघसत् अघसताम् अघसन्। प्सा भक्षणे। प्साति प्सातः प्सान्ति। प्सायात् प्सायाताम् प्सायुः। प्सातु-प्सातात् प्साताम् प्सान्तु। अप्सात् अप्साताम्।

लृदित्त्वादङ् । अघसत् । अघसताम् । अघसन् । प्सा भक्षणे । प्साति प्सातः प्सान्ति । अन्यानि रूपाणि सन्ति । तानि सुगमान्येव । लुङ्लकारे । अप्साताम् । अप्सा अन् इति स्थिते सूत्रम् ।

## आदन्तविद्विषामन उस् वा वक्तव्यः ।

उस्यालोपः । अप्सुः । अप्सान् । पप्सौ पप्सतुः पप्सुः । पप्सिथ-पप्साथ । प्सेयात् । प्सायात्, प्साता, प्सास्यति, अप्सास्यत् । आदन्तानाम् । धृतौ‍ट्सकौ । अप्सासीत् अप्सासिष्टाम् । मा माने । माति, मायात्, मातु । अमात् अमाताम् अमुः । अमान् । ममौ । दादेरे । मेयात्, माता, मास्यति, अमास्यत्, अमासीत् । या प्रापणे । याति, यायात्, यातु । अयात् अयाताम् अयुः । अयान्, ययौ, यायात्, याता, यास्यति, अयास्यत्, अयासीत् । वा गतिगन्धनयोः । वाति । यातिवत् । रा दाने । तद्वत् । ला दानग्रहणयोः । लाति, ललौ तद्वत् । द्रा कुत्सायां गतौ च । द्राति, दद्रौ, द्रायात्, द्रेयात्, द्राता, द्रास्यति, अद्रास्यत्, अद्रासीत् । ख्या प्रकथने । ख्याति, ख्यायात्, ख्यातु, अख्यात्, चख्यौ, ख्यायात्, ख्येयात्, ख्याता, ख्यास्यति, अख्यास्यत् । पुषादित्वात् ङः । आतोऽनपि । अख्यत् । पा रक्षणे । पाति, पायात्, पातु, अपात्, पपौ, पाता, पास्यति, अपास्यत्, अपासीत् । भा दीप्तौ । भाति, बभौ, अभासीत् । ष्णा शौचे । स्नाति, सस्नौ, स्नायात्, स्नेयात्, अस्नासीत् । वश् कान्तौ । व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । इति षत्वम् । ष्टुत्वम् । वष्टि । ग्रहां क्ङिति च । उष्टः

उशन्ति। षत्वम्। षढोः कः से। क्षः। वक्षि उष्ठः उष्ठ। वश्मि उश्व उश्मः। उश्यात् उश्यातां उश्युः। वष्टु उष्टात् उष्टाम् उशन्तु। झसाद्धिर्हेः। झबे जबाः। ष्टुत्वम्। उड्ढि उष्टात् उष्टम् उष्ट। वशानि वशाव वशाम।

आदन्तविद्द्विषाम्। आदन्तः विद् द्विष् एतेषां धातूनाम् अन उस् वा वक्तव्यः। उस्यालोपः। अपुः। अपात्। दिय। पूर्वस्य हसादिः। आतो णप् डौ। पपौ। पप्रतुः। अतः। पप्रिय। पप्राथ। संयोगादे०। प्सेयात्। प्सायात्। प्साता। लङ्लकारे। आदन्तानाम्। अप्सासीत्। मा माने। माति। लिट्लकारे। ममौ। दादेरः। मेयात्। माता। आदन्तानाम्। अमासीत्। अमासिष्ट। अमासिष्टाम् अमासिषुः। समासोऽयम्। या प्रापणे। याति। ययौ। अयासीत्। वा गतिगन्धनयोः। वाति। अयं धातुर्यातिवत् ज्ञेयः। न कश्चित् विशेषः। रा दाने। राति। अयमपि तद्वत्। ला दानग्रहणयोः। लाति। ललौ। अलासीत्। द्रा कुत्सायां गतौ च। द्राति। रः। दद्रौ। संयोगादेः। द्रायात्। द्रेयात्। अद्रासीत्। ख्या प्रकथने। ख्याति कुर्वोपुः। अपानाम्। चख्यौ। संयोगादेः। ख्यायात्। ख्येयात्। अस्य धातोर्लुङ्लकारे पुषादित्वात् लित्पुषादेर्ङः। आतोऽनपि। अनेनाकारस्य लोपः। अख्यत् अख्यताम् अख्यन्। भा दीप्तौ। भाति। अपानां बभौ। अभासीत्। अभासिष्टाम्। अभासिषुः। सुगमत्वात् धातूनाम् एतेषां व्याख्यानं न कृतम्। वश कान्तौ। कान्तिरिच्छा। पूर्ववत् तिबादयः। 'अदादेर्लुक्' अनेन सर्वत्र अपो लुक् भवति। वश् तिप् इति जाते 'छशष' अनेन शस्य षः। 'ष्टुभिः ष्टुः'। अनेन तस्य टः। वष्टि। वश् तस् इति जाते यहांक्ङिति च। अनेन संप्रसारणम्। छशष० ष्टुत्वम्। उष्टः। उशन्ति। वश् सिप् इति स्थिते। छशष० षढोः कः से। क्विलात्०। कषसंयोगे क्षः। वक्षि। उश्यात्। लोट्लकारे वष्टु। वश् हि इति जाते। संप्रसारणम्। झसाद्धिर्हेः। शस्य षत्वम्। षो डः। उड्ढि। उष्टात्। वशानि वशाव वशाम। वश् दिप् इति स्थिते। षत्वम्। वष् दिप्। इति जाते षो डः।

## दिस्योर्हसात् ।

हसादुत्तरयोर्दिप्सिपोर्लोपो भवति । षत्वम् । षो डः । वावसाने । अवट्-अवड् । सम्प्रसारणम् । अडागमः । उश्री । ओश्री औ । औष्टाम् औशन् । अवट्-अवड् औष्टम् औष्ट । अवशम् औश्व औश्म । उवाश ऊशिव ऊशिम । उश्यात् उश्यास्ताम् उश्यासुः । वशिता । वशिष्यति । अवशिष्यत् । अवाशीत् । हन् हिंसागत्योः । हन्ति ।

दिस्योर्हसात । दिश्च सिश्च दिसी तयोः दिस्योः ( ष० द्वि० ) हसात् ( प० ए० ) हसादुत्तरौ यौ दिपसिपौ तयोर्लोपो भवति । अनेनास्य वशो धातो- र्दिस्योर्लोपो भवति । वावसाने । अनेन डस्य टः । अवट् अवड् । वश् ताम् इति स्थिते । ग्रहां क्ङिति च । अनेन संप्रसारणम् । षत्वम् । ष्टुत्वम् । अडागम इयं उश्री । आ औ औ । औष्टाम् । औशन् । अन्यानि सूत्रे सन्ति । वश् णप् इति स्थिते द्वित्व । णवादौ पूर्वस्य । अत उपधायाः । उवाश ग्रहां क्ङिति । अनेन द्वितीयं संप्रसारणम् । ऊशतुः । ऊशुः । उवशिथ । संप्रसारणम् । उश्यात् । लुङ्लकारे । हसादेः अनेन वा वृद्धिः । अवाशीत् । अवशीत् । हन् हिंसागत्योः । पूर्वं तिवादयः । नश्चापदान्ते झसे । अनेन नस्यानुस्वारः । हन्ति । हन् तस् इति स्थिते सूत्रम् ।

## लोपस्त्वनुदात्ततनाम् ।

अनुदात्तानां तनादीनां च अमस्य लोपो भवति क्ङिति झसे परे । तुशब्दात् क्वचिज्झसेऽपि क्यप्प्रत्ययादौ अमस्य लोपः ।

रमिर्यमिनसौ हन्तिरनुदात्ता गमिर्मनिः ।
तनुः क्षण् क्षिण् ऋणुक्षणू वनुर्वमुस्तनादयः ॥

हतः। गमां स्वरे। हनो घ्ने। घ्नन्ति। हंसि हथः हथ। हन्मि हन्वः हन्मः। हन्यात् हन्याताम् हन्युः। हन्तु हतात् हताम् घ्नन्तु।

लोपस्त्वनुदात्ततनाम्। लोपः (प्र० ए०) अनुदात्तश्च तनश्च अनुदात्ततनः। तेषामनुदात्ततनाम् (ष० ब०) अनुदात्तानां धातुपाठोक्तानामनिटां हन्-गन्-नम्-मन्यत्यादीनां तथा तनादीनां तन्-मन्-वन्-षण्-क्षिण्-ऋण्-घृण्-तृण् इत्यादीनां धातूनाम् अमस्य लोपो भवति किति ङिति च झसि परे तुशब्दात् क्वचिदझसेऽपि क्यप्प्रत्ययादौ अमस्य लोपो भवति। अनेन नकारस्य लोपः। हतः। हन् अन्ति इति स्थिते। अप् कर्तरि। अदादेर्लुक्। अनेनापो लुग्भवति। हन् अन्ति। इति जाते। गमां स्वरे। अनेनोपधाया लोपः। हन् अन्ति इति जाते हनो घ्ने। अनेन हस्य घः। स्वरहीनम्। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः। हन्मः। हन्यात्। हन्याताम्। हन्युः। लोट्लकारे। हन्तु। तुह्योः। हतात्। हताम्। गमां स्वरे। हनो घ्ने। स्वरहीन०। घ्नन्तु। हन् हि इति स्थिते सूत्रम्।

## जह्येधिशाधि।

हन्तेर्जहिशब्दोऽस्तेरेधिशब्दः शास्तेः शाधिशब्दो निपात्यते हिविषये। जहि-हतात् हतम् हत। हनानि हनाव हनाम। अहन् अहताम् अघ्नन्। अहन् अहतम् अहत। अहनम् अहन्व अहन्म। हनो घ्ने। वृद्धिः। जघान जघ्नतुः जघ्नुः।

जह्येधिशाधि। जहिश्च एधिश्च शाधिश्च जह्येधिशाधि (प्र० ए०) हिविषये हन इत्यस्य जहि, अस् इत्यस्य एधि, शास् इत्यस्य शाधि एते आदेशा भवन्ति। हिसहितानामेतेषां धातूनां निपाता भवन्तीति ज्ञातव्यम्। अनेन हिसहितस्य हन्धातोरयमादेशः। जहि हतात् हतं हत। हनानि हनाव हनाम। हन् दिप् इति स्थिते। दिस्योर्हसात्। अनेन दिपो लोपो भवति। द्विवा-

दावट्। अनेनाडागमः। अहन्। लोपश्चानुदात्ततनाम्। अनेन नस्य लोपः। अहताम्। गमां स्वरे। हनोघ्नि। अघ्नन्। अहन् अहतम् अहत। अहनम् अहन्व अहन्म। हन् णप् इति स्थिते। द्वित्वे पूर्वस्य हसादिः कुहोश्चुः। हनोघ्न। अत उपधायाः अनेन वृद्धिः। जघान। हन् अतुस् इति स्थिते गमां स्वरे। हनो घ्ने जघ्नतुः जघ्नुः। हन् थस् इति स्थिते। द्वित्व।

## द्विरुक्तस्य हन्तेरपि घत्वं वाच्यम्।

**जघनिथ जघन्थ जघ्नथुः जघ्न। जघान-जघन जघ्निव जघ्निम।**

द्विरुक्तस्य। द्विरुक्तस्य हन्तेर्धातोरप्यपि घत्वं वाच्यम्। अनेन घत्वम्। क्रादिः जघनिथ। अन्यतः। नशापदान्ते। जघन्थ। जघ्न। अन्यानि सुगं सन्ति। हन् यात् इति स्थिते। सूत्रम्। हन्तेः। हन्तेर्धातोः स्याशीर्यादादौ परे सति वधादेशो वक्तव्यः। अनेन वधादेशः। यतः। वध्यात्। वध्यास्ताम् वध्यासुः। लुट् लकारे। नशापदान्ते। हन्ता। हन्तारौ। हन्तारः। हन्तृतः स्यपः। अनेन स्यपि इट् भवति। हनिष्यति। अहनिष्यत। हन् दिप् इति स्थिते। भूते सि। 'हन् सि दिप्' इति जाते।

## हन्तेः स्याशीर्यादादौ वधादेशो वक्तव्यः।

**वध्यात् वध्यास्ताम् वध्यासुः। हन्ता हन्तारौ हन्तारः। हन्तृतः स्यपः। हनिष्यति हनिष्यतः हनिष्यन्ति। 'अहनिष्यत् अहनिष्यताम् अहनिष्यन्।**

हन्तेः। अनेन वधादेशः। तदा। वध् सि दिप् इति जाते। यतः। सिसतो सोस्यपाम्। सेः। णित्वे। अनेन सेर्णित्वात् वृद्धौ प्राप्तायाम्। सूत्रम्।

## जनिवध्योर्न वृद्धिः।

**वधादेशे कृते इट्। अवधीत् अवधिष्टाम् अवधिषुः। अवधीः अवधिष्टम् अवधिष्ट। यु मिश्रणे। गुणः।**

अनिवध्यो: । जनिवध्योर्धात्वोर्वृद्धिर्न भवति अनेन वृद्धिनिषेधः । इट ईटि । अवधीत् । अवधिष्टाम् । अवधिषुः । यु मिश्रणे । पूर्ववत्तिबादयः । अदादेर्लुक् । अनेन लुग् भवति । यु तिप् इति स्थिते । सूत्रम् ।

## ओरौ ।

उकारस्याद्विरुक्तस्य औकारादेशो भवति पिति त्सि अधादौ विषये । यौति युतः । नु धातोः । युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयात् । यौतु-युतात् युताम् युवन्तु । युहि-युतात् युतम् युत । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अयवम् अयुव अयुम । धातोर्नामिनः । युवाव । नाम्यन्त्योर्वः । युयुवतुः युयुवुः । युयविथ युयुवथुः । यूयात्, यविता, यविष्यति, अयविष्यत्, अयावीत् अयाविष्टाम् अयाविषुः । तु गतिवृद्धिहिंसासु ।

ओरौ । ओः ( ष० ए० ) औ ( प्र० ए० ) अद्विरुक्तस्य उकारस्य उकारादेशो भवति पिति त्सि परे । अधादौ विषये । अनेनोकारस्यौकारः । यौति । युतः । नुधातोः । युवन्ति । यूयात् । यौतु । युतात् । युताम् । युवन्तु । युहि । युतात् । युतम् । युत । यवानि । यवाव । यवाम । अयौत् । अयुताम् । अयुवन् । अयौः । अयुतम् । अयुत । अयवम् । अयुव । अयुम । यु णप् । इति स्थिते । द्वित्व । धातोर्नामिनः । अनेन वृद्धिः । युयाव । यु अतुस् इति स्थिते । द्वित्व । नुधातोः । नाम्यन्त्योर्वः । युयुवतुः । युयुवुः । युयविथ । वे । यूयात् । गुणः । सिस्तातासीत्यपाम् । औ अव् । यविता । लुङ्लकारे । सिच्ये । धातोर्नामिनः । अयावीत् अयाविष्टाम् अयाविषुः । तु गतिवृद्धिहिंसादिषु । पूर्ववत्तिबादयः । अदादेर्लुक् । ओरौ । तौति । सूत्रम् ।

## तुरुस्तुशम्यमः सार्वधातुके वा इडुत्तोः हसादीनां चतुर्णामीड्वा ।

तौति-तवीति तुतः-तुवीतः तुवन्ति । तौषि-तवीषि

तुथः-तुवीथः तुथ-तुवीथ । तौमि-तवीमि तुयात्-तुवीयात्, तौतु-तवीतु, तुतात्-तुवीतात् तुताम्-तुवीताम् तुवन्तु । तुहि-तुवीहि । अतौत्-अतवीत्, तुताव, तोता, तोष्यति, अतोष्यत्, अतौषीत् । रु शब्दे । रौति-रवीति रुतः-रुवीतः रुवन्ति । रौषि-रवीषि । रुयात्-रुवीयात्, रौतु-रवीतु रुतात्-रुवीतात् । अरौत्-अरवीत् अरुताम्-अरुविताम् अरुवन् । अरौः-अरवीः । रुराव रुरुवतुः रुरुवुः । रुरविथ । रूयात्, रोता, रोष्यति, अरोष्यत्, अरौषीत् । टु गतौ । भ्वादिकः । दवति. दुयात्, दवतु, अदवत्, दुदाव, दूयात्, दोता, दोष्यति, अदोष्यत् । अदौषीत् अदौष्टाम् अदौषुः । णु स्तुतौ । आदेः ष्णः स्नः । नौति नवीति नुतः-नुवीतः नुवन्ति । नुनाव, नूयात्, नोता, नोष्यति, अनोष्यत्, अनावीत् । टुक्षु शब्दे । टु इत् । क्षौति क्षुतः क्षुवन्ति । क्षुयात्, क्षौतु, अक्षौत् । चुक्षाव चुक्षुवतुः चुक्षुवुः । क्षूयात्, क्षविता, क्षविष्यति, अक्षविष्यत्, अक्षावीत् । क्ष्णु तेजने । क्ष्णौति क्ष्णुतः क्ष्णुवन्ति । क्ष्णुयात्, क्ष्णौतु, अक्ष्णौत्, चुक्ष्णाव, क्ष्णूयात्, क्ष्णविता, क्ष्णविष्यति, अक्ष्णविष्यत्, अक्ष्णावीत् । ष्णु प्रस्नवणे । स्नौति, स्नुयात्, स्नौतु, अस्नौत्, सुस्नाव, स्नूयात्, स्नविता, स्नविष्यति, अस्नविष्यत्, अस्नावीत् । इण् गतौ । गुणः । एति इतः ।

तुरुस्तुभ्यः । तु गतिवृद्धिहिंसासु । रु शब्दे । णुस्तु तौ । ष्टुञ् स्तुतौ । आदिरुक्तानां एषां रुसादीनां चतुर्णाम् सीड् वा भवति । गुणः । नु अव् । तवीति । तुतः । तुधातोः । तुवीतः । तुवन्ति । तुयात् । तुवीयात् । तुयाताम् । तुवीयाताम् । तुयुः । तुवीयुः । लोट्-लकारे । तौतु । तवीतु । तुयात् ।

नुवीतात्। तुताम्। तुवीताम्। तुवन्तु। तुहि। तुवीहि। तुतात्। तुवीतात्। तुतम्। तुवीतम्। तुत तुवीत। तवानि तवाव तवाम। लङ्लकारे अतौत्। अतवीत्। अतुवीताम्। अतुवन्। अतौः। अतवीः। अतुतम्। अतुवीतम्। अतुत अतुवीत। अतवम् अतुव अतुवीव। अतुम अतुवीम। लिट् लकारे। द्वित्वम्। धातोर्नामिनः। अनेन वृद्धिः। तुताव। तुतु अतुस् इति जाते। कुधातोः। नामन्योर्वः। आभ्यामुव् भवति। तुतुवतुः। तुतुवुः। तुतविथ। ये। तूयात्। तोता। लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अतौषीत्। अताष्टाम्। अतौषुः अतौषीः। अतौष्टम्। अतौष्ट। अतौषम्। अतौष्व। अतौष्म। रु शब्दे। पूर्ववत्तिबादयः। अदादेर्लुक्। अनेन तिबादि-चतुर्षु लकारेषु अपो लुग् भवति। अस्य धातोरपि रूपाणि तुधातुवत् ज्ञेयानि। तुरुस्तुभ्यः अनेन सूत्रेण हसादीनां प्रत्ययानां वा इड् भवत्यस्य। औरौ अनेन अखादौ विषये। पिच्चित्सिपरे नकारस्य न कारः। रौति। रवीति। रुयात्। रवीयात्। रौतु। रवीतु। अरौत् अरवीत्। लिट्लकारे धातोर्नामिनः। अनेन प्रथमपुरुषस्यैकवचने वृद्धिः। रराव। नुधातोः। रुरुवतुः। गुणः। ररविथ। ये अनेन पूर्वस्य दीर्घः। रूयात्। गुणः। रोता लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अरौषीत् अरौष्टाम्। अरौषुः। दु गतौ। अयं धातुर्भ्वादिकः। तिबाप् कर्त्तरि। अनेनाप्प्रत्ययो भवति। तस्यादादेर्लुक्। अनेन सूत्रेण लुग् न भवति। भ्वादित्वात्। गुणः। दवति। अन्यानि सूत्रे सन्ति तानि सुगमान्यतो व्याख्यानस्यानावश्यकत्वम्। लिट्लकारे। धातो-र्नामिनः-अनेन वृद्धिर्णित्प्रत्यये परे। दुदाव। नुधातोः। दुदुवतुः। गुणः। दुदविथ। ये। अनेन दीर्घः। दूयात्। गुणः। दोता। लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अदौषीत्। अदौष्टाम्। अदौषुः। णु स्तुतौ। आदेः ष्णः स्नः अनेन णस्य नः। अप् कर्त्तरि। अदादेर्लुक्। अनेन वस्यापो लुग् भवति। औरौ। अनेनोकारस्यौकारः। तुरुस्तुभ्यः। अनेनास्य इड् भवति वा तदा गुणः। अनेन गुण एव। अस्यापि धातो रूपाणि तुधातुवत् ज्ञातव्यानि। नौति। नवीति। लिट्लकारे। नुनाव। नुनुवतुः। नुनुवुः। ये। अनेन दीर्घः। नूयात्। गुणः। नोता। लुङ्लकारे। अनिटो नामिवतः। अनौषीत्। टुक्षु शब्दे। टु इत्। अप कर्त्तरि। अदादेर्लुक्। औरौ। क्षौति। क्षुतः। लिट्लकारे। द्वित्वम्। पूर्वस्य। कुहोश्चुः। धातो-

र्नामिनः। चुक्षाव। नु धातोः। चुक्षुवतुः। ये अनेन पूर्वस्य दीर्घः। क्षूयात्। सिसता० गुणः। ओ अव्। क्षविता। अन्यानि सूत्रे सन्ति। लुङ्लकारे। णित्वे। अनेन सेर्णित्त्वात् वृद्धिः। अक्षावीत्। क्ष्णु तेजने। अयमपि क्षुधातुवत् ज्ञातव्यः। क्ष्णौति। लिट्लकारे। द्वित्व। पूर्वस्य कुहोः। धातोर्नामिनः। अनेन वृद्धिः। चुक्ष्णाव नुधातोः। चुक्ष्णुवतुः। गुणः। चुक्ष्णविथ। यै। क्ष्णूयात्। गुणः। सिसता०। क्ष्णविषीष्ट। लुङ्लकारे। धातोर्नामिनः। अनेन वृद्धिः। अक्ष्णावीत्। अक्ष्णाविष्टाम्। अक्ष्णाविषुः। ष्णु प्रस्रवणे। आदेः ष्णः स्नः। अनेन षस्य सः। पूर्ववत्। तिबादयः। अदादेर्लुक्। ओरौ। अनेन उकारस्यौकारः। स्नौति। लिट्लकारे। सुस्नाव नुधातोः। सुस्नुवतुः। गुणः। सुस्नविथ। ये स्नूयात्। गुणः। सिसता०। ओ अव्। स्नविता। लुङ्लकारे। अस्नावीत्। इण् गतौ। णकार इण् इति सूत्रस्य विशेषणार्थः। पूर्ववत् तिबादयः। अदादेर्लुक्। गुणः। एति। इतः। इ अन्ति इति स्थिते सूत्रम्।

## इणः क्ङिति स्वरे यो वक्तव्यः।

यन्ति। एषि इथः इथ। एमि इवः इमः। इयात् इयाताम् इयुः। एतु-इतात् इताम् यन्तु। इहि-इतात् इतम् इत। अयानि अयाव अयाम। अडागमद्वयम्। ऐत् ऐताम् आयन्। ऐः ऐतम् ऐत। आयम् ऐव ऐम। द्वित्वम्। वृद्धिः पूर्वस्य इयादेशः। इयाय।

इणः। इणो धातोः क्ङिति स्वरे परे (धातोः) यकारो वक्तव्यः। अनेनेकारस्य यकारः। स्वरहीनं। यन्ति। एषि। अस्मिन् रूपे। क्विलात्। अनेन षत्वं भवति। इथः। इथ। एमि। इवः। इमः। इयात्। ऐत्। इहि। गुणः। अयानि। लङ्लकारे गुणः। अडागमद्वयं भवति। एऐऐ। पुनः एऐऐ। ऐत्। अइए। एऐऐ। ऐताम्। अडागमद्वयम्। सवर्णे। इए। आयन्। ऐः। ऐतम्। ऐत। आयम्। इत्यत्र गुणो भवति। इ णप् इति स्थिते। द्विश्च। धातोर्नामिनः। असवर्णे अनेन पूर्वस्य इय्। स्वरहीनं इयाय। इ इ अतुस् इति जाते। नुधातोः। इय् अतुस्। इति जाते। सूत्रम्।

## इण: किति णादौ पूर्वस्य दीर्घो वक्तव्य: ।

ईयतु: ईयु: । इययिथ-इयेथ ईयथु: ईय । इयाय-इयय ईयिव ईयिम । ये । ईयात् ईयास्ताम् ईयासु: । एता एष्यति ऐष्यत् । दादे: पे ।

इण: । इणो धातो: किति णादौ परे पूर्वस्य दीर्घो वक्तव्य: । अनेन इकारस्य दीर्घ: । ईयतु: । ईयु: । गुण: । असवर्णे । ए अय् । ऋादेर्णादे: । इययिथ । अस्तीऽति । इयेथ । ईयथु: ईय । इयाय । णबुत्तम: । गुण: । इयय । ईयिव । ईयिम । ये अनेन पूर्वस्य दीर्घ: । ईयात् । गुण: । एता । अन्यानि मूले सन्ति । लुङ्लकारे । अडागमद्वयम् । ऐष्यत् । इ सि दिप् इति जाते । दादे: पे । अनेन सेर्लोपो भवति । इ दिप् इति जाते सूत्रम् ।

## इणिको: सिलोपे गा वक्तव्य: ।

अगात् अगाताम् अगु: । इक् स्मरणे । इङिकावध्युपसर्गतो न व्यभिचरत: । अध्येति अधीत: अधियन्ति । अधीयात्, अध्येतु । अध्यैत् अध्यैताम् अध्यायन् । अधीयाय, अधीयात्, अध्येता, अध्येष्यति, अध्यैष्यत्, अध्यगात् । इणवत् । विद ज्ञाने । उपधाया लघो: । वेत्ति वित्त: विदन्ति । वेत्सि वित्थ: वित्थ । वेद्मि विद्व: विद्म: ।

इणिको: । इणिकोर्धात्वो: सिलोपे कृते सति गा इत्यादेशो वक्तव्य: । गुरुत्वात्सर्वस्यादेश: । दिबादावट् । अगात् । अगाताम् । अगु: । अमिप् रूपे । आतोऽनपि । अनेनाकारस्य लोपो भवति । अगा: । अगातम् । अगात । अगाम् । अगाव । अगाम । इक् स्मरणे । ककार इणिकोरिति सूत्रस्य विशेषणार्थ: । अधिपूर्वोऽयं नित्यम् । इङिकौ धातू । अध्युपसर्गतो न व्यभिचरत: । गुण: । इयं स्वरे । अध्येति । सवर्णे दीर्घ: । अधीत: । अधियन्ति । इणवदिग् इति वक्तव्यम् । अनेन इणो यानि कार्याणि भवन्ति तानि कार्याणि इकोऽपि भवन्ति । लिट्लकारे । अधीयाय । अधीयतु:

अध्येता। गुणः। अध्येष्यति। लुङ्लकारे। दाद्दः पेः। इणिकोः। अध्यगात्। अध्यगाताम्। आतोऽनपि। अध्यगुः। विद ज्ञाने। पूर्ववत् तिबादयः। अदादेर्लुक्। उपधाया लघोः। अनेन गुणः। 'खसे चपा झपानाम्' अनेन दस्य तः। वेत्ति। 'खसे चपाः' इदं सूत्रं खसे परे सर्वत्र प्राप्नोति। वित्तः विदन्ति। अन्यानि मूले सन्ति। सूत्रम्।

## विदो नवानां त्यादीनां णबादिर्वा।

**विद उत्तरेषां तिबादीनां नवानां णबादिर्नवको वा भवति। वेद विदतुः विदुः। वेत्थ विदथुः विद। वेद विद्व विद्म। विद्यात्, वेत्तु-वित्तात् वित्ताम् विदन्तु। झसाद्धिर्हिः। विद्धि-वित्तात् वित्तम् वित्त। वेदानि वेदाव वेदाम। दिस्योर्हसात्। अवेत्-अवेद् अवित्ताम्। अन उस् वा। अविदन्-अविदुः।**

विदो नवानां त्यादीनां णबादिर्वा। विदः (पं० ए०)। नवानां (ष० ब०) त्यादीनां (ष० ब०) णबादि (प्र० ए०) वा अव्ययम्। पञ्चपदं सूत्रं वर्त्तते। विद ज्ञाने इत्यस्मात्परेषां तिबादीनां नवानां वचनानां णबादिनवकं वा भवति। अनेन तिबादीनां णबादयो भवन्ति। णप् अतुस् इत्यादीनि नव वचनानि वा भवन्ति तिबाद्यर्थे एव। तदा विद णप् इति जाते द्वित्वं। अनेन द्वित्वे प्राप्ते अदादेश्च एति न्यायेन द्वित्वं न भवति। किंतु। अप् कर्त्तरि। अनेनाप् प्रत्ययो भवति। तस्मादादेर्लुक्। अनेन लुग् भवति। उपधाया लघोः। अनेन गुणः। वेद। विदतुः। विदुः। उपधायाः। खसे०। वेत्थ। अन्यान्यस्य लकारस्य मूले सन्ति। विद्यात्। विद्याताम्। लोट्लकारे। वेत्तु। मध्यमपुरुषस्यैकवचने। झसाद्धिर्हिः। अनेन हस्य धः। खरद्दीनं०। विद्धि। अन्यानि सन्ति। विद दिप् इति स्थिते। उपधाया०। दिस्योर्हसात्। अनेन दिप्सिपोर्लोपः। दिबादावट्। वावसाने। अवेत्। अवेद्। खसे०। अवित्ताम्। आदन्त विदिषाम् अनेन वा अन उस् भवति। अविदन्। अविदुः। अविद सिप् इति जाते। दिस्योः। अनेन सिपो लोपः। 'अविद' इति जाते उपधायाः।

## दः सः ।

दकारस्य वा सकारो भवति सिविषये। अवेः-अवेत् अवित्तम् अवित्त। अवेदम् अविद्व अविद्म। विवेद विविदतुः विविदुः। विवेदिथ। पक्षे।

दः सः। दः (ष० ए०) सः (प्र० ए०) दकारस्य सिविषये वा सकारो भवति। अनेन दस्य सः। सोर्विसर्गः। अवेः। सस्याभावे। अवेत्। अन्यानि सन्ति। लिट्लकारे। उपधायाः। विवेद। विविदतुः। विवेदिथ। 'विद्दरिद्रा०' अनेनास्य वा आम्प्रत्ययः। आमि परे सति। 'उपधायाः' अनेन गुणे प्राप्ते सूत्रम्।

## आमि विदेर्न गुणः।

विदाञ्चकार विदामास विदाम्बभूव। विद्यात् विद्यास्ताम्। वेदिता, वेदिष्यति, अवेदिष्यत्, अवेदीत् अवेदिष्टाम् अवेदिषुः। अस् भुवि। अस्ति।

आमि०। आमि परे सति विदेर्धातोर्गुणो न भवति। अनेन गुणनिषेधः। साधनं तु पूर्ववत्। विदाञ्चकार। विदामास। विदाम्बभूव। विद्यात्। विद्यास्ताम्। वेदिता। अन्यानि मूले सन्ति। लुङ्लकारे। उपधाया लघोः। अनेन गुणः। अन्यत्तु पूर्ववत्। अवेदीत्। अवेदिष्टम्। अवेदिषुः। अस् भुवि। भू सत्तायाम्। अर्थादयं धातुः सत्तायां वर्तते इत्यर्थः। पूर्ववत् तिबादयः। अदादेर्लुक्। अनेन लुक्। अस्ति। अस् तस् इति जाते। सूत्रम्।

## नमसोऽस्य।

नम इत्येतस्य विकरणस्यास् भुवीति धातोश्चाकारस्य लोपो भवति ङिति परे। स्तः सन्ति।

नमसोऽस्य। नम् च अस् च नमस् तस्य नमसः (ष० ए०)। अस्य (ष० ए०) द्विपदं सूत्रम्। नम इत्येतस्य रुधादिगणोत्पन्नविकरणस्य अस् भुवि इति धातोश्च

सम्बन्धिनोऽकारस्य ङिति विभक्तौ परतो लोपो भवति। अनेन अकारस्य लोपः। स्तः। नमसोऽस्य। सन्ति। अस् सिप् इति स्थिते। सूत्रम्।

## सि सः।

अस्तेः सकारस्य लोपो भवति सकारे परे। सि स इत्यत्र अस्तेः सलोपः सकारमात्रे न तु पिति। तेन व्यतिसे। असि स्थः स्थ। अस्मि स्वः स्मः। स्यात् स्याताम् स्युः। अस्तु-स्तात् स्ताम् सन्तु। जह्येधि शाधि। एधिस्तात् स्तम् स्त। असानि असाव असाम।

सि सः। अस्तेः सकारस्य लोपो भवति सकारे परे। अनेन सकारस्य लोपे प्राप्ते सिस इत्यत्र अस्तेः सलोपः सकारमात्रे नतु पित्येव। तेन 'व्यतिसे' इति रूपं सिद्धं भवति। अनेनात्र सलोपः। असि। अन्यानि सूत्रे सन्ति। नमसोऽस्य। स्यात्। स्याताम्। स्युः। स्याः। स्यातम्। स्यात। स्यां। स्याव। स्याम। अस्तु। स्तात्। स्ताम्। सन्तु। 'जह्येधिशाधि' एधि। स्तात्। अन्यानि सन्ति। 'अस्, दिप्' इति स्थिते सूत्रम्।

## अस्तेरीट्।

अस्तेः परयोर्दिस्योरिडागमो भवति। आसीत्।

अस्तेरिट्। अस्तेः (ष० ए०) ईट् (प्र० ए०) अस्तेर्धातोः। परयो-र्दिप्सिपोरीडागमो भवति। टित्वादादौ। दिवादावट्। स्वरादेः। आसीत्। अस् ताम् इति जाते।

## लोपागमयोर्मध्ये आगमविधिर्बलवान्।

आस्ताम्। आसन्। आसीः आस्तम् आस्त। आसम् आस्व आस्म।

लोपागमयोर्मध्ये आगमविधिर्बलवान्। तेन प्रथमसङ्गागमद्वयं भवति। पश्चात्

'नमसोऽस्य' अनेन अकारस्य लोपो भवति। आस्ताम्। आसन् आसीः। अन्यानि सन्ति मूले।

## अस्तेरनपि भू वक्तव्यः।

बभूव। मृजूष् शुद्धौ।

अस्तेः। अस्तेर्धातोरनपि भू वक्तव्यः। गुरुत्वात् सर्वस्यादेशः। तेनास्य धातोरनपि भूधातुवत् रूपाणि ज्ञेयानि। बभूव। बभूवतुः। बभूवुः। इत्यादीनि। मृजूष् शुद्धौ। ऊकारषकारौ कार्य्यार्थौ। पूर्ववत् तिबादयः। अदादेर्लुक्। 'मृज् तिप्' इति जाते सूत्रम्।

## मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्या किति ङिति स्वरे वा।

षत्वम् ष्टुत्वम्।

मृजेः। मृजेर्धातोर्गुणनिमित्ते प्रत्यये परे वृद्धिर्भवति किति ङिति स्वरे वा भवति। अनेन वृद्धिः। छशषराजादेः षः। अनेन षत्वम्। ष्टुभिः ष्टुः। अत्र संयोगान्तस्य लोपः। अनेन षकारस्य लोपे प्राप्ते सूत्रम्।

## रात् सस्य।

रेफादुत्तरस्य सस्यैव लोपः स्यान्नत्वन्यस्य। मार्ष्टि मृष्टः मृजन्ति मार्जन्ति। मार्क्षि मृष्ठः मृष्ठ। मार्ज्मि मृज्वः, मृज्मः। मृज्यात्। मार्ष्टु-मृष्टात् मृष्टाम् मृजन्तु-मार्जन्तु। मृड्ढि मृष्टात् मृष्टम् मृष्ट। मार्जानि मार्जाव मार्जाम। अमार्ट्-अमार्ड् अमृष्टाम् अमृजन् अमार्जन्। अमार्ट्-अमार्ड् अमृष्टम् अमृष्ट। अमार्जम् अमृज्व अमृज्म। ममार्ज ममृजतुः-ममार्जतुः ममार्जुः ममृजुः। ममार्जिथ-ममार्ष्ठ ममृजथुः-ममार्जथुः। मृज्यात्, मार्जिता मार्ष्टा,

मार्जिष्यति मार्क्ष्यति, अमार्जिष्यत्-अमार्क्ष्यत्। अमार्जीत् अमार्जिष्टाम् अमार्जिषुः। अमार्क्षीत्। अमार्ष्टाम् अमार्क्षुः। वच् परिभाषणे। वक्ति वक्तः।

रात्सस्य। रात् (पं० ए०) सस्य (प० ए०) रेफादुत्तरस्य सकारस्यैव लोपो भवति नान्यस्य। अनेन षकारस्य लोपो न भवति। मार्ष्टि। मृष्टः। मृजन्ति। मृजेः। अनेन वा वृद्धिः। मार्जन्ति। 'मृज् सिप्' इति स्थिते। मृजेः। व्रश्च-राजादेः। षढोः कः सि। क्षिणात्०। कषसंयोगे चः। मार्क्षि। मृष्टः। अन्यानि सुखं सन्ति। मृज्यात्। मार्ष्टु। मृष्टाम्। मृष्टाम्। मृजन्तु मार्जन्तु। 'मृज् हि' इति स्थिते। हुझल्भ्यो हेर्धिः। व्रश्च। षोडः। ष्टुत्वम्। मृड्ढि। अन्यानि सुखं सन्ति। लिट्लकारे मृजेः। अनेन वृद्धिः। ममार्ज। ममृजतुः। ममृजुः। ममार्जिथ। ऊदितो वा। अनेन इड्विकल्पे सति। मृजेः। व्रश्च०। ष्टुत्वम्। ममार्ष्ठ। ममृजथुः ममृज। ममार्ज। ममृजिव। ममृजिम। मृज्यात्। मृज्यास्ताम्। मृज्यासुः। अस्य धातोरूदित्त्वादिड् वा भवति। मृजेः मार्जिता। इडभावे। वृद्धिः। व्रश्च० ष्टुत्वम्। मार्ष्टा। मार्जिष्यति। 'मृज् स्यप् तिप्' इति स्थिते मृजेः। व्रश्च०। षढोः कः सि। क्षिणात्० कषसंयोगे चः। मार्क्ष्यति। अमार्जिष्यत्। अमार्क्ष्यत्। अमार्जीत्। अमार्जिष्टाम्। अमार्जिषुः। इडभावे। अमार्क्षीत्। झसात्०। व्रश्च०। ष्टुत्वम्। अमार्ष्टाम्। अमार्क्षुः। अमार्क्षीः। अमार्ष्ट अमार्ष्ट। अमार्क्ष्व। अमार्क्ष्व। अमार्क्ष्म। सम्पन्नोऽयं धातुः। वच् परिभाषणे। पूर्ववत्। तिबादयः। अदादेर्लुक्। चोः कुः। अनेन चकारस्य ककारो भवति। वक्ति। वक्तः।

नहि वचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तो-त्युच्चारणीयम्।

वदन्ति। वक्षि वक्थः वक्थ। वच्मि वच्वः वच्मः। वच्यात्, वक्तु वक्तात् वक्ताम्। वग्धि-वक्तात् वक्तम् वक्त। अवक् अवग् अवक्ताम् अवचन्। अवक्-अवग् अवक्तम् अवक्त। अवचम् अवच्व अवच्म। णलादौ पूर्वस्य। उवाच। ऊचतुः

यवराणां यृद्गतः संप्रसारणम्। ऊचतुः ऊचुः। उवचिथ उवक्थ। उच्यात्, वक्ता, वक्ष्यति, अवक्ष्यत्।

न हि वचिरन्तिपरः प्रयोक्तव्यः किं तु वदन्तीत्युच्चारणीयम्। वदन्ति। 'वच् सिप्' इति स्थिते। चोः कुः। क्विलात्०। कषसं०। वचि। चोः कुः। वक्थः। वक्थ। अन्यानि मूले सन्ति। वच्यात्। वच्यातम्। वच्युः। वक्तु। वक्तात्। नहि वचि०। वदन्तु। 'वच् हि' इति स्थिते झसाद्धिर्धिः। चोः कुः। झबे जबाः। वग्धि। लङ्लकारे। चोः कुः। दिस्योर्हसात्। अनेन सेर्लोपो भवति। वावसाने। अवक्। अवग्। अन्यानि मूले सन्ति। लिट्लकारे। द्वित्व पूर्वस्य णबादौ पूर्वस्य। अनेन। पूर्वस्य सम्प्रसारणम्। अत उपधायाः। उवाच। 'यवां०। अनेन द्वितीयं सम्प्रसारणम्। सवर्णे०। ऊचतुः। ऊचुः। उवचिथ। अतवतः। चोः कुः। उवक्थ। चोः कुः। वक्ता। चोः कुः। क्विलात्०। कषसंयोगे षः। वक्ष्यति। अवक्ष्यत्। 'वच् सि दिप्' इति स्थिते। 'अस्यतिवक्ति' अनेन सेङौ भवति। 'वच् दिप्' इति जाते सूत्रम्।

## अस्यतिवक्तीति ङे वचेरुमागमो वक्तव्यः।

ङौ। अवोचत् अवोचताम् अवोचन्। रुदिर् अश्रुविमोचने।

ङे। ङप्रत्यये परे सति वचेर्धातोः उमागमो भवति। सिदन्त्यात्०। ङौ। दिवादावट्। अवोचत्। अवोचताम्। अवोचन्। रुदिर् अश्रुविमोचने। इर् अनुबन्धः। 'इरितो वा' इत्यस्य सूत्रस्य विशेषणार्थः। तिबादयः। अदादेर्लुक्। इत्येतत्सर्वं पूर्ववत्। उपधाया लघोः। अनेन गुणः। सूत्रम्।

## रुदादेश्चतुर्णां हसादेः।

रुदादेः परेषां तिबादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् भवति।

रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा।
जक्षितिश्चैव विज्ञेयो रुदादिपञ्चको गणः॥

रोदिति रुदितः रुदन्ति। रोदिषि रुदिथः रुदिथ। रोदिमि रुदिवः रुदिमः। रुद्यात्। रोदितु-रुदितात् रुदिताम् रुदन्तु। रुदिहि-रुदितात् रुदितम् रुदित। रोदानि रोदाव रोदाम।

रुदादेश्चतुर्णां हसादेः। रुदादेः (प्र० ए०) चतुर्णां (ष० ब०) हश्च वश्च हसौ तौ आदी यस्य स हसादिः तस्य हसादेः (ष० ए०) त्रिपदं सूत्रम्। रुदादेः परस्य चतुर्णां तिबादीनां सम्बन्धिनो हकारादेर्वस्प्रत्याहारादेश्च प्रत्ययस्य इडागमो भवति। टित्त्वादादौ। अनेन स्वरादिरहिते प्रत्यये परे इड़ागमो भवति। रुदादयस्तु मूले श्लोकेनोक्ताः। रोदिति। रुदितः। रुदन्ति। अन्यानि मूले सन्ति। रुद्यात्। रुद्याताम्। रोदितु। रुदिहि। लङ्लकारे। सूत्रम्।

## रुदादेर्दिस्योरीडटौ च वक्तव्यौ।

अरोदीत्, अरोदत्, रुरोद, रुरुदतुः रुद्यात्, रोदिता, रोदिष्यति, अरोदिष्यत्, अरोदीत्। इरितो वा। अरुदत्। ञिष्वप् शये। ञिद्वत्। स्वपिति स्वप्यात् स्वपितु-स्वपितात्। अस्वपीत् अस्वपत् संप्रसारणम्। सुष्वाप सुषुपतुः सुषुपुः। सुष्वपिथ-सुष्वप्थ। सुप्यात्, स्वप्ता, स्वप्स्यति, अस्वप्स्यत्। अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सुः। श्वस् प्राणने। श्वसिति, श्वस्यात् श्वसितु, अश्वसीत्। अश्वसत् अश्वसताम् अश्वसन्। शश्वास शश्वसतुः शश्वसुः। श्वस्यात्, श्वसिता, श्वसिष्यति, अश्वसिष्यत्। ह्मयन्तक्षणेति हृद्धयभावः। अश्वसीत्। अन प्राणने।

रुदादेः। रुदादेर्धातोः परयोर्दिप्सिपोरीडटौ च वक्तव्यौ। इडपवादोऽयम्। अरोदीत्। अरोदत्। उपधायाः। रुरोद। रुरुदतुः रुरोदिथ। रुद्यात्। रुद्यास्ताम्। रुद्यासुः। रोदिता। अन्यानि मूले सन्ति। अरोदीत्। इरितो वा। अनेनास्य वाङ्प्रत्ययो भवति। अरुदत्। अरुदताम्। अरुदन्।

अत्र ङित्वात् गुणाभावः। ञिष्वप् शयने। पूर्ववत् सर्वं भवति। ञि इत्। धात्वादेः षः सः। अनेन सत्वम्। 'रुदादेश्चतुर्णाम्' अनेनात्रापि इट्। स्वपिति। लङ्लकारे। रुदादेर्दिसोः। अस्वपीत्। अस्वपत्। लिट्लकारे द्वित्व। यणादौ पूर्वस्य। अनेन सम्प्रसारणम्। ञ्णित्यात्०। अत उपधायाः। सुष्वाप। यजा०। अनेन द्वितीयं सम्प्रसारणम्। सुषुपतुः। अत्वतः। सुष्वपिथ। सुष्वप्थ। सम्प्रसारणम्। सुप्यात्। सुप्यास्ताम्। स्वप्ता। लुङ्लकारे साव-निटः अनेन नित्यं वृद्धिः। अस्वाप्सीत्। झसात्। अनेन सेर्लोपः। अस्वा-प्ताम्। अस्वाप्सुः। श्वस् प्राणने। अयमपि। पूर्ववत्। श्वसिति। लङ्-लकारे दिप्सिपोरीडटौ भवतः। अश्वसीत् अश्वसत्। लिट्लकारे द्वित्व। पूर्वस्य। अत उपधायाः अनेन वृद्धिः। शश्वास। शश्वसतुः। शश्वसिथ। अत्वतः शश्वस्थ। श्वस्यात्। श्वसिता। अन्येषां रूपाणि मूले सन्ति। लुङ्लकारे 'व्यान्तक्षण०।' अनेन वृद्ध्यभावः। अश्वसीत्। अश्वसिष्टाम्। अश्वसिषुः। अन प्राणने। पूर्ववत् सर्वम्। अनिति। यदायं धातुः प्रपूर्वस्तदा सूत्रम्।

## अनिति।

प्रपूर्वः। उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम्। प्राणिति। अन्यात्, अनितु, आनीत्, आनत्। आन आनतुः आनुः। अन्यात्, अनिष्यति, आनिष्यत्, आनीत् आनिष्टाम् आनिषुः। जक्ष भक्षहसनयोः। जक्षिति जक्षितः।

अनिति। उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम्। अनेन नकारस्यास्य णकारो भवति। सवर्णे०। प्राणिति। लङ्लकारे। रुदादेः। स्वरादेः। आनीत्। आनत्। लिट्लकारे। द्वित्व। सवर्णे०। आन। आनतुः। आनुः। अन्यात्। अन्यास्ताम्। अन्यासुः। अनिता। अन्यानि मूले सन्ति। लुङ्लकारे स्वरादेः परः। अनेन द्वितीयोऽडागमो भवति। आनीत्। आनि-ष्टाम्। आनिषुः। जक्षभक्षहसहनयोः। पूर्ववत् सर्वं भवति। जक्षिति। जक्षितः। 'जक्ष् अन्ति' इति स्थिते सूत्रम्।

## जक्षादेरन्तोऽदन उस्।

जक्षजागृदरिद्राशास्चकास्भ्य: परस्य अन्त अत् अन उस् भवति। जक्षति, जक्षिषि, जक्ष्यात्, जक्षितु, अजक्षीत्, अजक्षत्, जजक्ष, जक्ष्यात्, जक्षिता, जक्षिष्यति, अजक्षिष्यत्, अजक्षीत्। जागृ निद्राक्षये। जागर्ति जागृत: जाग्रति। जागर्षि। जागृयात्, जागर्तु-जागृतात् जागृताम् जाग्रतु। जागृहि-जागृतात् जागृतम् जागृत। जागराणि जागराव जागराम। गुण:। दिस्योर्ईसात्। सोर्विसर्ग:। अजाग: अजागृताम्।

जक्षादेरन्तोऽदन उस्। जक्षादे:। (पं० ए०) अन्त:। (ष० ए०) अत् (प्र० ए०) अन: (ष० ए०) उस (प्र० ए०) पञ्चपदं सूत्रम्। जक्षजागृदरिद्राशास्चकास्भ्य: परस्य अन्त: अत् भवति। अन उस् भवति। जक्षादय: केनचिदाचार्य्येण गणिता: श्लोकेन। जक्षि जागृ दरिद्राति चकास्ति: शास्तिरेव च। दीधीङ् वेवीङ् च विज्ञेयो जक्षादि: सप्तको गण:॥ अनेन अन्ति इत्यस्य अति:। जक्षति। जक्ष्यात्। जक्षितु। जक्षितात्। जक्षिताम्। जक्षादि। जक्षतु। जक्षिहि। रुदादेर्दिर्थो:। अजक्षीत्। अजक्षत्। अजक्षिताम्। अजक्षु:। लिट्लकारे द्वित्वं। पूर्वस्य हसादि: शेष:। जजक्ष जजक्षतु:। जजक्षु:। जजक्षिथ। जक्ष्यात्। जक्ष्यास्तां जक्षिता। लुङ्लकारे। अजक्षीत्। अजक्षिष्टाम्। अजक्षिषु:। जागृ निद्राक्षये। पूर्ववत् तिबादय:। अदादेर्लुक्। गुण:। अनेन गुणो भवति। जागर्ति। जागृत:। ऋरम्। जक्षादि:। जाग्रति। जागर्षि। अत्र 'किलात्०' अनेन षत्वम्। जागृथ: जागृथ। जागर्मि। जागृव:। जागृम:। जागृयात्। जागृयाताम्। जागृयु:। जागर्तु। अन्यानि सूले सन्ति। 'जागृ' दिप् इति स्थिते गुण:। दिस्योर्ईसात्। अनेन दिपो लोपो भवति। सोर्विसर्ग:। दिवादावट्। अजाग:। अजागृताम्। 'जागृ अन्' इति स्थिते जक्षादि:। अनेन अन उस्। सूत्रम्।

## उसिजागर्तेर्धातोर्गुणो वक्तव्यः ।

अजागरुः । अजागः अजागृतम् अजागृत । अजागरम् अजागृव अजागृम । जजागार ।

उसि । उसि परे सति जागर्त्तेर्धातोर्गुणो वक्तव्यः । अनेन गुणः । अजागरुः । अजागः । अजागृतम् । अजागृत । अन्यानि सन्ति सूले । लिट्लकारे । द्वित्वं । सस्वरादिः । जस्त्वः । धातोर्नामिनः अनेन वृद्धिः । जजागार । सूत्रम् ।

## जागर्तः किति गुणो वक्तव्यः ।

जजागरतुः जजागरुः । जजागरिथ जजागरथुः जजागर । जजागार-जजागर जजागरिव जजागरिम । विद् इति पक्षे आम् । जागराञ्चकार, जागरामास, जागराम्बभूव, जागर्यात्, जागरिता, जागरिष्यति, अजागरिष्यत् । ह्म्यन्तक्षणेति न वृद्धिः । अजागरीत् । दरिद्रा दुर्गतौ । दरिद्राति ।

जागर्त्तेः । जागर्त्तेर्धातोः किति प्रत्यये परे गुणो वक्तव्यः । अनेन गुणः । जजागरतुः । अन्यानि सूले सन्ति । 'विद् दरिद्रा' अनेन सूत्रेणास्य वा आम्प्रत्ययो भवति । गुणः । जागराञ्चकार । अन्ये द्वे सूले स्तः । 'जागर्त्तेः' अनेन गुणः । जागर्यात् । जागर्यास्ताम् । जागर्यासुः । गुणः । जागरिता । अन्यानि सूले सन्ति । लुङ्लकारे 'ह्म्यन्तक्षण' अनेनास्य वृद्धेरभावः । किन्तु गुणः । अजागरीत् अजागरिष्टाम् । अजागरिषुः । दरिद्रा दुर्गतौ । पूर्ववत् तिबादयः । अदादेर्लुक् । दरिद्राति । दरिद्रा तस् इति जाते सूत्रम् ।

## दरिद्रातेरिदालोपश्च ङिति ।

दरिद्रातेराकारस्य लोपो भवति ङिति स्वरे परे इकारश्च ङिति हसे परे । दरिद्रितः दरिद्रति । दरिद्रासि दरिद्रिथः दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः । दरिद्रियात् ।

दरिद्रातु-दरिद्रितात् दरिद्रिताम् दरिद्रतु। दरिद्राहि-दरिद्रितात् दरिद्रितम् दरिद्रित। दरिद्राणि दरिद्राव दरिद्राम। अदरिद्रात् अदरिद्रिताम् अदरिद्रुः। अदरिद्राः अदरिद्रितम् अदरिद्रित। अदरिद्राम् अदरिद्रिव अदरिद्रिम।

दरिद्रातेरिदालोपश्च ङिति। दरिद्रातेः (ष० ए०) इत् (प्र० ए०) आलोपः (प्र० ए०)। च अव्ययम्। ङिति (स० ए०) पञ्चपदं सूत्रम्। दरिद्रातिधातोराकारस्य ङिति स्वरे परे लोपो भवति। च ङिति हसे परे आकारस्य लोपो भवति। अनेनाच आकारस्य इकारः। दरिद्रितः। अत्र 'दरिद्रातेः' अनेन आकारस्य लोपः। जक्षादेः। दरिद्रति। अन्यानि मूले सन्ति। अनेनैव प्रकारेण साध्यानि। दरिद्रियात्। दरिद्रातु। अदरिद्रात्। लिट्लकारे। द्वित्वं। सस्वरादिः। आतो णप् डौ। ददरिद्रौ। 'ददरिद्रा अतुम्' इति जाते सूत्रम्।

णप् वुण्सयुटौ हित्वा अन्यस्माद्दरिद्रातेरनप्यालोपो लुङि वा।

ददरिद्रौ ददरिद्रतुः ददरिद्रुः। ददरिद्रिथ ददरिद्रथुः। पक्षे। दरिद्राञ्चकार, दरिद्रात्, दरिद्रिता, दरिद्रिष्यति, अदरिद्रिष्यत्, अदरिद्रीत्, अदरिद्रिष्टाम् अदरिद्रिषुः। पक्षे। अदरिद्रासीत् अदरिद्रासिष्टाम् अदरिद्रासिषुः। शास् अनुशिष्टौ। शास्ति।

णप् वुण् सयुटः। णप् वुण् सयुटः हित्वा अन्यस्मात् दरिद्रातेर्धातोरनपि आकारस्य लोपो भवति लुङ्लकारे वा आकारस्य लोपो भवति। अनेनाकारस्य लोपः। ददरिद्रुः। ददरिद्रिथ। 'विद दरिद्रा' अनेन सूत्रेणास्य धातोर्वा आम्प्रत्ययो भवति। णप्। अनेनाकारस्य लोपः। अन्यत् साधनं तु पूर्ववत् ज्ञेयम्। दरिद्रांचकार। दरिद्रामास। दरिद्रांबभूव। णप् वुण् अनेनाकारस्य लोपः। दरिद्रात्। दरिद्रास्ताम्। दरिद्रासुः। अयं धातुः सेट्। अतः 'सिसना' अनेनेड् भवति। 'णप् वुण्' अनेनाकारस्य लोपः।

दरिद्रिता। दरिद्रिष्यति। अदरिद्रिष्यत्। लुङ्लकारे। अदरिद्रीत्। अदरिद्रिष्टाम्। अदरिद्रिषुः। 'लुङि वा' इत्युक्तत्वात्। वा आकारलोपः। तत्पक्षे। 'आदन्तानां' अनेनेट्सकौ भवतः। अदरिद्रासीत्। अदरिद्रासिष्टाम्। अदरिद्रासिषुः। समाप्तोऽयं धातुः। शास् अनुशिष्टौ। पूर्ववत् तिबादयः। अदादेर्लुक्। अनेनापी लुग् भवति। शास्ति। शास् तस् इति स्थिते सूत्रम्।

## शासेरिः।

शास्तेराकारस्येकारादेशो भवति किति ङिति हसे ङे च परे। वसादेः षः। शिष्टः शासति। शास्सि शिष्ठः शिष्ठ। शास्मि शिष्वः शिष्मः। शिष्यात्। शास्तु शिष्टात् शिष्टाम् शासतु। जहिधिशाधि०। शाधि-शिष्टात् शिष्टम् शिष्ट। शासानि शासाव शासाम।

शासेरिः। शासिः (ष० ए०) इः। (प्र० ए०) शासेर्धातोराकारस्य इकारो भवति किति ङिति हसे ङे च परे। अनेन आकारस्य इकारः। वसादेः षः। अनेन मूर्धन्यः सस्य षः। शिष्टः। शासति अस्मिन् रूपे 'अञ्चादेः' अनेन अन्तोऽन् अन उस्। अन्यानि रूपाणि सन्ति। लोट्लकारस्य मध्यमपुरुषैकवचने। 'जहिधिशाधि' अनेन हिसहितस्य शाधिनिपातो भवति। शाधि। अस्यान्यानि रूपाणि सन्ति। लङ्लकारे 'शास् दिप्' इति जाते। सूत्रम्।

## दिपि सस्य तः सिपि वा।

दिपि परे सस्य तकारो भवति सिपि तु वा भवति। अशात् अशिष्टाम् अशासुः। अशात्-अशाः अशिष्टम् अशिष्ट। अशासम् अशिष्व अशिष्म। शशास शशासतुः शशासुः। शिष्यात्, शासिता, शासिष्यति, अशासिष्यत्। लित्पुषादेर्ङः। शासेरिः। अशिषत्। चकास्ट दीप्तौ। अदत्। चकास्ति चकास्तः चकासति। चकास्यात्। चकास्तु-चकास्तात् चकास्ताम्, चकासतु। भसाद्धेर्धिः।

दिपि सस्य तः सिपि वा। दिपि ( स० ए० ) सस्य ( ष० ए० ) तः ( प्र० ए० ) सिपि । ( स० ए० ) वा ( अव्ययम् )। सकारान्तस्य धातोः सकारस्य दिपि परे तकारो भवति सिपि तु विकल्पेन भवति सस्य तः। अनेन सकारस्य तकारः। दिस्योर्हसात् । अनेन दिपो लोपः। दिवादावट्। अशात्। सिपि परे द्वे रूपे भवतः। वाग्रहणात्। अशात्। अशाः। अन्यानि सूले सन्ति। लिट्लकारे द्विश्च। पूर्वस्य ह्रस्वः। शशास। शशासतुः। शशासिथ। शासिता। शासिष्यति। लुङ्लकारे लितपुषादेर्ङः। अनेन ङप्रत्ययो भवति। शास्त्रिदः। अनेनाकारस्येकारो भवति। घसादेः षः। अनेन सस्य षः। दिवादावट्। अशिषत। अशिषताम्। अशिषुः। चकासृ दीप्तौ। ऋकार इत्। प्रत्ययलकारादि सर्वं पूर्ववत्। चकास्ति। प्रथमपुरुषस्य बहुवचने जक्षादेः अनेन सूत्रेण अन्तः अन् अन उस् भवति। चकासति। चकास्यात्। चकास्तु। अस्य लकारस्य मध्यमपुरुषैकवचने ह्रुधाद्हेर्धिः। अनेन हेर्धिः। 'चकास् धि' इति जाते सूत्रम्।

## धौ सलोपो वाच्यः।

चकाधि। चकास्तात् चकास्तम् चकास्त। अचकात् अचकास्ताम् अचकासुः। अचकात् अचकाः। कासादिप्रत्ययादाम्। चकासाञ्चकार, चकास्यात्, चकासिता, चकासिष्यति, अचकासिष्यत्। अचकासीत् अचकासिष्टाम् अचकासिषुः। इत्यदादिषु परस्मैपदिप्रक्रिया।

धौ०। धिप्रत्यये परे सति सकारस्य लोपो भवति। अनेन सकारस्य लोपः। चकाधि। लङ्लकारे। 'चकास् दिप्' इति स्थिते दिपि 'सस्य तः' अनेन सस्य तः। दिस्योर्हसात्। दिवादावट्। अचकात्। अस्य प्रथमपुरुषस्य बहुवचने जक्षादेः। अनेन अन उस्। अचकासुः। अन्यानि सूले सन्ति। कासादिप्रत्ययादाम्। अनेनास्य धातोराम्प्रत्ययो भवति। चकासांचकार। चकासामास। चकासांबभूव। चकास्यात्। चकास्यास्ताम्। चकास्यासुः। 'सिसता' अनेनेट्। चकासिता। अन्यानि सूले सन्ति। लुङ्लकारे। अचकासीत्। इत्यदादिषु परस्मैपदिप्रक्रिया कथिता।

## अथात्मनेपदिप्रक्रिया ।

चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः स्कोराद्योश्च । ष्टुत्वम् । चष्टे चक्षाते । आतोऽन्तोदनतः । चक्षते । षढोः कः से । चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे । चक्षीत, चष्टाम्, अचष्ट अचक्षाताम् अचक्षत ।

अथात्मनेपदिप्रक्रिया कथ्यते । चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । तबादयः प्रत्यया भवन्ति । अप् कर्त्तरि । अदादेर्लुक् । अनेनापो लुग्भवति तदा चक्षते इति जाते । स्कोराद्योश्च । अनेन ककारस्य लोपः । ष्टुभिः ष्टुः । चष्टे । चक्षाते । आतोऽन्तोदनतः । अनेन अन्तः अत् । चक्षते । चक्ष् से इति जाते स्कोराद्योश्च अनेन कस्य लोपः । षढोः कः से । अनेन षस्य कः । क्विलात् । कषसंयोगे क्षः । चक्षे । चक्ष् ध्वे इति जाते स्कोराद्योश्च । षोडः । चड्ढ्वे । अन्यानि सुगमानि । चक्षीत । चक्षीयाताम् । चक्षीरन् । चष्टाम् । चक्षाताम् । चक्षताम् । स्कोराद्योश्च । ष्टुत्वम् । चष्टाः । अन्यानि तु सुगमान्येव तथापि लिखामि । चक्षायाम् । चड्ढ्वम् । चक्षै । चक्षावहै । चक्षामहै । अचष्ट । अचक्षाताम् । अचक्षत । अचष्टाः । अचक्षायाम् । अचड्ढ्वम् । अचक्षि । अचक्ष्वहि । अचक्ष्महि । 'चक्ष् णप्' इति स्थिते सूत्रम् ।

### चक्षिङोऽनपि ख्याञ् क्शाञौ णादौ वा वक्तव्यौ ।

चख्यौ चख्यतुः चख्युः । चक्शौ चक्शतुः चक्शुः । चचक्षे ख्यायात्, ख्येयात्, क्शायात्, क्शेयात्, ख्यासीष्ट, क्शासीष्ट, ख्याता २, क्शाता २, ख्यास्यति, ख्यास्यते, क्शास्यति, क्शास्यते, अख्यास्यत्, अख्यास्यत, अक्शास्यत्, अक्शास्यत । पुषादित्वान्ङः । अख्यत् ।

चक्षिङ: । चक्षिङ्धातोरनपि विषये ख्याञ्क्शाञौ वक्तव्यौ णादौ वा वक्तव्यौ । गुरुत्वात् सर्वस्यादेशः । अकार उच्चारणार्थः । ख्या णप् इति जाते द्वित्वं । पूर्वस्य हलादिः । कुहोश्चुः । अभ्यासानाम् । आतो णप् औ । चख्यौ । आतोऽनपि । चख्यतुः । चख्युः । अलतः । चख्यिथ । चख्याथ । चख्ये । चख्याते । चख्यिरे । क्शाञादेशे कृते । द्वित्वं । पूर्वस्य । क्षः । कुहोश्चुः । आतोणप्औ । चक्शौ । आतोनपि । चक्शतुः । अलतः । चक्शिथ । चक्शाथ । चक्शे । चक्शाते । चक्शिरे । एतयोः प्रत्यययोर्विकल्पः । तदा चक्ष् णप् इति स्थिते द्वित्वं । पूर्वस्य । चचक्षे । चचक्षाते । चचक्षिरे । संयोगादेरातदन्तस्य । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् । अन्यानि सूत्रे सन्ति । सर्वत्र विकल्पेन ख्याञ्क्शाञौ भवतः । अत एकस्मिंल्लकारे त्रिधा रूपाणि भवन्ति । लुङ्लकारे । लिप्युषादेर्ङः । दिवादावट् । आतोऽनपि । अख्यत् । अख्यताम् । अख्यन् । आत्मनेपदे सूत्रम् ।

## अस्यतिवक्तिख्यातीनामात्मनेपदे सेर्ङो वाच्यः ।

अख्यत । अक्शासीत् अक्शास्ताम् । ईड स्तुतौ । डस्य टपा अभ्यासानाम् । ईट्टे ईडाते ईडते ।

अस्यति० । अस्यतिवक्तिख्यातीनां धातूनामात्मनेपदे सेर्ङो वाच्यः । अनेन सेर्ङः । आतोऽनपि । अख्यत । अख्येताम् । अख्यन्त । क्शाञादेशे कृते । लुङ्लकारे । आदन्तानाम् । अनेनेट् सकौ भवतः अक्शासीत् । अक्शासिष्टाम् । अक्शासिषुः । अक्शास्त । अक्शासाताम् । अक्शासत । अक्शास्थाः । अक्शासाथाम् । अक्शाध्वम् । ईड स्तुतौ । पूर्ववत् तिबादयः । अदादेर्लुक् । ईड् ते इति जाते । डस्य टपा अभ्यासानाम् । अनेन डकारस्य टकारः । टुभिः टुः । ईट्टे । ईडाते । आतोऽन्तोऽदनतः । ईडते । ईड् से इति स्थिते सूत्रम् ।

## ईडीशोः सध्वयोरिड्वक्तव्यः ।

ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे । ईडीत, ईड्ढाम् । ऐट्ट ।

ईडीशोः। ईडीशोर्धात्वोः सध्वयोः प्रत्यययोरिड् वक्तव्यः। अनेनेट्। क्लिलात्०। ईडिषे। ईडाथे। ईड् ध्वे इति जाते पूर्वोक्तेनैव सूत्रेण इट्। ईडिध्वे। अन्यानि मूले सन्ति। लिङ्लकारे। ईडित। ईडीयाताम्। ईडीरन्। इत्यादीनि रूपाणि ज्ञातव्यानि। लोट्लकारे। ईट्टाम् ईडाताम् ईडताम्। ईडीशोः अनेनेट् क्लिलात्०। ईडिष्व ईडाथाम् ईडिध्वम्। लघूपधत्वाभावान्न गुणः। ईडै ईडावहै ईडामहै। लङ्लकारे। ईड् तन् इति जाते। स्वसे चपा०। ष्टुभिः ष्टुः। दिवादावट्। स्वरादेः परः। अइए। एऐऐ। ऐट्ट। ऐडाताम्। ऐडत। ऐट्ठाः। ऐडाथाम्। ऐड् ध्वमिति जाते। ईडीशोः अनेनेटि प्राप्ते सति सूत्रम्।

## लङो ध्वस्य नेट्।

**ऐड्ढ्वम्, ईडाञ्चक्रे, ईडिषीष्ट, ईडिता, ईडिष्यते, ऐडिष्यत, ऐडिष्ट। ईश् ऐश्वर्ये। ईष्टे, ईशिषे। ईशीत ईष्टाम्, ऐष्ट, ईशाञ्चक्रे, ईशिषीष्ट, ईशिता, ईशिष्यते, ऐशिष्यत, ऐशिष्ट। आस् उपवेशने। आस्ते, आसीत, आस्ताम्, आस्त। कासादित्वादाम्। आसाञ्चक्रे, आसिषीष्ट, आसिता, आसिष्यते, आसिष्यत, आसिष्ट। वस् आच्छादने। वस्ते वसीत अवसिष्ट। षूङ् प्राणिगर्भविमोचने। आदेः ष्णः स्नः। सूते, सुवीत, सूताम्।**

लङः। लङ्लकारस्य ध्वप्रत्ययस्य इट् न भवति, अनेन तन्निषेधः। ष्टुभिः ष्टुः। ऐड् ढ्वम्। कासादिप्रत्ययादाम्। अनेन आम् प्रत्ययः। अन्यत् साधनं तु पूर्ववत्। ईडाञ्चक्रे। अन्यानि सुगमानि। ईडिष्ट। अन्यानि मूले सन्ति। अन्येषाम्। लुङ्लकारे। भूतेसिः सिसता०। क्लिलात्०। ष्टुभिः ष्टुः। द्वौ अरागमौ। अइए। एऐऐ। ऐडिष्ट। ऐडिषाताम् ऐडिषत। अन्यानि सुगमानि। ईश् ऐश्वर्ये 'छशष' अनेन शकारस्य षकारः। ष्टुभिः ष्टुः। ईष्टे ईशाते ईशते। 'ईडीशोः' अनेनेट् क्लिलात्०। ईशिषे। ईशाथे ईशिध्वे। ईशे ईश्वहे ईश्महे। ईशीत ईशीयाताम्। ईशीरन्। लोट्लकारे। ईष्टां ईशातां

ईशताम् । 'ईडीशीः' अनेनेट् क्लित् । ईशिष्व ईशाथां ईशिध्वम् । दीर्घोप-धत्वान्न गुणः । ईशै ईशावहै । ईशामहै । लुङ्लकारे । अमागमद्वयं भवति । अन्यत् साधनं तु पूर्ववत् । ऐष्ट । ऐशाताम् । ऐशत । ऐष्टाः । ऐशाथाम् । लङो ध्वस्य । अनेन सूत्रेण इड्निषेधः । छशष० । ष्टुभिः ष्टुः । ऐड्ढ्वम् । लिङ्ल-कारे । कासादिप्रत्ययादाम् । ईशांचक्रे । ईशामास । ईशाम्बभूव । सिसता० । ईशिषीष्ट । अत्र क्लिादनेन फलम् । लुङ्लकारे । अलागमद्वयम् । ऐशिष्ट । ऐशिषाताम् । ऐशिषत । सुगमोऽयं धातुः । आस् उपवेशने । अप्कर्तरि । अदादेर्लुक् । आस्ते । आसाते । आसते । अत्र आतोऽन्तोदनतः । अनेन अन्तः अत् । आसीत । आसीयाताम् । आसीरन् । आस्ताम् । आसाताम् । आतोन्तोऽदनतः । आसताम् । आस्त आसाताम् आसत । कासादिप्रत्यया-दाम् । आसाचक्रे । आसामास । आसाम्बभूव । 'सिसता' अनेनेट् । आसि-षीष्ट । अन्येषां सन्ति सूत्रे रूपाणि । तानि सुगमान्येव । अतो व्याख्यानं न कृतम् । लुङ्लकारे द्वौ अटौ । सवर्णे । आसिष्ट । आसिषाताम् । आसिषत । वस् आच्छादने । अप् कर्त्तरि । अदादेर्लुक् । इत्यादि सर्वं पूर्ववत् । तआदयः प्रत्यया भवन्ति । वस्ते । वसाते । वसते । वसीत । वसीया-ताम् । वसीरन् । वस्ताम् । वसाताम् । वसताम् । आतोऽन्तोदनतः । अनेन अन्तः अत् । पूर्वरूपम् । वस्ताम् । वसाताम् । वसताम् । अन्यानि सुग-मानि । लिट्लकारे । द्वित्वं । पूर्वस्य हसादिः । लोपः पचां किति चास्य । अनेन सूत्रेण यत्वपूर्वलोपौ प्राप्तौ । वादित्वान्न भवतो यत्वपूर्वलोपौ । ववसे । ववसाते । ववसिरे । क्रादिभ्योऽदिः । अनेनेट् । क्लित० । ववसिषे । अन्यानि सुगमानि । 'सिसता' अनेनेट् । क्लित्० । वसिषीष्ट । वसिता । वसि-ष्यते । अवसिष्यत् । लुङ्लकारे । अवसिष्ट । अवसिषाताम् । अवसि-षत । अत्र । आतोऽन्तोदनतः । अनेन अन्त अत् भवति । अन्यानि सुग-मानि । षूङ् प्राणिगर्भविमोचने । पूर्ववत् सर्वम् । आदेः ष्णः स्नः । अनेन षस्य सः । सूते । सुधातोः । अनेन उव् । सुवाते । आतोऽन्तोदनतः । सुवते । क्लित्० । सूषे । सुवाथे । सूध्वे । सुवे । सूवहे । सूमहे । सुधातोः । सुवीत । सुवीयाताम् । सुवीरन् । सूताम् । सुधातोः । सुवाताम् । आतो-न्तोद० । सुवताम् । क्लित् । सूष्व । सुवाथाम् । सूध्वम् । 'सू ऐप्' इति जाते । गुणः । अनेन गुणे प्राप्ते तन्निषेधकृत् सूत्रम् ।

## सूतेः पिति गुणाभावो वाच्यः ।

सुवै सुवावहै सुवामहै । असूत, सुषुवे, स्वरति० । इति वेट् । सविषीष्ट-सोषीष्ट, सविता-सोता, सविष्यते-सोष्यते, असविष्यत, असोष्यत, असविष्ट-असोष्ट । शीङ् स्वप्ने ।

सूतेः । सूतेर्धातोः पिति प्रत्यये परे गुणस्य अभावो वाच्यः । किं तु नु धातोः । अनेन उव् भवति । सुवै । सुवावहै । सुवामहै । लङ्लकारे । असूत । असुवाताम् । आतोन्तो० । असुवत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे द्वित्वं । सस्वरादिः । क्विलात्० । गुधातोः । सुषुवे । सुषुवाते । सुषुविरे । इत्यादीनि । स्वरति सूयति । अनेनास्य धातोरिड्विकल्पः । स्मिसता । गुणः । ओ अव् । सविषीष्ट । इडभावे गुणः । सोषीष्ट । अन्येषां लकाराणां द्वे रूपे स्तो स्तः । लुङ्लकारे । स्मिसता० । अनेनेट् । पूर्वं भूते सिः । अनेन सिप्रत्ययः । क्विलात्० । षुत्वम् । दिवादावट् । असविष्ट । असविषाताम् । असविषत । इडभावे । असोष्ट । असोषाताम् । असोषत । इत्यादीनि रूपाणि ज्ञातव्यानि । शीङ् स्वप्ने । ङकार आत्मनेपदार्थः ।

## शीङः सर्वत्र गुणो भवत्यपि विषये ।

शेते शयाते ।

शीङः । शीङो धातोः सर्वत्र अपि विषये गुणो भवति । अनेनास्य धातोः सर्वत्र गुणो भवति । शेते । ए अय् । शयाते । गुणे कृते । 'झि अन्त' इति जाते आतोऽन्तोऽदनतः । शे अते । इति जाते सूत्रम् ।

## शीङोऽतो रुट् ।

शीङः परस्यादित्येतस्य रुडागमो भवति । शेरते, शयीत । शेताम् शयाताम् शेरताम् । अशेत अशयाताम् अशेरत । शिश्ये शिश्याते । शयिषीष्ट, शयिता, शयिष्यते, अशयिष्यत, अशयिष्ट । इङ् अध्ययने । अधिपूर्वः । अधीते अधीयाते

**अञ्चो यवे। अधीयीत। अधीताम् अधीयाताम् अधीयताम्। अध्यैत। इयादेशे कृते पश्चादडागमश्चयम्। अध्यैयाताम् अध्यैयत।**

शीङोऽतोरुट्। शीङः (पं० ए०) अतः (ष० ए०) रुट् (प्र० ए०) शीङ् धातोः परस्य अत् इत्येतस्य रुडागमो भवति। टित्वादादौ। टकारः इत्कार्यार्थः। उकार उच्चारणार्थः। शेरते। शेषे। शयाथे। शेध्वे। इत्यादीनि रूपाणि ज्ञातव्यानि। तानि सुगमान्येव। शयीत। शयीयाताम्। शयीरन्। शेताम्। शयाताम्। शीङोऽतोरुट्। अनेन रुट्। शेरताम्। अशेत। अशयाताम्। रुडागमः। अशेरत। अन्यानि सुगमानि। लिट्-लकारे द्वित्वम्। हलादिः। ह्रस्वः। नुधातोः। अनेन यकारः। शिश्ये। शिश्याते। शिश्यिरे। अन्यानि सुगमानि। गुणः। ए अय्। शयिषीष्ट। अत्र किलात्०। अनेन सकारस्य षकारो भवति। लुङ्लकारे। अशयिष्ट। अशयिषाताम्। अशयिषत। इत्यादीनि रूपाणि ज्ञातव्यानि। इङ् अध्ययने। अयं धातुर्नित्यमधिपूर्वः। ङकार आत्मनेपदार्थः। सवर्णे दीर्घः सह। अधीते। अधि इ आते इति जाते 'नुधातोः' अनेन अय्। सवर्णे। अधीयाते। अधीयते। अधीषे। किलात्०। अनेन षकारः। अधीयाथे। अधीध्वे। अधीये। अधीवहे। अधीमहे। अधीयीत। अधीयीयाताम्। अधीयीरन्। लोट्-लकारे। अधीताम्। अधीयाताम् अधीयताम्। लङ्लकारे। अधि इ तन् इति जाते। दिवादावट्। स्वरादेः। अनेन द्विर्तीयोऽडागमः। अट्ए। एएरे। इय स्वरे। अध्यैत। इयादेशे कृते पश्चादडागमश्चयम्। अध्यैयाताम्। अध्यैयत। अध्यैथाः। अन्यानि सुगमानि। पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। लिट्-लकारे। अधि इ एश् इति स्थिते। सूत्रम्।

## इङो णादौ गा वक्तव्यः।

**अधिजगे, अध्यैषीष्ट, अध्येता, अध्येष्यते, अध्यैष्यत।**

इङः। इङो धातोर्णादौ परे गा इत्यादेशो वक्तव्यः। गुरुत्वात् सर्वादेशः। अधि गा एश् इति जाते द्वित्वम्। ह्रस्वः। कुहोश्चुः। आतोऽनपि। अनेन

आकारस्य लोपो भवति। अधिजगे। अधिजगाते। अधिजगिरे। इत्यादीनि। अध्येषीष्ट। अध्येता। अध्येष्यते। अडागमद्वयम्। अध्येष्यत। अध्यैष्येताम्। अध्यैष्यन्त। इत्यादीनि।

**इङो वा गी सौ लुङि च तत्परस्य प्रत्ययस्य ङित्त्वं वाच्यम्।**

ङित्त्वाद्गुणो न। अध्यगीष्यत अध्यगीष्येताम् अध्यगीष्यन्त। अध्यैष्यत। अध्यगीष्ट अध्यगीषाताम् अध्यगीषत। अध्यैष्ट अध्यैषाताम् अध्यैषत। इत्यदादिष्वात्मनेपदिप्रक्रिया।

इङो०। इङ्धातोर्वा गी इत्यादेशो भवति सौ परे च लुङि विषये। तस्मात् परस्य प्रत्ययस्य ङित्त्वं वाच्यम्। अनेन गी इत्यादेशः। ङित्त्वाद्गुणाभावो भवति। अध्यगीष्यत। अध्यगीष्येताम् अध्यगीष्यन्त। लुङ्लकारे। 'इङोवा' अनेन गीरादेशः। अते सिः। क्विलात्०। षुत्वम्। अध्यगीष्ट। अध्यगीषाताम्। अध्यगीषत। अन्यानि सुगमानि। गीरादेशाभावे अडागमद्वयम्। गुणः। एणि। इदं स्वरे। अध्यैष्ट। अध्यैषाताम्। अध्यैषत। इत्यादीनि रूपाणि ज्ञातव्यानि। इत्यात्मनेपदिप्रक्रिया समाप्तिं प्राप्ता।

---

## अथोभयपदिप्रक्रिया प्रदर्श्यते।

द्विष् अप्रीतौ। अकार उभयपदार्थः। द्वेष्टि, द्विष्टे, द्विष्यात्, द्विषीत, द्वेष्टु, द्विष्टात्, द्विष्टाम्, अद्वेट्-अद्वेड् अद्विष्टाम् अद्विषुः, अद्विषन्, अद्विष्ट, दिद्वेष, दिद्विषे, द्विष्यात्, द्विक्षीष्ट, द्वेष्टा, द्वेक्ष्यति, द्वेक्ष्यते, अद्वेक्ष्यत्, अद्वेक्ष्यत। हश्षान्तात्सक्। अद्विक्षत् अद्विक्षताम्।

अथोभयपदिप्रक्रिया प्रदर्श्यते। द्विष् अप्रीतौ। अकार उभयपदार्थः। नियमादस्य आदयश्च प्रत्यया भवन्ति। अप् कर्त्तरि। अनेन चतुर्षु लकारेषु

अप्प्रत्ययो भवति। अदादेर्लुक्। अनेन तस्य लुग् भवति। 'द्विष् तिप्' इति जाते गुणः। ष्टुभिः ष्टुः। द्वेष्टि। द्विष्टः। द्विषन्ति। 'द्विष् सिप्' इति स्थिते गुणः। षढोः कः सि। अनेन षस्य कः। क्विलात्०। कष-संयोगे०। द्वेक्षि। द्विष्ठः। द्विष्ठ। द्वेष्मि। द्विष्वः। द्विष्मः। द्विष्टे। द्विषाते। द्विषते। द्विष्यात्। द्विष्याताम्। द्विष्युः। द्विषीत। द्विषी-याताम्। द्विषीरन्। द्वेष्टु। द्विष्टात्। द्विष्टाम्। द्विषन्तु। 'द्विष् हि' इति जाते झलाद्धेर्धिः। षोडः। ष्टुत्वम्। द्विड्ढि। द्विष्टात्। द्वेषाणि। द्वेषाव। द्वेषाम। द्विष्टाम्। द्विषाताम्। द्विषताम्। इत्यादीनि। द्विष् तिप् इति जाते। गुणः। षोडः। दिस्योर्हल्ङ्यात्। वावसाने। दिवादावट्। अनेन पूर्वमडागमः। अद्वेट्। अद्वेड्। अद्विष्टाम्। आदन्तविदद्विषाम्। अनेन वा झेः जुस् भवति। अद्विषुः। अद्विषन्। अन्यानि सुगमानि। आत्म-नेपदे। अद्विष्ट। अद्विषाताम्। अद्विषत। 'द्विष् णप्' इति स्थिते। द्वित्व। पूर्ववत्। उपधाया लघोः। अनेन गुणः। दिद्वेष दिद्विषतुः। दिद्विषुः। दिद्वेषिथ। दिद्विषे। दिद्विषाते। दिद्विषिरे। द्विष्यात्। द्विक्षीः। अनेन गुणनिषेधः। षढोः कः सि। क्विलात्०। कषसंयोगे०। द्विक्षीष्ट। द्वेष्टा। उपधाया लघोः। अनेन गुणः। द्वेष्टा। अन्येषां लकाराणां रूपाणि सुग-मानि। लुङ्लकारे। शल इगुपधादनिटः क्सः। अनेन क्सप्रत्ययो भवति। क्ङिति च गुणाभावः। षढोः कः सि। क्विलात्०। कषसं०। अद्विक्षत्। अद्विक्ष-ताम्। अद्विक्षन्। आत्मनेपदेऽपि क्सप्रत्ययो भवति। अद्विक्षत।

**क्सस्यात्मनेपदे स्वरे टिलोपो वाच्यः।**

**अद्विक्षाताम् अद्विक्षन्त। दुह् प्रपूरणे। दादेर्धः। दोग्धि दुग्धः दुहन्ति। धोक्षि दुग्धः दुग्ध। दोह्मि दुह्वः दुह्मः। दुग्धे, दुह्यात्, दुहीत, दोग्धु।**

आत्मनेपदे स्वरे टिलोपो वाच्यः। अनेन टेर्लोपः। अद्विक्षाताम्। अद्वि-क्षन्त। अद्विक्षथाः। अद्विक्षाथाम्। अन्यानि सुगमानि। दुह् प्रपूरणे। अकार उच्चारणार्थः। 'दुह् तिप्' इति जाते दादेर्धः। अनेन हस्य घः। उपधाया लघोः। अनेन सर्वत्र गुणनिमित्ते प्रत्यये परे गुणो भवति। 'दोह्

तिप्' इति जाते तथोर्धः। झबेजबाः। दोग्धि। दुग्धः। दुहन्ति। दुह सिप्। इति जाते दादेर्घः। आदिजबानाम्। उपधायाः। खसेचपा०। क्तिलात्। कषसंयोगे चः। धोक्षि। अन्यानि सूत्रे सन्ति। दुग्धे। दुहाते। दुहते। अत्र आतोऽन्तोऽदनतः। अनेन अन्तः अत्। दुह्यात्। दुह्याताम्। दुह्युः। दुहीत। दुहीयाताम्। दुहीरन्। दोग्धु। दुग्धात्। दुग्धाम्। दुहन्तु।

## हकारस्य क्वचिज्झस्भावो वाच्यः।

दुग्धि दुग्धाम्। अधोक् अधोग् अदुग्धाम् अदुहन्। अदुग्ध, दुदोह, दुदुहे, दुह्यात्, धुक्षीष्ट, दोग्धा, धोक्ष्यति, धोक्ष्यते, अधोक्ष्यत्, अधोक्ष्यत, अधुक्षत्, अधुक्षत।

हकारस्य क्वचित् स्थाने झस्भावो वाच्यः। अनेन हकारो झस्वत् ज्ञातव्यः। दादेर्घः। अनेन घत्वम्। झसाद्धिर्धिः। झबे जबाः। दुग्धि। दुग्धात्। दुग्धम्। दुग्ध। उपधायाः। दोहानि। दोहाव। दोहाम। दुग्धाम्। दुहाताम्। दुहताम्। दुहस्व। इति जाते दादेर्घः। आदिजबानाम्। [illegible] झसानाम्। क्तिलात्०। कषसंयोगे०। धुक्ष्व। दुहाथाम्। धुग्ध्वम्। दोहै। दोहावहै। दोहामहै। 'दुह् दिप्' इति जाते दादेर्घः। गुणः। दिस्योर्हसात्। आदिजबानाम्। वावसाने। दिबादावट्। अधोक्। अधोग्। अदुग्धाम्। अदुहन्। अधोक्। अधोग्। अदुग्धम्। अदुग्ध। गुणः। अदोहम्। अदुह्व। अदुह्म। अदुग्ध। अदुहाताम्। अदुहत। अदुग्धाः। इत्यादीनि रूपाणि ज्ञेयानि। लिट्लकारे द्वित्वं। पूर्वस्य। उपधाया लघोः। दुदोह। दुदुहतुः। उपधाया लघोः। दुदोहिथ। इत्यादीनि आत्मनेपदे। दुदुहे। दुदुहाते। दुदुहिरे। इत्यादीनि रूपाणि ज्ञातव्यानि वैयाकरणैः। दुह्यात्। दुह्यास्ताम्। दुह्यासुः। दुह् सीष्ट इति स्थिते। दिस्योः अनेन गुणनिषेधः। दादेर्घः। आदिजबानाम्। खसे चपा०। क्तिलात्०। कषसंयोगे। धुक्षीष्ट। दुह् ता इति स्थिते। धत्वम्। गुणः। तथोर्धः। झबेजबाः। दोग्धा। दोग्धा। दुह् स्यप् तिप् इति जाते धत्वम्। गुणः। आदिजबानाम्। खसेचपा०। षत्वम्। कषसंयोगे चः। धोक्ष्यति। धोक्ष्यते। अधोक्ष्यत्। अधोक्ष्यत। लुङ्लकारे। हशषान्तात् सक् अनेन सक् प्रत्ययो

भवति । सिविषये कित्वादगुणाभावः । घत्वम् । धत्वम् । कत्वम् । क्विलात्० । कषसंयोगे क्षः । अधुक्षत् । अधुक्षताम् । अधुक्षन् । आत्मनेपदे । अधुक्षत ।

**दुह्दिह्लिहगुह्भ्यः सको लुग्वा वकारत-वर्गयोरादि ।**

अदुग्ध अधुक्षाताम् अधुक्षत । अदुग्धाः-अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षावहि-अदुह्वहि अधुक्षामहि । दिह् उपचये । देग्धि । तद्वत् । लिह आस्वादने । ह्रोढः । लेढि । तद्वत् । ष्टुञ् स्तुतौ । आदेः ष्णः स्नः । ओरौ । स्तौति-स्तुवीति स्तुतः-स्तुवीतः स्तुवन्ति । स्तुते-स्तुवीते स्तुयात-स्तुवीयात् । स्तौतु-स्तुवीतु स्तुतात्-स्तुवीतात् स्तुताम्-स्तुवीताम् स्तुवन्तु । स्तुहि-स्तुतात् स्तुवीहि स्तुवीतात् । अस्तौत्, अस्तवीत् अस्तुताम् अस्तुवीताम् अस्तुवन् । अस्तुत अस्तुवीत । तुष्टाव । तुष्टुवतुः तुष्टुवुः । क्रादित्वान्नेट् । तुष्टोथ । तुष्टुवथुः तुष्टुव । तुष्टाव तुष्टुव तुष्टुम । तुष्टुवे, स्तूयात्, स्तोषीष्ट, स्तोता, स्तोता, स्तोष्यति, स्तोष्यते, अस्तोष्यत्, अस्तोष्यत ।

दुह्दिह्लिह्गुह्भ्यः । अनेन सको लुक् । 'अदुह् तन्' इति जाते घत्वम् । तथोर्धः । झषे जवाः । अदुग्ध । सस्यात्मने० । अनेन टिलोपः । अधुक्षाताम् । अधुक्षत । थकारे परेऽपि सको लुग् भवति । विकल्पेनैव लुकि सति । 'अदुह् थास्' इति जाते । वत्वम् । तथोर्धः । झषे जवाः । अदुग्धाः । अधुक्षथाः । अधुक्षाथाम् । ध्वे परेऽपि सको लुक् । अदुग्धम् । अधुक्षध्वम् । अधुक्षि । अधुक्षावहि । अधुक्षामहि । समाप्तोऽयं धातुः । दिह उपचये । अयं धातुः पूर्ववत् । लिह आस्वादने । आस्वादनमीषद्भक्षणम् । पूर्ववत् प्रत्यया भवन्ति । अदादेर्लुक् । लिह् तिप् इति जाते ह्रोढः । तथोर्धः । ष्टुत्वम् । उपधायाः । ढिढोलोपः । दीर्घश्च । लेढि । लीढः । लिहन्ति । आत्मनेपदे लीढे । लिहाते । लिहते । लिह्यात् । लिहीत । लोट्लकारे । लेढु । लीढात् ।

लीढाम्। लिहन्तु। 'लिह् हि' इति स्थिते। अत्र झस्परत्वाभावात् 'हो ढः' अनेन ढत्वं न भवति। परम् क्वचिदपदान्तेऽपि पदान्तताश्रयणीया। अनेन पदान्तत्वमाश्रित्य हो ढः। अनेन ढकारो भवति। अथवा हौ हकारोऽपि झस्वत्। इति सरस्वतीकण्ठाभरणे उक्तत्वात् ढत्वं भवति। झसाद्धिर्हिः। ष्टुत्वम्। ढि ढो लोपः। लीढि। लीढात्। लीढम्। लीढ। लेहानि। लेहाव। लेहाम। लीढाम्। लिहाताम्। लिहताम्। लङ्लकारे। हो ढः। दिवादावट्। उपधाया लघोः। दिस्योर्हसात्। वावसाने। अलेट्। अलेड्। अलीढाम्। अलिहन्। इत्यादीनि। अलीढ। अलिहाथाम्। आतोऽन्तोऽदनतः। अलिहत। लिट्लकारे। द्वित्वम्। पूर्वस्य। उपधाया लघोः। लिलेह। लिलिहतुः। लिलिहुः। लिलिहे। लिलिहाते। लिलिहिरे। लिह्यात्। लिह्यास्ताम्। लिह्यासुः। लिह् सीष्ट इति स्थिते। क्सिद्धेः। अनेन गुणाभावः। हो ढः। षढोः कः से। किलात्०। कष०। लिक्षीष्ट लिक्षीयास्ताम्। लिक्षीरन्। लिह् ता इति स्थिते। हो ढः। उपधाया लघोः। तथोर्धः। ष्टुत्वम्। ढि ढो लोपः। लेढा। आत्मनेपदेऽपि। लेढा। लेढारौ। लेढारः। लृट्लकारे। लिह् स्यप् तिप् इति स्थिते। ढत्वम्। गुणः। कत्वम्। षत्वम्। कपसंयोगे०। लेक्ष्यति। लेक्ष्यते। अलेक्ष्यत्। अलेक्ष्यत। लुङ्लकारे। हशषान्तात्सक्। कित्त्वाद् गुणाभावः। अन्यत् साधनं पूर्ववत्। अलिक्षत् अलिक्षताम् अलिक्षन्। आत्मनेपदे। अलिक्षत। दुहदिहलिह० अनेन सको लुक्। अन्यत्साधनं पूर्ववत्। अलीढ। सस्यात्मने०। अलिक्षाताम्। अलिक्षत। साध्योऽयं धातुर्दुह्धातुवत्। ष्टुञ् स्तुतौ। जकार उभयपदार्थः। आदेः ष्णः स्नः। उतो तुरुस्तुभ्यः। अनेन ईट्। यत्र ईट् भवति तत्र गुणः। स्तौति। उ अव्। स्तवीति। स्तुतः। स्तुवीतः। उधातोः। स्तुवन्ति। इत्यादीनि। स्तुते। स्तुवीते। स्तुवाते। स्तुवते। स्तुयात्। स्तुवीयात्। स्तुयाताम्। स्तुवीयाताम्। स्तुयुः। स्तुवीयुः। लोट्लकारे। स्तौतु। स्तवीतु। स्तुतात्। स्तुवीतात्। स्तुवन्तु। इत्यादीनि रूपाणि ज्ञातव्यानि। स्तुताम्। स्तुवीताम्। स्तुवाताम्। स्तुवताम्। लङ् लकारे। अस्तौत्। अस्तवीत्। अस्तुताम्। अस्तवीताम्। उधातोः। अस्तुवन्। अस्तुत। अस्तुवीत। अस्तुवाताम्। आतोऽन्तो०। अस्तुवत। इत्यादीनि। लिट्लकारे द्वित्वम् झसात् खपाः। अनेन तकारः शेषः। षत्वम्। धातोर्नामिनः।

अनेन वृद्धिः। तुष्टाव। नुधातोः। तुष्टुवतुः। तुष्टुवुः। क्रादित्वात्। अस्य धातोः थपि इडागमो न भवति। गुणः। तुष्टोथ। अन्यानि मूले सन्ति। तुष्टुवे। तुष्टुवाते। तुष्टुविरे। अन्यानि सुगमानि। ये। अनेन पूर्वस्य दीर्घः। स्तूयात्। गुणः। षत्वम्। स्तोषीष्ट। स्तोता। स्तोता। लुङ्लकारे।

## स्तुसुधूञ्भ्यां पे सेरिट् वक्तव्यः।

### अस्तावीत् अस्तोष्ट। ब्रूञ् व्यक्तायां वाचि।

स्तुसुधूञाम्। स्तुसुधूञां धातूनां परस्मैपदे सिप्रत्ययस्य इड् वक्तव्यः। धातोर्नामिनः। अनेन वृद्धिः। अस्तावीत्। अस्ताविष्टाम्। अस्ताविषुः। इत्यादीनि। अस्तोष्ट। अस्तोषाताम्। अस्तोषत। ब्रूञ् व्यक्तायां वाचि। ञकारः सर्वत्र उभयपदार्थः। अप्प्रत्ययो भवति। तस्य लुग् भवति।

## अबादावीप्पिति त्स्मि।

### ब्रुव ईकारः प्रत्ययो भवति तकारसकारमकारादौ पिति परे अबादौ विषये। ब्रवीति ब्रूतः ब्रुवन्ति। ब्रवीषि ब्रूथः।

अबादावीप्पिति त्स्मि। अबादौ (स० ए०) ईप् ( प्र० ए० ) पिति ( स०ए०) त् च स् च म् च त्स्म् तस्मिन् त्स्मि ( स० ए० ) चतुःपदं सूत्रम्। यद्वा द् च त् च स् च म् च्। त्स्म्। तस्मिन्। त्स्मि। खसेचपा०। अनेन दस्य तः। तेन दकारे परेऽपि ईप् प्रत्ययः। ब्रूञ्धातोस्तकारसकारमकारादौ पिति परे ईप् प्रत्ययो भवति। अबादौ विषये। अचाप् विषये। इत्येव वक्तव्ये। आदिशब्दश्चिन्त्यः। यद्वा। अप् आदिः प्रथमो यस्य स अबादिः। अब्लुक् इत्यर्थः। तस्मिन्नबादौ अपा लुकि कृते सति इत्यर्थः। अनेनेकारः प्रत्ययो भवति। गुणः। ओ अव्। ब्रवीति। ब्रूतः। नुधातोः। ब्रुवन्ति। षत्वम्। ब्रवीषि। ब्रूथः।

## आहस्थ पञ्चानाम्।

### ब्रुव उत्तरेषां तिवादीनां पञ्चानां णबादयः पञ्चादेशा भवन्ति। ब्रुव आहस्थादेशो भवति। आह आहतुः आहुः।

आहस्थ पञ्चानाम्। आह: ( प्र० ए० ) च ( अव्ययम् ) पञ्चानां ( ष० ब० ) ब्रूञ्धातोरुत्तरेषां तिबादीनां पञ्चानां णबादय: पञ्चादेशा भवन्ति। ब्रुवो धातो-राहश्च आदेशो भवति। यदादेश:। अनेन न विलम्। आह। आहतु:। आहु:। आह् थप्। इति जाते सूत्रम्।

## तस्थे।

**आहो हकारस्य तकारादेशो भवति थे परे आत्थ आहथु: ब्रूथ। ब्रवीमि। ब्रूव: ब्रूम:। ब्रूयात्, ब्रवीत, ब्रवीतु, ब्रूताम् अब्रवीत्, अब्रूत।**

तस्थे। आहादेशस्य हकारस्य तकारादेशो भवति थकारे परे। अनेन हस्य त:। आत्थ। आहथु:। ब्रूथ। गुण:। ब्रवीमि। ब्रूव:। ब्रूम:। ब्रूते। ब्रुवाते। आतोऽन्तो०। ब्रुवते। इत्यादीनि। ब्रूयात्। ब्रुधातो:। ब्रुवीत। ब्रवीतु। ब्रूतात्। ब्रूताम्। ब्रुधातो:। ब्रुवन्तु। ब्रूतां ब्रुवातां ब्रुवताम्। दिबादावट्। अब्रवीत्। अब्रूताम्। अब्रुवन्। अब्रूत। अब्रु-वाताम्। अब्रुवत। इत्यादीनि रूपाणि पूर्वसूत्रैरेव सिध्यन्ति।

## ब्रुवो वचि:।

**ब्रुवो वचिरादेशो भवति अनपि विषये। इकार इत्। उवाच, ऊचे, अवोचत्, अवोचत। शेषस्य पूर्ववत्प्रक्रिया। ऊर्णुञ् आच्छादने।**

ब्रुवो वचि:। ब्रुवो धातोर्वचिरादेशो भवति। अनपि विषये। इकार इत्। अनेन वचादेश:। वच् णप्। इति जाते। द्वित्वम्। पूर्वस्य। णबादौ पूर्वस्य अनेन सम्प्रसारणम्। अत उपधाया:। अनेन वृद्धि:। उवाच। ग्रहां क्ङिति च। अनेन द्वितीयं सम्प्रसारणम्। ऊचतु:। ऊचु:। अत्वतो०। उवचिथ। उवक्थ। अन्यानि सुगमानि। ऊचे। ऊचाते। ऊचिरे। इत्यादीनि अन्यानि। 'वच् परिभाषणे' इति धातुवत् रूपाणि ज्ञातव्यानि। लुङ्लकारे 'असति' अनेन सेडभावो भवति। ङे वचे: अनेन उमागम:। अवोचत्। अवोच-

साम् । अब्रीचन् । आत्मनेपदे । अब्रीचत । अब्रीचेताम् । अब्रीचन्त । इत्यादीनि रूपाणि भवन्ति तानि सुगमानि ज्ञातव्यानि विद्वद्भिः । ऊर्णुञ् आच्छादने । पूर्ववत् प्रत्ययो भवति । अदादेर्लुक् अनेन लुक् भवति । ञकार इत् । ऊर्णु तिप् इति जाते सूत्रम् ।

## ऊर्णोतेर्वा वृद्धिः ।

### हसादौ पिति । ऊर्णौति-ऊर्णोति ।

ऊर्णोतेः । ऊर्णोतेर्धातोर्वा वृद्धिर्भवति हसादौ पिति प्रत्यये परे । अनेन वा वृद्धिः । ऊर्णौति । ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । अत्र नुधातोः । अनेनोव् । ऊर्णौषि । ऊर्णोषि । अत्र षत्वम् । अन्यानि सुगमानि । ऊर्णुते । नुधातोः । ऊर्णुवाते । ऊर्णुवते । ऊर्णुयात् । ऊर्णुवीत । ऊर्णौतु । ऊर्णोतु । ऊर्णुतात् । ऊर्णुताम् । लङ्लकारे सूत्रम् ।

## ऊर्णोतेर्गुणो दिस्योः ।

### वृद्धेरपवादः । और्णोत् और्णोः ।

ऊर्णोतेः । ऊर्णोतेर्धातोर्दिस्योः परतो गुणो भवति वृद्धेरपवादः । अनेन दिस्योर्गुणो भवति । अडागमद्वयं च । और्णोत् । और्णुताम् । और्णुवन् । और्णोः । और्णुत । और्णुवाताम् । और्णुवत । इत्यादीनि ज्ञातव्यानि । लिट्लकारे । अनेकस्वरत्वादाम्प्रत्यये प्राप्ते सूत्रम् ।

## ऊर्णोतेराम्न ।

ऊर्णोतेः । ऊर्णोतेर्धातोराम्प्रत्ययो न भवति । अनेनाम्प्रत्ययो न । द्वित्व । अस्य धातोर्द्वित्वविधायकं सूत्रम् ।

## स्वरादेः परः ।

### स्वरादेर्धातोर्द्वितीयोऽवयवोऽदिरुक्तः सस्वरो द्विर्भवति ।

स्वरादेः परः । स्वरादेः ( ष० ए० ) परः । ( प्र० ए० ) स्वरादेर्धातोरद्विरुक्तः । सस्वरो द्वितीयोऽवयवो द्विर्भवति । रकारस्य द्वित्वे प्राप्ते सूत्रम् ।

## स्वरात्पराः संयोगादयो नदरा द्विर्न ।

ऊर्णुनाव ऊर्णुनुवितुः ।

स्वरात्पराः। स्वरात्पराः संयोगादयो नकारदकाररकारा द्विर्न भवन्ति। अनेन रकारस्य न द्वित्वम्। किन्तु णकारस्यैव भवति। धातोर्नामिनः। अनेन वृद्धिः। रकारस्तु पूर्वस्य णत्वे निमित्तं नेतरस्य। ऊर्णुनाव। नुधातोः। अनेनोव्। ऊर्णुनुवतुः। ऊर्णुनुवुः। ऊर्णु इट् थप् इति जाते सूत्रम्।

## ऊर्णोतेरिडादिः प्रत्ययो वा ङित् ।

ऊर्णुनुविथ-ऊर्णुनविथ। ऊर्णुयात्, ऊर्णुविषीष्ट--ऊर्णविषीष्ट, ऊर्णुविता-ऊर्णविता।

ऊर्णोतेः। ऊर्णोतेर्धातोरिडादिः प्रत्ययो वा ङिद्व भवति। ङित्वाद्व वा गुणाभावः। ऊर्णुनुविथ। ऊर्णुनविथ, ऊर्णुनुवथुः। ऊर्णुनुव। अन्यानि सुगमानि। आत्मनेपदे। ऊर्णुनुवे। ऊर्णुनुवाते। ऊर्णुनुविरे। ये। अनेन पूर्वस्य दीर्घः। ऊर्णूयात्। ऊर्णूयास्ताम्। ऊर्णूयासुः। ङित्वात्। ऊर्णुविषीष्ट। विकल्पेन गुणः। ऊर्णविषीष्ट। अन्येषां रूपाणि ज्ञातव्यानि। विस्तरभयान्न लिख्यन्ते। लुङ्लकारे सूत्रम्।

## ऊर्णोतेर्वा वृद्धिः सौ परे ।

पक्षे गुणः। और्णावीत्-और्णवीत् और्णविष्ट और्णवीत् और्णुविष्ट। इत्यदादिषूभयपदिप्रक्रिया।

इत्युभयपदिनो लुग्विकरणा अदादयो धातवः।
इति धातूनां द्वितीयो गणः।

ऊर्णोतेः। ऊर्णोतेर्धातोर्वा वृद्धिर्भवति सिप्रत्यये परे। अनेनास्य वा वृद्धिः। औ अडागमौ भवतः स्वरादित्वात्। और्णावीत्। पक्षे गुणो भवति। ङित्वात् वा उव् भवति। और्णुवीत्। और्णुविष्टाम्। और्णुविषुः। यदा गुणो भवति। तदा और्णवीत्। और्णविष्टाम् और्णविषुः। आत्मनेपदे। और्णाविष्ट। और्णा-

विषाताम्। और्णाविषत। और्णाविष्ट। और्णुविष्ट। और्णुविषाताम्। और्णु-विषत। इत्युभयपदिप्रक्रिया समाप्ता। इति लुग्विकरणा अदादयो धातवः कथिताः। इति द्वितीयो गणः।

---

## अथ लुग्विकरणस्यापि जुहोत्यादिगणस्य विशेषः।

**हु दानादनयोः। ह्वादेर्द्विश्च। हु इत्यादेर्गणादुत्पन्नस्यापो लुग्भवति। तस्मिन् लुकि सति धातोर्द्विर्वचनम्। क्रुहोश्चुः। गुणः। जुहोति जुहुतः।**

अधुना लुग्विकरणा ह्वादयो धातवः कथ्यन्ते। लुग्विकरणस्यापि जुहोत्यादि-गणस्य विशेषः। तिबादयः प्रत्यया भवन्ति। हु दानादनयोः। अयं धातुः प्रायोऽग्नितर्पणेऽर्थे होमार्थे वर्त्तते। उदात्तेत्। तेन परस्मैपदी हु अप् तिप्। इति जाते सूत्रम्। ह्वादेर्द्विश्च। ह्वादेः (पं० ए०) द्विः। (प्र० ए०) च (प्र० ए०) आद्ये नामिनी रः। द्वितीये विसर्जनीयस्य सः। स्तोश्चुभिः श्चुः। त्रिपदं सूत्रम्। हु इत्यादेर्गणात् धातुपाठोक्तादुत्तरस्य अप्प्रत्ययस्य लुग् भवति। तस्मिंश्च लुकि कृते सति धातोर्द्विर्वचनं द्वित्वं भवति। अनेन अपो लुग् धातो-र्द्वित्वे सूत्रम्। सस्वर आदिर्द्विरद्विः। सस्वरः (प्र० ए०)। आदिः (प्र० ए०)। द्विः (प्र० ए०)। अद्विः (प्र० ए०) चतुःपदं सूत्रम्। हसादौ अनेकस्वरे धातौ एकस्वरे वा संयोगादौ व्यञ्जनान्ते च धातौ सस्वर आदिरवयवो-ऽद्विरुक्तो द्विर्भवति। इदं द्वित्वविधायकं सूत्रम्। हु हु तिप्। कुहोश्चुः। झपानां जबचपाः। जु हु तिप् इति जाते। गुणः। जुहोति। जुहुतः। 'जुहु अन्ति' इति जाते सूत्रम्।

**द्वेः।**

**द्विरुक्तादुत्तरस्यान्त इत्येतस्याद्भवति। जुह्वति। जुहोषि जुहुथः जुहुथ। जुहोमि जुहुवः जुहुमः। जुहुयात् जुहु-याताम्। जुहोतु जुहुतात् जुहुताम् जुह्वतु।**

द्विरुक्तात्। द्विरुक्तात् क्लवद्भिलाड्डातोरुत्तरस्य अन्तः अत् भवति। अनेन अन्तः अत्। नुधातोः। जुह्वति। अन्यानि सूत्रे सन्ति। जुहुयात्। जुहुयाताम्। जुहुयुः। जुहोतु। जुहुतात्। जुहुताम्। जुह्वतु। 'जुहुहि' इति जाते सूत्रम्।

**हेर्धिः।**

**जुहोतेरुत्तरस्य हेर्धिर्भवति। अहुरसौत्युक्तोर्गुणः।**

हेर्धिः। हेः। (ष० ए०) धिः (प्र० ए०) जुहोतिधातोरुत्तरस्य हिप्रत्ययस्य धिर्भवति। अनेन हेर्धिः। जुहुधि। अन्यानि सुगमानि। अजुहोत्। अजुहुताम् अजुहु अन् इति जाते सूत्रम्।

**अन उस्।**

**अजुहवुः। अजुहोः। अजुहुतम् अजुहुत। अजुहवम् अजुहुव अजुहुम। जुहाव जुहुवतुः जुहुवुः। जुहुविथ-जुहोथ।**

अन उस्। अनः (ष० ए०)। उस् (प्र० ए०)। द्विरुक्ताड्डातोरन उस् भवति। अहुरसौत्युक्तत्वात् गुणो भवति। अजुहवुः। अन्यानि सूत्रे सन्ति। 'हु णप्' इति स्थिते। द्वित्वम्। सस्वरादिः। कुहोश्चुः। झपानाम्। धातोर्नामिनः जुहाव। जुहुवतुः। अलतो०। जुहुविथ। जुहोथ।

**भीहुभृह्रीणामाम्वा वक्तव्यः स लुग्वत्।**

**लुकि सति धातोर्द्वित्वम्। जुहवांचकार, हूयात्, होता, होष्यति अहोष्यत्। अहौषीत् अहौष्टाम् अहौषुः। ञिभी भये। भिइत्। बिभेति बिभीतः।**

भीहुभृह्रीणामाम् वा०। भीहुभृह्रीणां धातूनां आम् वा वक्तव्यः स आम् लुग्वत्। लुकि सति धातोर्द्वित्वं भवति। जुहवांचकार। जुहवामास। जुहवांबभूव। एतानि सुगमानि। य। हूयात्। होता। अत्र गुणो भवति। अन्येषां लकाराणां प्रथमपुरुषस्यैकवचनान्तानि सूत्रे सन्ति। लुङ्लकारे। अनिटो नामि

वत: । अनेन वृद्धि: । अह्वौषीत् । अह्वौष्टाम् । अह्वौषु: । अह्वौषी: । अह्वौ-ष्टाम् । अह्वौष्ट । इत्यादीनि । ञिभी भये । ञिइत् । पूर्ववत् तिवादय: । अप्कर्त्तरि । ह्वादेर्द्वित्व । ह्रस्व: । झपानाम् । गुण: । बिभेति । बिभीत: ।

## ङिति हसि भिय इकारो वा वक्तव्य: ।

सार्वधातुके । बिभित: बिभ्यति । बिभीयात्-बिभियात् । बिभेतु बिभितात्-बिभीतात् बिभीताम् बिभिताम् । अबिभेत् अबिभिताम् अबिभीताम् अबिभयु: । बिभाय । पक्षे आम् । बिभायांचकार, भीयात्, भेता, भेष्यति, अभेष्यत्, अभैषीत् । ह्री लज्जायाम् । जिह्रेति जिह्रीत: जिह्रियति । जिह्रीयात्, जिह्रेतु । अजिह्रेत् अजिह्रीताम् अजिह्रयु: । जिह्राय जिह्रियतु: जिह्रियु: । जिह्रयांचकार, ह्रीयात्, ह्रेता, ह्रेष्यति, अह्रेष्यत्, अह्रैषीत् । पॄ पालनपूरणयो: ।

ङिति हसि परे भियो धातोरिकारो वा वक्तव्य: सार्वधातुके । सुगममिदं सूत्रम् । बिभित: । नुधातो: । बिभ्यति । अत्र रूपे द्विरुक्तात् । अनेन अन्त: अत् । बिभेषि । अत्र षत्वम् । बिभीथ: । बिभिथ: । बिभीथ । बिभिथ । इत्यादीनि रूपाणि ज्ञातव्यानि । बिभीयात् । बिभियात् । बिभीयाताम् । बिभियाताम् । बिभीयु: बिभियु: । इत्यादीनि । लोट्लकारे । बिभेतु । बिभीतात् । बिभितात् । बिभीताम् । बिभिताम् । बिभ्यतु । इत्यादीनि । अबिभेत् । अबिभीताम् । अबिभिताम् । अबिभयु: । इत्यादीनि । लिट्-लकारे । द्वित्व । सस्वरादि: । ह्रस्व: । झपानाम् । धातोर्नामिन: । बिभाय । बिभ्यतु: । बिभ्यु: । इत्यादीनि । भीह्रीभृहुवां० । अनेनाम्प्रत्यय: । बिभयां-चकार । बिभयामास । बिभयांबभूव । भीयात् । गुण: । भेता । लुङ्लकारे । अनिटो नामिवत: । अनेन वृद्धि: । अभैषीत् । अभैष्टाम् । अभैषु: । इत्या-दीनि । ह्री लज्जायाम् । पूर्ववत् तिवादय: । अप्कर्त्तरि । ह्वादेर्द्वित्व । सस्वरादि: । कुहोश्चु: । झपानां जबचपा: । गुण: । जिह्रेति । जिह्रीत: । नुधातो: । द्विरुक्तात् । जिह्रियति । इत्यादीनि । लिट्लकारे । द्वित्व सस्वरादि: ।

क्रीणीयुः। क्रपाणाम्। धातोर्नामिनः। जिक्राय। गुधातोः। जिक्रियतुः। जिक्रियुः। इत्यादीनि। णीङ्० अनेनाम्। जिक्रयांचकार। जिक्रयामास। जिक्रयांबभूव। क्रीयात्। गुणः। क्रेता। अन्यानि सुगमानि। लुङ्लकारे। अनिटः। अक्रैषीत्। अक्रैष्टाम्। अक्रैषुः। इत्यादीनि। सुगमोऽयं धातुः। पॄपालनपूरणयोः। पूर्ववत् तिबादयः। अप् कर्त्तरि। ह्वादेर्द्वित्वं। पृ पॄ तिप् इति जाते सूत्रम्।

## ऋप्रोरिः पूर्वस्य।

**ऋप्रोः पूर्वस्य ऋकारस्य इकारो भवति लुकि सति। गुणः। पिपर्त्ति।**

ऋप्रोरिः पूर्वस्य। ऋप्रोः (ष० द्वि०) इः (प्र० ए०) पूर्वस्य (ष० ए०) ऋ गतौ पॄ पालनपूरणयोः। इत्येतयोः। धात्वोस्तिबादौ। अपो लुकि जाते। पूर्वस्य ऋकारस्य इकारो भवति। लुकि सति। रः। अस्य सूत्रस्यापवादोऽयम्। पिपॄ तिप् इति जाते। गुणः। रात्सपोर्द्विः। पिपर्त्ति। पिपॄतस् इति जाते सूत्रम्।

## पोरुर्।

**पवर्गादुत्तरस्य ऋकारस्य उर् भवति किति ङिति च परे। य्वोर्विहसे। पिपूर्तः पिपुरति। पिपूर्यात्। पिपर्तु-पिपूर्तात् पिपूर्ताम् पिपुरतु। पिपूर्हि। अपिपः।**

पोरुर्। पोः (पं० ए०) उर् (प्र० ए०) पवर्गात् उत्तरस्य ऋकारस्य किति ङिति प्रत्यये परे उर् भवति। 'य्वोर्विहसे' अनेन दीर्घः। पिपूर्त्तः। पोरुर्। पिपुरति। पिपर्षि। पिपर्थः। पिपूर्थ। पिपर्मि। पिपूर्वः। पिपूर्मः। पिपूर्यात्। पिपूर्याताम्। पिपूर्युः। इत्यादीनि। एतानि रूपाणि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति लोट्लकारे। पिपर्त्तु। पिपूर्त्तात्। पिपूर्त्ताम्। पिपुरतु। पिपूर्हि। पिपूर्त्तात्। पिपूर्त्तम्। पिपूर्त्त। गुणः। पिपराणि। पिपराव। पिपराम। लङ्लकारे। 'अपिपॄ दिप्' इति जाते। गुणः। अपिपर् दिप् इति जाते। दिस्योर्हसात्। रोर्विसर्गः। अपिपः।

## ऋप्रोर्दिस्योरडागमो वा वक्तव्य इति केचित्।

अपिपरत् अपिपूर्ताम् अपिपरुः। अपिपः-अपिपरः अपिपूर्त्तम् अपिपूर्त। अपिपरम् अपिपूर्व अपिपूर्म। पपार।

ऋप्रोः। ऋप्रोर्धात्वोः दिस्योः प्रत्यययोः असागमो वा वक्तव्यः इति केचिदाचार्य्या वदन्ति। तन्मते। अपिपरत्। अपिपूर्त्ताम्। अपिपरुः। अपिपः। ऋप्रोः। अपिपरः। अन्यानि सूर्त्त सन्ति। लिट्लकारे। 'पृ णप्' इति स्थिते। द्वित्व। सस्वरादिः। रः। धातोर्नामिनः। पपार।

## ऋसंयोगादेर्णादेरकित्त्वं वाच्यम्।

कित्त्वाभावात् गुणः। पपरतुः पपरुः। पपरिथ-पूर्यात्। ईटो ग्रहाम्०। परीता-परिता, परीष्यति-परिष्यति, अपरीष्यत्-अपरिष्यत्, अपारीत्। वृद्धिहेतौ सोविटो न दीर्घः। अपारिष्टाम् अपारिषुः। ऋस्तोऽपि पिपर्तिरस्ति। पिपर्ति पिपृतः पिप्रति। पिपृयात्, पिपर्तु, अपिपः। अपिपरत्, अपिपृताम् अपिपरुः। अपिपः अपिपरः। पपार पप्रतुः पप्रुः। ऋप्रोरिङ्। प्रियात्, पर्ता। ऋन्तः स्यपः। परिष्यति, अपरिष्यत्, अपार्षीत्। ओहाक् त्यागे। ओकावितौ। जहाति।

ऋसंयोगादेरिति। अनेनास्य कित्त्वाभावात् गुणो भवति। पपरतुः। पपरुः। पपरिथ। पपरथुः। पपर। पपार। पपर। पपरिव। पपरिम। पृ यात् इति स्थिते। पोरुर्। वोर्विहसे। पूर्यात्। पूर्यास्ताम्। पूर्यासुः। इत्यादीनि। 'पृ ता' इति स्थिते। गुणः। सिजता०। ईटो ग्रहाम्। परीता। परिता। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे तिप्रे। अनेन सेर्णित्त्वात्। धातोर्नामिनः। अनेन वृद्धिः। अपारीत्। अपारिष्टाम्। अस्मिन् रूपे। ईटो ग्रहाम्। अनेन दीर्घे प्राप्ते। वृद्धिहेतौ सो। अनेन तन्निषेधः। अपारिषुः। इत्यादीनि। ऋस्तोऽपि पिपर्त्तिरस्ति। पूर्ववत् तिबा-

इय: । ह्वादेर्द्विश्च । ऋग्रीरि: । पूर्वस्य गुण: । पिपर्त्ति । पिपृत: । पिप्रति । पिपर्षि । पिपृथ: । पिपृथ । पिपर्मि । पिपृव: । पिपृम: । पिपृयात् । पिपर्त्तु । पिपृतात् । पिपृताम् । पिपरतु । पिपृहि । पिपृतात् । पिपृतम् । पिपृत । अपिप: । ऋग्री: । अपिपरत् । अपिपृताम् । अपिपरु: । अपिप: । अपिपर: । अन्यानि सुगमानि । लिट् लकारे । द्विश्च । सस्वरादि: । र: । धातोर्नामिन: । पपार । ऋरम् । पप्रतु: पप्रु: । पपर्थ । यादादौ । अनेन ऋकारस्य रिङ् । प्रियात् । गुण: । रात्यपीङि: । पर्त्ता । पर्त्तारौ । पर्त्तार: । इन्वृत: स्यप: । अनेन स्यप इडागमो भवति । गुण: । परिष्यति । इत्यादीनि रूपाणि । अपरिष्यत् । लुङ्लकारे । णित्ये । अनेन णित्त्वात् । सावनिट: । अनेन नित्यं वृद्धिर्भवति । षत्वम् । दिबादावट् । अनेन अडागम: । अपार्षीत् । अपार्ष्टाम् । अपार्षु: । इत्यादीनि रूपाणि सुगमानि । ओहाक् त्यागे । ओकावितौ । पूर्ववत् प्रत्यय: । ह्वादेर्द्विश्च । अनेनापो लुग् धातोर्द्वित्वं च भवति । तदा हा हा तिप् इति जाते । ह्रस्व: । कुहोश्चु: । झपानाम् । जहाति इति सिद्धम् । 'जहा तस्' इति जाते ।

## ह्वेस्तौ ।

**लोपोऽनुवर्तते इकारस्य । द्विरुक्तस्य धातोराकारस्य लोपो भवति ङिति स्वरे इकारस्य ङिति हसे परे । जहीत: ।**

ह्वेस्तौ । लोपोऽनुवर्त्तते इकारस्य । ह्वे: ( ष० ए० ) तौ ( प्र० द्वि० ) लोप: इकारस्य अनुवर्त्तते । सूत्रं तु द्विपदमस्ति । कस्मात् सूत्रादनुवर्त्तते इति शङ्कायां वृत्तिकारो विशेषेण व्याचष्टे । नात इति सूत्रादाकारस्य लोपोऽनुवर्त्तते । तथा य्वोर्हसे इति सूत्रात् ईकारोऽनुवर्त्तते । द्विरुक्तस्य धातोराकारस्य ङिति स्वरे परे लोपो भवति । ङिति हसे परे आकारस्य ईकारो भवति । अनेन आकारस्य ईकार: । जहीत: ।

## जहातेराकारस्य क्ङिति हसेईर्वा वाच्य: ।

**जहित: जहति ।**

जहाते: । जहातेर्धातोराकारस्य ङिति हसे परे वा इकारो भवति । अनेन

त्या आकारस्य इकारः। जहितः। जहा अन्ति इति जाते। विहल्लात्। देलौ। अनेन आकारस्य लोपो भवति। जहति। जहासि। जहीथः। जहिथः। जहीथ। जहिथ। जहामि। जहीवः। जहिवः। जहीमः। जहिमः। इत्यादीनि रूपाणि ज्ञेयानि। 'जहा यात्' इति जाते सूत्रम्।

## जहातेर्यादावालोपो वाच्यः।

जह्यात्। जहातु-जहीतात् जहितात् जहीताम् जहिताम् जहतु।

जहाते:। जहातेर्धातोर्यादादौ परे आकारस्य लोपो भवति। अनेन आकारस्य लोपः। जह्यात्। शेषाणि सुगमानि। आशीःप्रेरणयोः। जहातु। जहीतात्। जहितात्। जहीताम्। जहिताम्। देलौ। विहल्लात्। जहतु। जहा हि इति स्थिते सूत्रम्।

## ईर्वा हौ।

जहातेर्हौ परे ईकारः सिद्ध एव। पक्षे आकारेकारौ भवतः। जहीहि-जहिहि-जहाहि-अजहात्। अजहिताम् अजहीताम् अजहुः। जहौ जहतुः जहुः। जहिथ-जहाथ। दादेरे। हेयात्, हाता, हास्यति, अहास्यत्, अहासीत्। ऋ गतौ। अर्त्तिपिपर्त्योश्च। ऋप्रोरिः पूर्वस्य।

ईर्वाहौ। ईः। (प्र० ए०)। (वा अव्ययम्) हौ (स० ए०)। जहातेर्धातोर्हौ परे ईकारः सिद्ध एव पक्षे आकारेकारौ भवतः। सुगमम्। अनेन सूत्रेण त्रीणि रूपाणि भवन्ति। जहीहि। जहिहि। जहाहि। अत्र भट्टिः 'जहिहि जहीहि जहाहि रामभार्याम्' इत्युदाजहार। अन्यानि सुगमानि। लुङ्लकारे। अजहात् अजहीताम् अजहिताम्। देलौ। अनेनाकारस्य लोपो भवति। अजहुः। अन्यानि सुगमानि। परोक्षे। विलम्। क्रस्वः। कुहोश्चुः। अपानाम्। आतो णल औ। जहौ। आतोऽनपि। अनेन आकारस्य लोपो भवति। तदा जहतुः। उस्। पलतो०।' जहिथ। जहाथ। अन्यानि

सुगमानि। लिङ्लकारे 'हा यात्'। इति जाते दादेरे। अनेन आकारस्यैकारः। हेयात्। हेयास्ताम्। हेयासुः। हाता। लुङ्लकारे। आदन्तानाम्। अनेनेदसकौ भवतः। सेः। अनेनेट्। अहासीत्। अहासिष्टाम्। अहासिषुः। अन्यानि सुगमानि। ऋगतौ। तिबादयः। अप् कर्त्तरि। अनेन चतुर्षु अप्। ह्वादेर्द्विश्च। ऋ ऋ तिप् इति जाते। ऋप्रोरिः पूर्वस्य। गुणः।

## असवर्णे स्वरे पूर्वस्य इयादेशो भवति।

इयर्ति इयृतः इय्रति। इयृयात्। इयर्तु-इयृतात् इयृताम् इय्रतु। इयृहि-इयृतात् इयृतम् इयृत। इयराणि इयराव इयराम। ऐयः-ऐयरत् ऐयृताम् ऐयरुः। ऐयः-ऐयरः ऐयृतम् ऐयृत। ऐयरम् ऐयृव ऐयृम। रः। वृद्धिः। आर आरतुः आरुः। गुणोऽर्तिसंयोगाद्योः। अर्यात्, अर्ता, अरिष्यति, आरिष्यत्। ऋदृशोः पुषादित्वात् ङप्रत्ययः। सेरपवादः। गुणः। आरत्। इति जुहोत्यादिषु परस्मैपदिप्रक्रिया। ७।

असवर्णे। अनेनेय्। इयर्त्ति। इयृतः। अत्र ङित्त्वाद्गुणो न भवति। द्विरुक्तात्। अनेन अन्तः अत्। ऋरम्। इय्रति। अन्यानि यथासम्भवं ज्ञेयानि। इयृयात्। लोट्लकारे। इयर्त्तु। अन्यानि सूत्रे सन्ति। इयृ दिप् इति जाते गुणः। द्वौ अडागमौ। ऐयः। दिस्योः। ऐयरत्। अन्यानि सूत्रे सन्ति। लिट्लकारे। द्विश्च। रः। धातोर्नामिनः। अनेन वृद्धिः। सवर्णे। आर। गुणोऽर्ति०। अनेन गुणः। आरतुः। आरुः। आरिथ। अन्यानि सुगमानि। 'ऋ यात्' इति जाते गुणोऽर्ति०। अनेन गुणो भवति। अर्यात्। अर्यास्ताम्। अर्यासुः। इत्यादीनि। 'ऋ ता' इति स्थिते गुणः। अर्त्ता। अर्त्तारौ। अर्त्तारः। हन्तृतः स्यपः। गुणः। अरिष्यति। स्वरादित्वाद्डागमद्वयम्। आरिष्यत्। ऋदृशोर्धात्वोः पुषादित्वात् ङप्रत्ययो भवति। सेरपवादः। दृशादेः। अनेन गुणः। अडागमद्वयम्। आरत्। आरताम्। आरन्। अन्यानि सुगमानि। इति परस्मैपदिप्रक्रिया समाप्ता।

---

## अथात्मनेपदिनः।

ओहाङ् गतौ।

### भृञां लुकि।

डुभृञ् धारणपोषणयोः ओहाङ् गतौ माङ् माने इत्येतेषां पूर्वस्याकारस्य इकारो भवति लुकि सति। द्वित्वे। जिहीते जिहाते जिहते। जिहीत जिहीताम्। अजिहीत, जहे, हासीष्ट, हाता, हास्यते, अहास्यत। अहास्त अहासाताम् अहासत। माङ् माने। मिमीते मिमाते मिमते। मिमीते, मिमीताम्, अमिमीत, ममे, मासीष्ट, माता, मास्यते, अमास्यत, अमास्त। इति जुहोत्यादिष्वात्मनेपदिप्रक्रिया। ८।

अथात्मनेपदिप्रक्रिया कथ्यते। ओहाङ्गतौ। ओकार इत्। ङकार आत्मनेपदार्थः। ते आदयः। प्रत्यया भवन्ति ह्वादेर्द्वित्वं। हा हा ते इति जाते ह्रस्वः। कुहोश्चुः। सूत्रम्। भृञां लुकि। भृञां (ष० ए०) लुकि (स० ए०) डुभृञ् धारणपोषणयोः। ओहाङ् गतौ। माङ् माने। इत्येतेषां धातूनां पूर्वस्याकारस्य इकारो भवति। द्वित्वे। जिहीते। आकारलोपः। जिहाते। आतोऽन्तो०। जिहते। जिहीषे। जिहाथे। जिहीध्वे। जिहे। जिहीवहे। जिहीमहे। द्वित्वे। अनेनाकारस्य लोपः। जिहीत। जिहीयाताम्। जिहीरन्। अन्यानि सुगमानि। लोट्लकारे। जिहीताम्। आकारलोपः। जिहाताम्। जिहताम्। जिहीष्व। अन्यानि सुगमानि। लङ्लकारे। अजिहीत। अजिहाताम्। अजिहत। अन्यानि सुगमानि। लिट्लकारे। द्वित्व। ह्रस्वः। कुहोश्चुः। आपानाम्। आतोऽनपि। अनेन आकारस्य लोपः। जहे। जहाते। जहिरे। हासीष्ट। अन्येषां रूपाणि सुगमानि मूलात् ज्ञातव्यानि। लुङ्लकारे। भूते सिः। अनेन सिप्रत्ययो भवति। दिवादावत्। अहास्त। अहासाताम्। अहासत। आतोऽन्तो०। अनेनान्तः अत्। माङ्माने। पूर्वसूत्रेरेवायं धातुः सिध्यति। ह्वादेर्द्वित्वं। अनेन चतुर्षु आत्मीद्वित्वम्। मिमीते मिमाते। आतो०। मिमते। अन्यानि सुगमानि।

मिमीत। मिमीयाताम्। मिमीरन्। मिमीताम्। अमिमीत। अमिमाताम्। आतो०। अमिमत। लिट्लकारे। ममे। ममाते। ममिरे। अन्यानि सुगमानि। मासीष्ट। माता। लुङ्लकारे। भूते सिः। अमास्त। अमासाताम्। अमासत। अन्यानि सुगमानि तानि ज्ञातव्यानि विद्वद्भिः। इत्यात्मनेपदिप्रक्रिया समाप्ता।

## अथोभयपदिनः।

डुभृञ् धारणपोषणयोः। डुञावितौ। बिभर्ति बिभृतः बिभ्रति। बिभृते, बिभृयात्, बिभ्रीत, बिभर्तु, बिभृताम्। अबिभः, अबिभृताम्, अबिभरुः। अबिभृत। बभार बभ्रतुः बभ्रुः। बभर्थ। बभ्रे, बिभरांचकार, बिभरांचक्रे, बिभरामास, बिभरांबभूव। यादादौ। भ्रियात्, भृषीष्ट, भर्ता। हनृतः स्यपः। भरिष्यति, भरिष्यते, अभरिष्यत् अभरिष्यत, अभार्षीत्, ङः। अभृत। डु दाञ् दाने। ददाति।

डुभृञ् धारणपोषणयोः डुञावितौ स्तः। तिबादयस्त आदयश्च प्रत्यया भवन्त्यस्य धातोः। ह्वादेर्द्विश्च। अनेनापो लोपो धातोर्द्वित्वं च भवति। 'भृ भृ तिप्' इति जाते रः। झपानाम्। भङ्गो लुकि। गुणः। बिभर्ति। बिभृतः। द्विरुक्तात्। अत्‌रम्। बिभ्रति। अन्यानि एतैरेव सूत्रैः सिध्यन्ति। बिभृते। बिभ्राते। बिभ्रते। बिभृयात्। बिभृयाताम्। बिभृयुः। बिभ्रीत। बिभ्रीयाताम्। बिभ्रीरन्। बिभर्तु। बिभृताम्। अबिभः। अबिभृताम्। अन उस्। गुणः। अबिभरुः। अन्यानि सुगमानि। अबिभृत। अबिभ्राताम्। अबिभ्रत। लिट्लकारे। द्विश्च। अनेन द्वित्वम्। रः। झपानाम्। धातोर्नामिनः। अनेन वृद्धिः। बभार। अत्‌रम्। बभ्रतुः। बभ्रुः। क्रादित्वान्नेट्। गुणः। बभर्थ। अन्यानि सुगमानि। आत्मनेपदे। बभ्रे। बभ्राते। बभ्रिरे। भीह्री०। अनेनाम्प्रत्ययः स लुग्वत्। अन्यत्साधनं तु पूर्ववत्। बिभरांचकार। बिभरांचक्रे। बिभरामास। बिभरांबभूव। एतानि रूपाणि सुगमानि। यादादौ। भ्रियात्। ङः। अनेन गुणाभावः। षत्वम्। भृषीष्ट। गुणः। भर्ता। भर्ता। हनृतः स्यपः। अनेनेट् प्रत्ययो भवति। गुणः।

षत्वम् । भरिष्यति । भरिष्यते । दिबादावट् । अभरिष्यत् । अभरिष्यत । एतानि रूपाणि सुगमानि । लुङ्लकारे णित्त्वात्सेर्वृद्धिः । दिबादावट् । षत्वम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः । अन्यानि सुगमानि । आत्मनेपदे लोपो झस्वाज्झसे । अनेन सेर्लोपो भवति । अभृत । षत्वम् । अभृषाताम् । अभृषत । आतोऽन्तोऽदनतः । डुदाञ् दाने । डुञौ इतौ । पूर्ववत् प्रत्यया भवन्ति । ह्वादेर्द्विश्च । ह्रस्वः । ददाति । ददा तस् । इति जाते । सूत्रम् ।

## दादेः ।

द्विरुक्तस्य दाधोराकारस्य लोपो भवति ङिति परे । दत्तः ददति । दत्ते ददाते ददते । दद्यात् ददीत । ददातु दत्ताद्वा दत्ताम् ददतु ।

दादेः । दाधातुरादिर्यस्य सः दादिः तस्य दादेः ( ष० ए० ) एकपदं सूत्रम् । द्विरुक्तस्य दादेर्धातोराकारस्य लोपो भवति ङिति विभक्तौ । स्वरे ह्रसे च परे । इस्तात्वित्यस्यापवादः । अनेन द्विर्वे षट्स्वपि वचनेषु आकारलोपः । तकारथकारेषु खसे चपा० । अनेन दकारस्य तकारः । दत्तः । ददति । ददासि । दत्थः । दत्थ । ददामि । दद्वः । दद्मः । दत्ते । ददाते । ददते । दत्से । ददाथे । दध्वे । ददे । दद्वहे । दद्महे । एतानि सर्वाणि रूपाणि । एतैरेव सूत्रैः सिध्यन्ति । दद्यात् । दद्याताम् । दद्युः । अन्यानि सुगमानि । ददीत । ददीयाताम् । ददीरन् । ददातु । दत्तात् । दत्ताम् । ददतु । 'ददाहि' इति जाते । सूत्रम् ।

## दां हौ ।

दाधोराकारस्यैकारो भवति पूर्वस्य च लोपो भवति हौ परे । देहि दत्ताम् । अददात् अदत्ताम् अददुः । अदत्त । ददौ, ददे, देयात्, दासीष्ट, दाता, दास्यति, दास्यते, अदास्यत्, अदास्यत । दादे पे । अदात् अदाताम् अदुः ।

दां हौ । दां ( ष, व, ) हौ ( स, ए, ) द्विपदं सूत्रम् । दादीनां दा धा इति धातूनां द्विवचनस्य द्वित्वस्य लोपो भवति । आकारस्य च एकारो भवति ।

देहि। द्वितीये तु। तातङादेशः। आकारलोपः। दत्तात्। दत्तम्। दत्त। झत्तमसुखये सवर्णे। ददामि। ददाव। ददाम। दत्ताम्। ददाताम्। आतोन्तो०। ददताम्। अन्यानि सुगमानि। अददात्। अदत्ताम्। अद उस्। अददुः। अददाः। अदत्तम्। अदत्त। सवर्णे०। अददाम्। अदद्व। अदद्म। अदत्त। अददाताम्। अददत। अदत्थाः। अन्यानि सुगमानि। लिट्लकारे द्वित्वं। ह्रस्वः। आतो णप् औ। ददौ। आतोऽनपि। ददतुः। ददुः। अलतो०। ददिथ। ददाथ। अन्यानि सुगमानि। आत्मनेपदे। ददे। ददाते। ददिरे। 'दा यात्' इति जाते। दादेरे। अनेनाकारस्यैकारः। ठः। देयात्। देयास्ताम्। देयासुः। दासीष्ट। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे। 'अदासि दिप्,। इति जाते। दादेः पे। अनेन सेर्लोपः। अदात्। अदाताम्। 'अ दा सि अन्' इति जाते। स्वाविदः। दादेः पे। अदुः। अदाः। अदातम्। अदात। अदाम्। अदाव। अदाम। 'अदासि तन्' इति जाते। सूत्रम्।

## दाधास्यामित्त्वं सेर्ङित्त्वम्।

ङित्त्वान्न गुणः। लोपो ह्रस्वाज्झसे। अदित अदिषाताम् अदिषत। डुधाञ् धारणपोषणयोः। दधाति। दादेः।

दाधास्याम्। दाधास्याधातूनाम् इत्वं भवति। सेर्ङित्त्वम् च। आत्मनेपदे ङित्त्वात् गुणाभावः। लोपो ह्रस्वाज्झसे। अनेन सेर्लोपः। अदित। अदिषाताम्। आतोन्तो०। अदिषत। डुधाञ् धारणपोषणयोः। डुधाञिति। पूर्ववत् प्रत्यया भवन्ति। ह्वादेर्द्वित्वं। अनेनापो लोपः। धातोर्द्वित्वम्। ह्रस्वः। झपानां जबचपाः। दधाति। 'दधा तस्' इति जाते। दादेः। अनेनाकारस्य लोपः। 'दध् तस्' इति जाते। सूत्रम्।

## पूर्वस्य ङिति झसे धः।

झसान्तस्य दधातेः पूर्वदकारस्य धकारो भवति ङिति झसे परे। धत्तः दधति। धत्ते, दध्यात्, दधीत, दधातु, धेहि, धत्ताम्, अदधात्, अदधाः, अधत्त, दधौ, दधे, धेयात्,

**धासीष्ट, धाता, धास्यति, धास्यते, अधास्यत्, अधास्यत। दादेः पे। अधात्, अधित। णिजिर् शौचपोषणयोः। इरितः। णादेः ष्णः सः।**

पूर्वस्य ङिति झसे धः। पूर्वस्य ( ष०ए० ) ङिति ( स०ए० ) झसे (स०ए०) धः ( प्र० ए० ) झभान्तस्य धातोः पूर्वस्य दकारस्य धकारो भवति। ञिति झसे प्रत्यये परे। अनेन दकारस्य धकारः। 'ध् ध् तस्' इति जाते। अत 'तथोर्धः' अनेन तकारस्य धकारे प्राप्ते। दधातिं विनेत्युक्तत्वात् न भवति। खसेचपा०। धत्तः। दधाति। दधासि। धत्थः। धत्थ दधामि। दध्वः। दध्मः। धत्ते दधाते। आतोऽन्तो०। दधते। धत्से। दधाथे। धद्ध्वे। दधे। दध्वहे। दध्महे। दादेः। दध्यात्। दध्याताम्। दध्युः। दधीत। दधीयाताम्। दधीरन्। दधातु। धत्तात्। धत्ताम्। विकल्पात्। दधतु। दां धौ। धेहि। धत्तात्। धत्तम्। धत्त। सवर्णे०। दधानि। दधाव। दधाम। धत्ताम्। दधाताम्। दधताम्। धत्स्व। दधाथाम्। धद्ध्वम्। एऐऐ। दधै। दधावहै। दधामहै। अदधात्। अधत्ताम्। अन उस्। अदधुः। अधत्त। अदधाताम्। अदधत। अन्यानि सुगमानि। लिट्लकारे। द्विश्च। धस्वरादिः। झपानाम्। आतो। णप् डौ। दधौ। आतोऽनपि। अनेनाकारस्य लोपः। दधतुः। दधुः। दधिथ। दधाथ। आत्मनेपदे। आतोऽनपि। दधे। दधाते। दधिरे। दादेरिः। धेयात्। धेयास्ताम्। धेयासुः। धासीष्ट। धाता। लुङ्लकारे। दादेः पे। अनेन सेर्लोपः। अधात्। अधातां स्थाविदः। अधुः। आत्मनेपदे। 'दाधाख्याम्' अनेन इत्वम्। सेर्ङित्त्वम्। ङित्त्वात् लोपो ह्रस्वाज्झसे। अनेन सेर्लोपः। अधित। अधिषाताम्। आतोऽन्तो०। अधिषत। अधिथाः। अधिषाथाम्। अधिध्वम्। अधिषि। अधिष्वहि। अधिष्महि। णिजिर् शौचपोषणयोः। इरित्। णादेः ष्णः स्नः। अनेन णकारस्य नकारः। पूर्ववत् प्रत्ययाः। ह्वादेर्द्विश्च 'निनिज् तिप्' इति जाते। सूत्रम्।

**निजां गुणः।**

**निज्विज्विषां पूर्वस्य गुणो भवति लुकि श्नि। नेनेक्ति**

नेनिक्तः नेनिजति। नेनेक्षि नेनिक्थः नेनिक्थ। नेनेज्मि नेनिज्वः नेनिज्मः। नेनिक्ते, नेनिज्यात्, नेनिजति। नेनेक्तु-नेनिक्तात्, नेनिक्ताम् नेनिजतु। नेनिग्धि-नेनिक्तात्, नेनिक्तं नेनिक्त।

निजां गुणः। निजां (ष० ब०)। गुणः (प्र० ए०) निज्विज्विषां धातूनां पूर्वस्य गुणो भवति। लुकि कृते सति। अनेन चतुर्षु लकारेषु पूर्वस्य गुणो भवति। 'ने निज् तिप्' इति जाते। 'उपधाया लघोः' अनेन गुणः। नेनेज् तिप् इति जाते। खसेचपा०। नेनेक्ति। नेनिक्तः। नेनिजति। नेनेज् सिप् इति जाते खसेचपा०। क्तिलात्०। काष० नेनेक्षि। नेनिक्थः। नेनिक्थ। अन्यानि रूपाणि सन्ति सूले। नेनिक्ते। नेनिजाते। आतोऽन्तो०। नेनिजते। नेनिज्यात्। नेनिज्याताम्। नेनिज्युः। नेनिजीत। नेनेक्तु। नेनिक्तात्। नेनिक्ताम्। हितक्तात्। नेनिजतु। नेनिज् हि इति जाते। झसाद्धेर्धिः। अनेन हेर्धिः। चोः कुः। झबेजबाः। नेनिग्धि। नेनिक्तात्। नेनिक्तम्। नेनिक्त। नेनिज् आ तिप् इति स्थिते। उपधाया लघोः। अनेन गुणे प्राप्ते।

## द्वेः स्वरेऽपि नोपधागुणः।

द्विरुक्तस्य धातोरपि विषये पिति स्वरे उपधाया गुणो न भवति। नेनिजानि नेनिजाव नेनिजाम। नेनिक्तास्। अनेनेक्-अनेनेग् अनेनिक्ताम्। अनेनिजुः। अनेनिक्त। निनेज निनिजे निज्यात्। सिस्योः। निक्षीष्ट, नेक्ता, नेक्ता, नेक्ष्यति, नेक्ष्यते, अनेक्ष्यत्, अनेक्ष्यत, अनिजत् अनिजताम्। अनिटो नामिवतः। अनैक्षीत् अनैक्ताम् अनैक्षुः। विजिर् पृथग्भावे। वेवेक्ति। नेनेक्तिवत्। विष्लृ व्याप्तौ। वेवेष्टि, वेविष्टे, वेविष्यात्, वेविषीत, वेवेष्टु, वेविष्टाम्, अवेवेट्-अवेवेड्, विवेष, विविषे, विष्यात्, विक्षीष्ट, वेष्टा, वेक्ष्यति, वेक्ष्यते, अवेक्ष्यत्, अवेक्ष्यत। लित्पुषादेर्ङः। अविषत्। ङो वेति केचित्। हशषान्तात्सक्। अविक्षत् अविक्षत। इति जुहोत्यादिगभय-

पदिप्रक्रिया ॥ ८ ॥ इति लुग्विकरणा ह्वादयः। इति तृतीय-गणः ॥ ३ ॥

ह्वे: खरेऽपि नोपधागुण:। ह्वे: (प० ए०) खरे (स० ए०) अपि (स०ए०) न (अव्ययम्) उपधायाः (प० ए०) गुणः (प्र० ए०) विरूक्तस्य धातोरपि विषये पिति खरे परे उपधाया गुणो न भवति। अनेन गुणनिषेधोऽत्र। नेनि-क्तानि। नेनिजाव। नेनिजाम। नेनिक्ताम्। नेनिजाताम्। नेनिजताम्। नेनिज् स्व। इति जाते। चोः कुः। खसे चपा०। षत्वम्। कषसंयोगे क्षः। नेनिक्ष्व। अन्यानि सुगमानि। लङ्लकारे प्रथमपुरुषस्यैकवचने। नेनेज् दिप् इति जाते चोः कुः। दिस्योर्हसात्। अनेन सेर्लोपो भवति, वावसाने। दिवा-दावट्। अनेनेक् अनेनेग्। अनेनिक्ताम्। अनेनिजुः। अनेनेक्। अनेनेग्। अनेनिक्तम्। अनेनिक्त। अनेनिजम्। अनेनिक्त। अनेनि-जाताम्। आतोन्तो०। अनेनिजत्। अनेनिक्थाः। अनेनिजाथाम्। अनेनिग्ध्वम्। लिट्लकारे। द्वित्व। अनेन द्वित्वम्। पूर्वस्य, उपधाया लघोः अनेन गुणो भवति। निनेज। निनिजतुः। निनिजुः। उपधायाः। निने-जिथ। अन्यानि सुगमानि। निनिजे। निनिजाते। निनिजिरे। षत्वम्। निनिजिषे। निनिजाथे। निनिजिध्वे। निज्यात्। निज्यास्ताम्। निज्यासुः। सिस्योः। अनेनात्र गुणाभावो भवति। निज् सीष्ट। इति जाते। चोः कुः। खसे०। षत्वम्। कषसंयोगे क्षः। निक्षीष्ट। निक्षीयास्ताम्। निक्षीरन्। इत्यादीनि। उपधाया लघोः। चोः कुः। नेक्ता। नेक्तारौ। नेक्तारः। नेज् स्यप् तिप् इति जाते। कुत्वम्। षत्वम्। कषसंयोगे०। नेक्ष्यति। नेक्ष्यते। अनेक्ष्यत्। अनेक्ष्यत। लुङ्लकारे। 'अनिज् सि ईट् दिप्' इति जाते। अनिटो ना०। अनेन वृद्धिः। कुत्वम्। षत्वम्। कषसंयोगे०। अनैक्षीत्। अनैक्ताम्। अनैक्षुः। इत्यादीनि। आत्मनेपदे वृद्धिर्न भवति। अनिक्त। अच झसात्। अनेन सेर्लोपो भवति। अनिक्षाताम्। आतोऽन्तो०। अनिक्षत। अनिक्थाः। अनिक्षाथाम्। अनिग्ध्वम्। अस्य धातोरिरितो वा। अनेन ङप्रत्ययो भवति। ङित्वादगुणाभावः। अनिजत्। अनिजताम्। अनिजन्। इत्यादीनि। विजिर् पृथग्भावे। पूर्ववत्। तिबादयस्ते आदयश्च प्रत्यया भवन्ति। अप् कर्तरि। ह्वादेर्द्वित्व। चोः कुः। खसे चपा झसानाम्।

निजां गुणः। उपधाया लघोः। वेवेक्ति। विविक्तः। दिरुक्तात्। वेविजति। अयं धातुर्नेनेक्तिवत्। ज्ञातव्यो न कश्चित् विशेषः। विष्लृ व्याप्तौ। लकार एत्। पूर्ववत् प्रत्यया भवन्ति। ह्वादेर्द्विश्च। निजां गुणः। अनेन पूर्वस्य गुणः। उपधाया लघोः। अनेन द्वितीयस्य गुणो भवति। ष्टुत्वम्। वेवेष्टि। वेविष्टः। दिरुक्तात्। वेविषति। षढोः कः सि। अनेन षस्य कः वेवेक्षि। इत्यादीनि। वेविष्टे। वेविष्यात्। वेविषीत। वेवेष्टु। वेविष्टात्। वेविष्टाम्। वेविषतु। वेविष् हि इति जाते। झसां०। षोडः। वेविड्ढि। अन्यानि सुगमानि। वेविष्ट। वेविषाताम्। वेविषत। अवेवेष् दिप्। इति जाते षोडः। दिस्योर्हसात्। अनेन दिप्सिपोर्लोपः। वावसाने। अवेवेट्। अवेवेड्। अवेविष्टाम। अवेविषुः। अन्यानि सुगमानि। अवेविष्ट। अवेविषाताम्। अवेविषत। एतानि सर्वाणि रूपाणि। एतैरेव सूत्रैः सिध्यन्ति। ततस्तेषां व्याख्यानस्यानावश्यकत्वम्। लिट् लकारे द्विश्च। पूर्वस्य। उपधायाः। विवेष। विविषतुः। विविषुः। विवेषिथ। इत्यादीनि। आत्मनेपदे विविषे। विविषाते। विविषिरे। विविषिषे। विष्यात्। विष् सीष्ट इति स्थिते। षढोः कः सि। षत्वम्। कषसं०। सिस्योः। अनेन गुणाभावः। विक्षीष्ट। ष्टुत्वम्। वेष्टा। वेष्टा। षढोः कः सि। क्तित्वात्०। कषसंयोगे०। उपधायाः। वेक्ष्यति वेक्ष्यते। अवेक्ष्यत्। अवेक्ष्यत। एतेषां लकाराणां रूपाणि सुगमानि। लुङ् लकारे। लित्पुषादेर्ङः। अनेन ङप्रत्ययो भवति। ङित्त्वात् गुणाभावः। दिबादावट्। अविषत्। अविषताम्। अविषन्। ङप्रत्ययो वा भवति। इति केचिदाचार्या वदन्ति। तत्पक्षे हशषान्तात्सक्। क्तित्वाद्गुणाभावः। कत्वम्। षत्वम्। कषसं०। अविक्षत्। अविक्षताम्। अविक्षन्। आत्मनेपदेऽपि। 'हशषान्तात्' अनेन सक्प्रत्ययो भवति। अविक्षत। आतिसकोकारलोपः स्वरे। अनेनाकारस्य लोपः अविक्षाताम्। आतोन्तो०। अविक्षत। इत्युभयपदिप्रक्रिया समाप्ता। इति लुग्विकरणा ह्वादयो धातवः कथिताः। समाप्तोऽयं ह्वादिगणः।

---

## अथ दिवादयः।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु।

अथ दिवादिगणः कथ्यते । तत्रादौ परस्मैपदिप्रक्रिया कथ्यते । दिवु क्रीडा-विजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । दिव्धातुरेष्वर्थेषु वर्तते । तत्र क्रीडा खेलनम् । विजिगीषा जेतुमिच्छा । कान्तिरभिलाषः । शेषाः प्रसिद्धार्थाः । प्रसिद्धिस्तु क्रीडार्थस्यैव द्युत्यर्थस्य च । उकार उदित्कार्यार्थः । उदितः क्त्वो वेट् इति इड्विकल्पार्थः । परतोऽन्यत् । अनेन परस्मैपदं भवत्यस्य । तिबा-दयः प्रत्यया भवन्ति । तदा 'दिव् तिप्' इति जाते सूत्रम् ।

## दिवादेर्यः ।

दिवादेर्गणाद्यः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । य्वोर्विहसे । दीव्यति, दीव्येत्, दीव्यतु, अदीव्यत् । दिदेव दिदिवतुः दिदिवुः । दिदेविथ । दीव्यात्, देविता, देवि-ष्यति, अदेविष्यत्, अदेवीत् । षिवु तन्तुसन्ताने । सीव्यति, सीव्येत्, सीव्यतु, असीव्यत्, सिषेव, सीव्यात्, सेविता, सेवि-ष्यति, असेविष्यत्, असेवीत् । नृती गात्रविक्षेपे । ईकारेत् । नृत्यति, नृत्येत्, नृत्यतु, अनृत्यत् । ननर्त ननृततुः ननृतुः । नृत्यात्, नर्तिता, नर्तिष्यति, अनर्तिष्यत् ।

दिवादेर्यः । दिवादेः ( पं० ए० ) यः ( प्र० ए० ) इत्पदं सूत्रम् । दिवादे-र्गणात् चतुर्षु तिबादिषु दिपर्यन्तेषु प्रत्ययेषु परेषु यः प्रत्ययो भवति । सस्वरो यः प्रत्ययो भवति । अयमपोऽपवादः । अनेन यः प्रत्ययो भवति । य्वोर्विहसे । अनेन दीर्घो भवति । दीव्यति । दीव्यतः । दीव्यन्ति । अदे । अनेनाकारस्य लोपः । दीव्यसि । दीव्यथः । दीव्यथ । दीव्यामि । व्मोरा । दीव्यावः । दीव्यामः । ननु 'अप् कर्तरि' । इति सामान्येनोक्तत्वात् दिवादेरपि अप्प्रत्ययः क्रियतां तत्राह । अपो-ऽपवादः । दिवादेरारभ्य क्र्यादिगणो यावत् तावत् अप्प्रत्ययो न भवति इत्यर्थः । यादादौ तु भवतिवत् या इत्यादीनि सूत्राणि योज्यानि । दीव्येत् । दीव्येताम् । युस इट् । च इए । दीव्येयुः । दीव्येः । दीव्येतम् । दीव्येत । यामियम् । दीव्येयम् । दीव्येव । दीव्येम । तुवादौ यप्रत्यये कृते सति भवतिवत्कार्यं भवति । दीव्यतु । दीव्यतात् । दीव्यताम् । दीव्यन्तु । र्शाबान् । अदे । अनेनाकारस्य

लोपो भवति। अतः। दीव्य। दीव्यतात्। दीव्यतम्। दीव्यत। सवर्णे०। दीव्यानि। दीव्याव। दीव्याम। दिबादाऽट्। अन्यत् तु भवतिवत्। अदीव्यत्। अदीव्यताम्। अदे। अदीव्यन्। अन्यानि सुगमानि। लिट्लकारे द्विश्च पूर्वस्य उपधायाः। दिदेव। दिदिवतुः। दिदिवुः। गुणः। दिदेविथ। शेषाणि सुगमानि। य्वोर्विंहसे। दीव्यात्। दीव्यास्ताम्। उपधाया लघोः। सिसता० अनेनेट्। देविता। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे वौ इटौ। अडागमः। गुणः। अदेवीत्। अदेविष्टाम्। अदेविषुः। षिवु तन्तुसन्ताने। उकारः। आदेः ष्णः स्नः। तिबादयः। दिवादेर्यः। य्वोर्विंहसे। अनेन दीर्घः। सीव्यति सीव्येत्। सीव्यतु। असीव्यत्। एतेषां रूपाणि सुगमान्यतो व्याख्यानं न कृतम्। लिट्लकारे। द्वित्वम्। पूर्वस्य। उपधायाः। क्वित्वात्०। सिषेव। सिषिवतुः। सिषिवुः। गुणः। सिषेविथ। य्वोर्विंहसे। सीव्यात्। सीव्यास्ताम्। सीव्यासुः। उपधायाः। सिसता० अनेनेट्। सेविता सेविष्यति। अत्र षत्वम्। लुङ्लकारे। वौ इटौ। इट ईटि। गुणः। अडागमः। असेवीत्। असेविष्टाम्। असेविषुः। इत्यादीनि रूपाणि ज्ञातव्यानि नृती गात्रविक्षेपे। पूर्ववत् तिबादयो भवन्ति। दिवादेर्यः। अनेन यप्रत्ययो भवति। ईकार इत्। नृत्यति नृत्यतः नृत्यन्ति। नृत्येत्। नृत्यतु। अनृत्यत्। लिट्लकारे द्वित्वम्। पूर्वस्य रः। उपधाया लघोः। ननर्त्त। क्वित्वान्न गुणः। ननृततुः ननृतुः। ननर्त्तिथ अन्यानि सुगमानि। नृत्यात्। सिसता० अनेनेट् प्रत्ययो भवति 'गुणः' अनेन गुणः भवति। नर्तिता। अन्यानि सुगमानि। नर्त्तिष्यति। षत्वं भवति। अनर्तिष्यत्। सूत्रम्।

## नृत्छृद्कृत्क्षतां सस्यासेरिट् वा वक्तव्यः।

नर्त्स्यति, अनर्त्स्यत्, अनर्तीत्। जृष् वयोहानौ। ऋत इर्। य्वोर्विंहसे। जीर्यति, जीर्येत्, जीर्यतु, अजीर्यत्, जजार। गुणः। जजरतुः जजरुः। जीर्यात्। ईटो ग्रहाम्। जरीता-जरिता, जरिष्यति-जरीष्यति, अजरिष्यत्-अजरीष्यत्। इरितो वा। अजारत् अजरीत्। शो तनूकरणे।

नृत्छृद०। नृत्छृद्कृत्क्षतां धातूनां असेः स इट् वा वक्तव्यः। अनेनास्य

से परे वा इड् भवति। उपधाया लघोः। अनेन गुणो भवति। रात्रपोषिः। नर्त्स्यति। अनर्त्स्यत्। रूपाणि सुगमानि सन्ति। लुङ्लकारे। 'अनृत् सि दिप्' इति जाते सिसता०। सेः। इट ईटि। गुणः। अनर्त्तीत्। अनर्त्तिष्टाम्। अनर्त्तिषुः। अन्यानि सुगमानि। जॄइर्। वयोहानौ। इर् इत् 'इरितो वा' इति सूत्रस्यविशेषणार्थः। दिवादेर्यः। जॄ य तिप् इति जाते। ऋत इर्। अनेन ऋकारस्य इर्। य्वोर्विहसे। अनेन दीर्घः। जीर्यति। जीर्यतः। अदे। जीर्यन्ति। जीर्येत्। जीर्यतु। जीर्यतात्। जीर्यताम्। अदे। जीर्यन्तु। जीर्य। अन्यानि सुकराणि। दिवादावर्। अजीर्यत्। अजीर्यताम्। अजीर्यन्। लिट्लकारे। द्वित्वम्। सस्वरादिः। रः। धातोर्नामिनः। अनेन वृद्धिः। जजार। ऋसंयोगात्। अनेनाकित्त्वाद्गुणो भवति। गुणः। जजरतुः। जजरुः। जजरिथ। जॄयात्। इति स्थिते। ऋत इर्। अनेनेर्। य्वोर्विहसे। अनेन दीर्घः। जीर्यात्। जॄ ता इति जाते। सिसता० अनेनेट्। गुणो भवति। जरिता। ईटो ग्रहाम् अनेन वा दीर्घः। जरीता। एवमन्येषामपि लकाराणां रूपाणि ज्ञेयानि अस्य धातोः। इरितो वा अनेन ङप्रत्ययो भवति। दृशादेः। अनेन गुणः। अजरत्। अजरताम्। अजरन्। ङप्रत्ययाभावे। सिप्रत्ययो भवति। सेर्णित्त्वात् वृद्धिः। अन्यत् साधनं तु पूर्ववत्। दिवादावट्। अजारीत्। अजारिष्टाम्। अजारिषुः। अन्यानि सुगमानि। शो तनूकरणे। तिवादयो भवन्ति। दिवादेर्यः। शो य तिप् इति जाते। सूत्रम्।

## य्योः।

यप्रत्यये परे धातोरोकारस्य लोपो भवति। श्यति, श्येत्, श्यतु, अश्यत् शशौ, शायात्, शाता, शास्यति, अशास्यत्। वा सिलोपः। अशात्, अशासीत्। छो छेदने। छ्यति, छ्येत्, छ्यतु, अछ्यत्, चच्छौ, छायात्, छाता, छास्यति, अच्छास्यत् अच्छात् अच्छासीत्। षोऽन्तकर्मणि। स्यति, स्येत्, स्यतु, अस्यत्, ससौ, सेयात्, साता, सास्यति, असास्यत्, असात् असासीत्। दो अवखण्डने। द्यति, द्येत्, द्यतु, अद्यत्, ददौ,

**देयात्, दाता, दास्यति, अदास्यत्, अदात्। राध् साध् संसिद्धौ। राध्यति, राध्येत्, राध्यतु, अराध्यत्, रराध।**

ष्योः। यि (स० ए०) ओः (ष० ए०) यप्रत्यये परे सति धातोरोकारस्य लोपो भवति। अनेन ओकारस्य लोपः। स्वरहीन०। श्यति। श्यतः। अदे। श्यन्ति। श्येत्। श्येताम्। श्येयुः। श्यतुः। श्यतात्। श्यताम्। श्यन्तु। अश्यत्। अश्यताम्। अश्यन्। सर्वाणि रूपाणि सुगमानि। लिट्लकारे। संध्यक्षराणां०। द्विश्च। आतो णप् डौ। शशौ। आतोऽनपि। अनेनान्त्याकारस्य लोपो भवति। शशतुः। शशुः। अत्वतः। शशिथ। शशाथ। संध्यक्षराणां०। शायात्। शाता। अन्येषां सुगमानि। लुङ्लकारे। अशासि दिप् इति जाते। शाच्छासा० अनेन वा सेर्लोपः। दिबादावट्। अशात्। अशाताम्। अशुः। इत्यादीनि। सेर्लोपाभावपक्षे। 'आदन्तानाम्' अनेनेट् सकौ। अशासीत्। अशासिष्टाम्। अशासिषुः। इयोरूपयोः षत्वं भवति। छो छेदने। प्रत्ययादयश्च पूर्ववत् भवन्ति। ष्योः। अनेन यकारे परे ओकारस्य लोपः। छ्यति। छ्येत्। छ्यतु। दिबादावट्। अछ्यत्। चतुर्णां लकाराणां रूपाणि सुगमानि सन्ति। लिट्लकारे छो णप् इति स्थिते। सन्ध्यक्ष०। द्विश्च। ह्रस्वः। आतो णप् डौ। झपानाम्। चच्छौ। आतोऽनपि। अनेनान्त्याकारलोपः। चच्छतुः। चच्छुः। चच्छिथ। चच्छाथ। संध्यक्षराणां०। छायात्। छायास्ताम्। छायासुः। छाता। अन्यानि सुगमानि। लुङ्लकारे। शाच्छासा० अनेन वा सेर्लोपो भवति। तदा। अच्छात्। अच्छाताम्। अच्छुः। इत्यादीनि। यदा सेर्लोपो न भवति तदा आदन्तानां० अनेनेट्सकौ भवतः। दिबादावट्। अच्छासीत्। अच्छासिष्टाम्। षत्वम्। ष्टुत्वम्। अच्छासिषुः। षोऽन्तकर्मणि। आदेः षः सः। ष्योः। स्यति। लिट्। ससौ। लुङ्। वा सिलोपः। असात्। असासीत्। दो अवखण्डने। तिबादयः। दिवादेर्यः। ष्योः। द्यति। द्यतः। अदे। द्यन्ति। द्येत्। द्यतु। द्यतात्। द्यताम्। अदे। अनेन अकारस्य लोपः। द्यन्तु। द्य। अन्यानि सुगमानि। अद्यत्। अद्यताम्। अद्यन्। अद्यः। लिट्लकारे 'दो णप्' इति जाते। संध्यक्षराणां०। द्विश्च। ह्रस्वः। आतो णप् डौ। अनेन आकारस्य लोपो भवति। ददौ। आतोऽनपि। ददतुः।

ददुः । ददिथ । ददाथ । इत्यादीनि । संध्यचरणाम् । दायात् । इति जाते । दादेरे: । अनेन आकारस्य एकारः । देयात् । दाता । लुङ्लकारे । दादेः पि । अनेन सेर्लोपो भवति । अदात् । अदाताम् । अदुः । इत्यादीनि । राध् साध् संसिद्धौ । तिबादयः । दिवादेर्यः । स्वरहीनम् । राध्यति । राध्यतः । राध्यन्ति । राध्येत् । राध्येताम् । राध्येयुः । राध्यतु । राध्यतात् । राध्यताम् । अदि० । राध्यन्तु । अराध्यत् । अराध्यताम् । अराध्यन् । लिट्लकारे । राध् णप् इति जाते । द्वित्वं । झसः । रराध ।

## राधतेर्हिंसायां किति णादौ सेटि थपि चैत्व-पूर्वलोपौ वा ।

रेधतुः रराधतुः । राध्यात्, राद्धा, रात्स्यति, अरात्स्यत्, अरात्सीत्, अराद्धाम् । इष् सर्पणे । इष्यति, इष्येत्, इष्यतु, ऐष्यत्, इयेष, इष्यात्, एषिता, ऐषिष्यति, ऐषिष्यत्, ऐषीत् । व्यध् ताडने । ग्रहां क्ङिति च । विध्यति, विध्येत्, विध्यतु, अविध्यत्, विव्याध, व्यद्धा, व्यत्स्यति, अव्यत्स्यत् । अव्यात्सीत्, अव्याद्धाम्, अव्यात्सुः । पुष् पुष्टौ । पुष्यति, पुष्येत्, पुष्यतु अपुष्यत्, पुपोष, पुष्यात्, पोष्टा, पोक्ष्यति, अपोक्ष्यत्, अपुषत् । श्लिष् आलिङ्गने । श्लिष्यति, श्लिष्येत्, श्लिष्यतु, अश्लिष्यत्, शिश्लेष, श्लिष्यात्, श्लेष्टा, श्लेक्ष्यति, अश्लेक्ष्यत् । इशषान्तात्सक् ।

राधतेः । राधतेर्धातोर्हिंसायाम् । किति णादौ परे सेटि थपि परे च एत्वपूर्वलोपौ भवतः । अनेनास्य धातोर्वा एत्वपूर्वलोपौ भवतः । रेधतुः । रराधतु । इत्यादीनि रूपाणि भवन्ति । इति ज्ञातव्यम् । थपि रराधिथ । रराद्ध । रेधिथ । राध्यात् । राध्यास्ताम् । राध्यासुः । 'राध् ता' इति जाते । तथोर्धः । अनेन तकारस्य धकारः । झबे जबाः । राद्धा । राद्धारौ । राद्धारः । राध् स्य तिप् इति जाते । खसे चपा झसानाम् । अनेन धस्य तः । रात्स्यति । दिबादावट् । अरात्स्यत् लुङ्लकारे । अराध् सि

ईट् दिप् इति जाते। खसे०। स्वरहीनम्। वावसाने। अरात्सीत्। झसात्। अनेन सेर्लोपो भवति। अराद्धाम्। अरात्सुः। इत्यादीनि रूपाणि ज्ञातव्यानि। साध् धातोरपि रूपाणि राध्धातुवत् ज्ञातव्यानि। अस्यैत्वपूर्व-लोपौ न भवतः। साध्यति। लिट्लकारे द्वित्वादिकं सर्वं भवति। ससाध। ससाधतुः। ससाधुः। ससाधिथ। तथोर्धः। अनेन थकारस्य धत्वम्। झबे जबाः। ससाद्ध। इत्यादीनि रूपाणि भवन्ति। लुङ्लकारे। अरात्सीत्। अराद्धाम्। अरात्सुः। इष् सर्पणे। तिबादयो भवन्ति। दिवादेर्यः। अनेन यप्रत्ययो भवति। इष्यति। इष्यतः। इष्यन्ति। इत्यादीनि। इष्येत्। इष्येताम्। इष्येयुः। इष्यतु। इष्यतात्। इष्यताम्। अदे। इष्यन्तु। स्वरादित्वात्। दावडागमौ। अइए। एऐऐ। ऐष्यत्। ऐष्यताम्। ऐष्यन्। लिट्लकारे। द्विश्च। स्वरादिः। उपधायाः। अनेन गुणः। असवर्णे। इयेष। सवर्णे०। ईषतुः। ईषुः। गुणः। इयेषिथ। इत्यादीनि। इष्यात्। उपधाया लघोः। अनेन गुणो भवति। सिसता० अनेनेट्। एषिता। एषितारौ। एषितारः। अन्येषां रूपाणि सुगमानि। लुङ्लकारे। दाविटौ भवतः। इट ईटि। अनेन सेर्लोपो भवति। दावडागमौ भवतः। ऐषीत्। ऐषिष्टाम्। ऐषिषुः। इत्यादीनि भवन्ति। व्यध् ताडने। तिबादयः। दिवादेर्यः। अनेन यप्रत्ययो भवति। ग्रहां क्ङिति च। अनेन सम्प्रसारणं भवति। यकारस्य सस्वरस्य इकारः। विध्यति। विध्यतः। अदे। विध्यन्ति। इत्यादीनि। विध्येत्। विध्यतु। अविध्यत्। अविध्यताम्। अविध्यन्। 'व्यध् णप्' इति स्थिते। द्विश्च। स्वरादिः। व्य व्यध् णप् इति जाते। 'णबादौ पूर्वस्य' अनेन सम्प्रसारणम्। पूर्वस्य। अत उपधायाः। विव्याध। 'व्य व्यध् अतुस्' इति जाते। णादौ पूर्वस्य। ग्रहां क्ङिति च। विविधतुः। विविधुः। विव्यधिथ। अत्यतः। तथोर्धः। झबे जबाः। विव्यद्ध। सम्प्रसारणम्। विध्यात्। विध्यास्ताम्। विध्यासुः। तथोर्धः। झबे जबाः। व्यद्धा। व्यद्धारौ। व्यद्धारः। खसे चपा०। व्यत्स्यति। अव्यत्स्यत्। लुङ्लकारे। अ व्यध् सि दिप् इति जाते। सेः। अनेन ईट्। खसे चपा झसानाम्। सेर्णित्त्वात्। वृद्धिः। अव्यात्सीत्। झसात्। अनेन सेर्लोपो भवति। तथोर्धः। अव्याद्धाम्। अव्यात्सुः। अव्यात्सीः। अव्याद्धम्। अव्याद्ध। अव्यात्सम्। अव्यात्स्व। अव्यात्स्म। पुष् पुष्टौ। तिबादयः। दिवादेर्यः। पुष्यति। अन्यानि सुगमानि। लिट्-

लकारे । द्वित्व । पूर्वस्य, 'उपधाया लघोः' अनेन गुणः । पुपोष । पुपुषतुः । पुपुषुः । पुपोषिथ । पुष्यात् । उपधायाः । ष्टुत्वम् । पोष्टा । 'पोष् स्यप् तिप्' इति जाते । षढोः कः सि । क्विलात्० । कष० । पोक्ष्यति । अपोक्ष्यत् । लुङ्लकारे । लित्पुषादिङः । ङित्त्वात् गुणाभावः । दिवादावट् । अपुषत् अपुषताम् अपुषन् । श्लिष् आलिङ्गने । तिबादयः । दिवादेर्यः । श्लिष्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्वित्व । पूर्वस्य । उपधाया लघोः । शिश्लेष । शिश्लिषतुः । शिश्लिषुः । शिश्लेषिथ । इत्यादीनि । श्लिष्यात् । श्लिष् ता इति स्थिते । गुणः । ष्टुत्वम् । श्लेष्टा । श्लिष् स्यप् तिप् । इति जाते । गुणः । षढोः । षत्वम् । कष० । श्लेक्ष्यति । अश्लेक्ष्यत् । अश्लेक्ष्यताम् । अश्लेक्ष्यन् । लुङ्लकारे । शलइगुपधादनिटः क्सः । अनेन क्सप्रत्ययः । दिवादावट् । षढोः कः सि । क्विलात्० । कष० । अश्लिक्षत् । अश्लिक्षताम् । अश्लिक्षन् ।

## श्लिषेरालिङ्गने क्सः ।

ङापवादः । अश्लिक्षत्कन्यां चैत्रः । अनालिङ्गने समश्लिषत् जतु काष्ठम् । तृप् प्रीणने । तृप्यति, तृप्येत्, तृप्यतु, अतृप्यत्, ततर्प, तृप्यात् । रधादित्वादिड्विकल्पेन । तर्पिता-त्रप्ता-तर्प्ता । रारो भ्रमि इशाम् । तर्पिष्यति-त्रप्स्यति-तर्प्स्यति अतर्पिष्यत्-अत्रप्स्यत्-अतर्प्स्यत् ।

श्लिषेः । श्लिषेर्धातोरालिङ्गनेऽर्थे क्सप्रत्ययो भवति । अनालिङ्गने 'लित्पुषादिङः' अनेन ङप्रत्ययः । ङित्त्वात् गुणाभावः । दिवादावट् । अश्लिषत् । अश्लिषताम् । अश्लिषन् । आलिङ्गने । अश्लिक्षत् कन्यां चैत्रः । इत्युदाहरणम् । अनालिङ्गने तु । समश्लिषत् जतु काष्ठम् । इत्युदाहरणम् । तृप् प्रीणने । तिबादयः । दिवादेर्यः । तृप्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्वित्व । पूर्वस्य हलादिः । रः । उपधाया लघोः । ततर्प । ततृपतुः । ततृपुः । ततर्पिथ । इत्यादीनि । तृप्यात् । अस्य धातोरधादित्वात् इड् विकल्पेन भवति । गुणः । तर्पिता । तर्पितारौ । तर्पितारः ।

इडभावे। गुणः। 'त् अर् प् ता'। इति जाते। रारी भसे इत्याम्। अनेन अरो रो वा भवति। त्रप्ता। तर्पिता। तर्पिष्यति। तर्पिष्यतः। तर्पिष्यन्ति। इडभावे गुणः। रारोभसे०। त्रप्स्यति। विकल्पेन। तर्प्स्यति। रूपाणि सुगमानि। अतर्पीत्। अत्रप्स्यत्। अतर्प्स्यत्। रूपाणि सुगमानि। लुङ्लकारे सूत्रम्।

## स्पृशमृशकृशतृपां सिर्वा वक्तव्यः।

रधादित्वादिट्। अतर्पीत् अत्राप्सीत् अताप्सीत्। पुषादित्वात् ङः। अतृपत्। एवं दृप् हर्षविमोहनयोः। दृप्यति। मुह वैचित्त्ये। मुह्यति, मुमोह, मुह्यात्। द्रुहादीनां घत्वढत्वे वा। मोढा मोग्धा मोहिता। रधादित्वादिट्। मोक्ष्यति-मोहिष्यति, अमोक्ष्यत्-अमोहिष्यत्। पुषादित्वात् ङः। अमुहत्, अमोहीत्, अमौक्षीत्, अमुक्षत्। णश् अदर्शने। नश्यति, ननाश। फणादित्वादेत्वपूर्वलोपौ। नेशतुः नेशुः। नश्यात्।

स्पृश०। अतृप् सि दिप् इति जाते। सिसतो०। सेः। इट ईटि। गुणः। वावसाने। अतर्पीत्। अतर्पिष्टाम्। अतर्पिषुः। इडभावपक्षे। उपधाया लघोः। सेः। रारोभसे। अत उपधायाः०। अत्राप्सीत्। अत्राप्ताम्। अत्राप्सुः। शेषाणि सुगमानि। अताप्र्सीत्। अतार्प्ताम्। अतार्प्सुः। पुषादित्वात्० अस्य धातोर्ङप्रत्ययो भवति। ङित्वात् गुणाभावः। अतृपत्। अतृपताम् अतृपन् अन्यानि सुगमानि। एवं दृप् हर्षविमोहनयोः। तिबादयः। दिवादेर्यः। दृप्यति। अयं धातुः तृप्यतिवत्। मुह् वैचित्त्ये। पूर्ववत् तिबादयः। दिवादेर्यः। मुह्यति। मुह्यतः। मुह्यन्ति। मुह्येत्। मुह्येताम्। मुह्येयुः। मुह्यतु। मुह्यतात्। मुह्यताम्। मुह्यन्तु। अमुह्यत्। अमुह्यताम्। अमुह्यन्। मुह् णप् इति स्थिते द्वित्वं। पूर्वस्य उपधाया लघोः। मुमोह। मुमुहतुः। मुमुहुः। गुणः। मुमोहिथ। इत्यादीनि मुह्यात्। मुह् ता इति स्थिते। द्रुहादीनां घत्वढत्वे वा। अनेन वा हस्य ढः। उपधाया लघोः। तथोर्धः। ष्टुत्वम्। ढि ढो लोपः। मोढा। मोढारौ। मोढारः।

घत्वे कृते सति। मुह् ता इति जाते। उपधाया लघोः। तथोर्धः। झषे जशा.। मोग्धा। मोग्धारौ। मोग्धारः। रधादित्वाद्वा इड् भवति। गुणः। मोहिता। मुह् स्य तिप् इति जाते। उपधाया लघोः। षढोः कः सि। कित्वात्०। कषसंयोगे०। मोच्यति। इटि कृते सति। मोहिष्यति। अमोच्यत्। अमोहिष्यत्। लुङ्लकारे। अमोक्षीत्। अमोहिष्टाम्। अमोहिषुः। इडभावपक्षे। अनिटो नामिवतः। अनेन वृद्धिः। अमौक्षीत्। अमौढाम्। अमौक्षुः। ह्रस्वपान्तात्०। कित्वात् गुणाभावः। षढोः कः सि। कित्वात्०। कष०। अमुक्षत्। अमुक्षताम्। अमुक्षन्। पुषादित्वात् ङप्रत्ययो भवत्यस्य। ङित्वात् गुणाभावः। दिवादावट्। अमुहत्। अमुहताम्। अमुहन्। णश् अदर्शने। आदेः ष्णः स्नः। अनेन णकारस्य नकारः। तिवादयः। दिवादेर्यः। नश्यति। चतुर्णां लकाराणां रूपाणि सुगमानि। लिट्लकारे द्वित्वं। पूर्वस्य हसादि०। अत उपधायाः। ननाश। लोपः। पचां०। अनेनैत्वपूर्वलोपौ भवतः। नेशतुः। नेशुः। नेशिथ। अत्वत०। छशष०। ष्टुत्वम्। ननष्ठ। इत्यादीनि। नश्यात्। नश् ता इति स्थिते। छशष०। सूत्रम्।

## मस्जिनशोर्झलि नुम् वक्तव्यः।

**छशषराजादेः षः। नंष्टा।**

मस्जिनशोः। मस्जिनशोर्धात्वोर्झलि परे नुम् वक्तव्यः। अनेन नुम्। मिदन्त्यात्। नश्चापदान्ते। ष्टुत्वम्। नंष्टा। नंष्टारौ। नंष्टारः। प्रनंष्टा। इति जाते। उपसर्ग०। अनेन णकारे प्राप्ते। सूत्रम्।

## नशेः षान्तस्य।

**नशेः षान्तस्य णत्वं न स्यात्। प्रनंष्टा-नशिता, नंक्ष्यति-नशिष्यति; अनशिष्यत्-अनंक्ष्यत्। पुषादित्वात् ङः।**

नशेः षान्तस्य। षान्तस्य नशेर्धातोर्णत्वं न भवति। अनेन। तन्निषेधः। प्रनंष्टा। रधादित्वाद् वेट्। नशिता। नश् स्य तिप् इति जाते। छशष०। मस्जि०। कत्वम्। षत्वम्। कष०। नंक्ष्यति। इटि कृते सति। षत्वम्।

नशिष्यति। दिवादावट्। अनंक्ष्यत्। अनशिष्यत्। लुङ्लकारे पुषादित्वाद ङप्रत्ययो भवति।

## ङे नशेरत एत्वं वा वाच्यम्।

अनेशत्। अनशत्। शम् दम् उपशमे।

ङे। ङप्रत्यये परे नशिधातोरत एत्वं वा वाच्यम्। अनेन अकारस्य एकारः। अनेशत्। वाग्रहणात्। अनशत्। अनशताम्। अनशन्। इत्यादीनि। शम् दम् उपशमे। तिबादयः। दिवादि०। सूत्रम्।

## शमां दीर्घः।

शमादीनां दीर्घो भवति ये परे अबादौ विषये च। शाम्यति, शाम्येत्, शाम्यतु, अशाम्यत्। शशाम शेमतुः शेमुः। शम्यात्, शमिता, शमिष्यति, अशमिष्यत्। लित्पुषादिर्ङः। अशमत्। अशमीदिति केचित्। दम् श्रम् तम् भ्रम् क्षम् क्लम् मद् एते शमादयः। रूपं तद्वत्। ञिमिदा स्नेहने। आञी इतौ।

शमाम्। (ष० ब०) दीर्घः (प्र० ए०) शमादीनां धातूनां यप्रत्यये परे अबादौ विषये दीर्घो भवति। अनेन दीर्घः। शाम्यति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे द्वित्वम्। पूर्वस्य। अत उपधायाः। शशाम। 'शशाम वृष्ट्यापि विना दवाग्निः' इत्युदाहरणम्। लोपः पचां०। शेमतुः। शेमुः। शेमिथ। शशंथ। इत्यादीनि। शम्यात्। सिसतां०। शमिता। षत्वम्। शमिष्यति। दिवादावट्। अशमिष्यत्। लित्पुषादिर्ङः। अशमत्। अशमताम्। अशमन्। इत्यादीनि। केचिदाचार्या अस्य अशमीत् इति रूपमिच्छन्ति। साधनं तु पूर्ववत्। दम्धातोरपि रूपाणि शम्धातुवत्। शम् दम् श्रम् तम्। भ्रम्। क्षम्। क्लम्। मद् एते शमादयो ज्ञातव्याः। तेषां रूपाणि पूर्वधातुवत्। न कश्चित् विशेषः। ञिमिदा स्नेहने। आञी इतौ। तिबादयः। दिवादेर्यः। मिद् य तिप् इति जाते। सूत्रम्।

मिदेर्ये गुणो वक्तव्यः।

मेद्यति मेद्येत् मेद्यतु अमेद्यत्। मिमेद मिमिदतुः मिमिदुः। मिद्यात्, मेदिता, मेदिष्यति, अमेदिष्यत्, अमिदत्। असु क्षेपणे। अस्यति, आस, असिता, असिष्यति।

मिदे०। मिदेर्धातोर्यप्रत्यये परे गुणो भवति। मेद्यति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्विलम्। पूर्वस्य। उपधाया लघोः। मिमेद। मिमिदतुः। मिमिदुः। मिमेदिथ। इत्यादीनि रूपाणि भवन्ति। मिद्यात्। उपधाया लघोः। मेदिता। अन्यानि सुगमानि। लुङ्लकारे लित्पुषादेर्ङः। दिवादावट्। अमिदत्। अमिदताम्। अमिदन्। इत्यादीनि भवन्ति रूपाणि। असु क्षेपणे। तिवादयः। दिवादेर्यः। अस्यति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे द्विलम्। स्वस्वरादिर्द्विर०। अत उप०। सवर्णे०। आस। आसतुः। आसुः। आसिथ। इत्यादीनि। अस्यात्। सिसता०। असिता। अन्यानि सुगमानि। अन्येषामपि लुङ्लकारे। लित्पुषादेर्ङः। हावडागमौ। आस् ङ दिप् इति जाते। सूत्रम्।

अस्यतेर्ङे थुग्वक्तव्यः।

आस्थत्। इति दिवादिषु परस्मैपदिप्रक्रिया।

अस्यतेः। अस्यतेर्धातोर्ङप्रत्यये परे थुग् वक्तव्यः। उकार उच्चा०। ककारः कित्। आस्थत् आस्थताम् आस्थन्। इत्यादीनि। इति परस्मैपदिप्रक्रिया समाप्तिमगमत्।

अथात्मनेपदिनः।

जनी प्रादुर्भावे। ईकारेत्।

अथात्मनेपदिप्रक्रिया कथ्यते। जनी प्रादुर्भावे। ईकार। इत् तआदयः प्रत्ययाः सर्वत्र भवन्ति। दिवादेर्यः 'जन् य तिप्' इति जाते सूत्रम्।

## जाजनीज्ज्ञोः ।

जनी प्रादुर्भावे। ज्ञा अवबोधने। अनयोर्जादेशो भवति चतुर्षु परेषु। जायते, जायेत, जायताम्, अजायत। गमां स्वरे। ञुत्वम्। जज्ञोर्ज्ञः। जज्ञे, जनिषीष्ट, जनिता, जनिष्यते, अजनिष्यत-अजनिष्ट।

जाजनीज्ज्ञोः। जा (प्र० ए०) जनीज्ज्ञोः (ष० द्वि०)। जनी प्रादुर्भावे। ज्ञा अवबोधने। अनयोर्धात्वोर्जा इत्यादेशो भवति चतुर्षु लकारेषु परेषु। अनेन जा इत्यादेशः। जायते। चतुर्णां रूपाणि सुगमानि। लिट् लकारे। द्वित्वम्। सस्वरादिः। ह्रस्वः। गमां स्वरे। अनेनोपधाया लोपो भवति। ञुत्वम्। जज्ञोर्ज्ञः। जज्ञे। जज्ञाते। जज्ञिरे। इत्यादीनि। सिसुता०। षत्वम्। जनिषीष्ट। जनिता। लुङ्लकारे। भूते सिः। सिसुता०। षत्वम्। ष्टुत्वम्। अजनिष्ट। सूत्रम्।

## पदादेस्तनि कर्तर्यपि सेरिण् वक्तव्यः दीपादिभ्यो वा।

पद् दीप् जन् बुध् पूरि तायि प्यायि एते पदादयः।

पदादेः। पदादेर्धातोस्तनि परे सति कर्तरि अपि सेरिण् वक्तव्यः। दीपादिभ्यो धातुभ्यो वा भवति। पद दीप् बुध् पूरि तायि प्यायि एते पदादयो ज्ञातव्याः।

## लोपः।

इण्संयोगे तनो लोपो भवति। जनिवध्योर्न वृद्धिः। अजनि अजनिषाताम्। दीपी दीप्तौ। दीप्यते, दीप्येत, दीप्यताम्, अदीप्यत, दिदीपे, दीपिषीष्ट, दीपिता, दीपिष्यते, अदीपिष्यत, अदीपिष्ट, अदीपि। पूरी आप्यायने। पूर्यते,

पूर्येत, पूर्यताम्, अपूर्यत, पुपूरे, पूरिषीष्ट, पूरिता, पूरिष्यते, अपूरिष्यत, अपूरि, अपूरिष्ट। पद् गतौ। पद्यते, पद्येत, पद्यताम्, अपद्यत, पेदे, पत्सीष्ट, पत्ता, पत्स्यते, अपत्स्यत। अपादि, अपत्सातम्, अपत्सत। बुध् अवगमने। बुध्यते, बुध्येत, बुध्यताम्, अबुध्यत, बुबुधे, आदिजबानाम्। सिस्वोः। बसे चपा झसानाम्। भुत्सीष्ट, बोद्धा, भोत्स्यते। अबुद्ध अभुत्सातम्। अभुत्सत। अबोधि। तायङ् पालनसन्तत्योः। तायते, तताये, तायिषीष्ट, तायिता, तायिष्यते, अतायिष्यत, अतायिष्ट, अतायि। ओप्यायिङ् वृद्धौ। प्यायते, पप्याये, प्यायिषीष्ट, प्यायिता, प्यायिष्यते, अप्यायिष्यत, अप्यायिष्ट, अप्यायि, अप्यायिषातम्। इमौ द्वौ भ्वादिकौ। इति दिवादिष्वात्मनेपदिप्रक्रिया।

लोपः। इण् संयोगे सति तन्प्रत्ययस्य लोपो भवति। णित्वात् वृद्धौ प्राप्तायाम्। जनिवध्योः। अनेन वृद्धेर्निषेधः। अजनि। अजनिषाताम्। आतोन्तो०। अजनिषत। इत्यादीनि। दीपी दीप्तौ। ईकार इत्। दिवादेर्यः। दीप्यते। चतुर्णां सुगमानि। लिट् लकारे। द्वित्वम्। पूर्वस्य ह्रस्वः। दिदीपे। दिदीपाते। दिदीपिरे। इत्यादीनि। सिसता०। दीपिषीष्ट। अन्येषां रूपाणि सुगमानि। लुङ्लकारे। भूते सिः। सिसता। षत्वम्। ष्टुत्वम्। दिवादावट्। अदीपिष्ट। पदादेः। अनेन सेरिण् वा भवति। यदा सेरिण् तदा लोपः। अदीपि। अदीपिषाताम्। आतोन्तो०। अदीपिषत। इत्यादीनि। पूरी आप्यायने। ईकार इत्। तथादयः। दिवादेर्यः। पूर्यते। चतुर्णां सुगमानि। लिट् लकारे। द्विश्च। पूर्वस्य ह्रस्वः। पुपूरे। पुपूराते। पुपूरिरे। सिसता०। षत्वम्। पूरिषीष्ट। अन्येषां सुगमानि। लुङ्लकारे। वा सेरिण् भवति। अन्यत्साधनं तु पूर्ववत्। अपूरि। अपूरिष्ट। अपूरिषाताम्। अपूरिषत। ष्टुत्वम्। अपूरिष्टाः। इत्यादीनि। पद गतौ। तथादयः। दिवादेर्यः। पद्यते। इत्यादीनि। लिट् लकारे। द्वित्वम्। पूर्वस्य। लोपः पचाम्। पेदे। पेदाते। पेदिरे। पद सीष्ट इति जाते। खसे०।

पत्सीष्ट। पत्ता। इत्यादीनि। लुङ्लकारे। अ पद सि दिप् इति जाते। 'पदादेः' अनेन सेरिण्। णित्त्वाद् वृद्धिः। लोपः। अपादि। अपत्सातान्। अपत्सत। इत्यादीनि। बुध अवबोधने। त आदयः। दिवादेर्यः। बुध्यते। अन्येषां सुगमानि। लिट्लकारे। द्वित्वम्। पूर्वस्य। बुबुधे। बुबुधाते। बुबुधिरे। इत्यादीनि। बुध् सीष्ट इति स्थिते। आदिजबानाम्। सिसौः। अनेन गुणाभावः। खसे चपा०। भुत्सीष्ट। उपधायाः। लघोर्धः। बोद्धा। बोद्धारौ। बोद्धारः। आदिजबानाम्। भोत्स्यते। अभोत्स्यत्। लुङ्लकारे। पदादेः। गुणः। लोपः। अबोधि। अबुद्ध। अभुत्सातान्। अभुत्सत। इत्यादीनि। तायङ् पालनसन्तत्योः। ङकार आत्मनेपदार्थः। त आदयः। अप् कर्त्तरि। अनेन अप्प्रत्ययो भवति। भ्वादित्वात्। तायते। लिट्लकारे। द्वित्वम्। पूर्वस्य। ह्रस्वः। तताये। ततायाते। ततायिरे। इत्यादीनि भवन्ति। 'सिसता०। अनेनेट्। षत्वम्। तायिषीष्ट। तायिता। लुङ्लकारे। वा सेरिण् भवति। अन्यत्साधनं तु पूर्ववत्। अतायिष्ट। अतायि। अतायिषातान्। अतायिषत इत्यादीनि रूपाणि भवन्ति। ओप्यायिङ् वृद्धौ। ङकार आत्मनेपदार्थः। ओकारेकारौ इतौ स्तः। त आदयः। अप् कर्त्तरि। प्यायते। अन्येषां लकाराणां रूपाणि सुगमानि। तस्माद् व्याख्यानं न कृतम्। लिट्लकारे द्वित्वं। पूर्वस्य ह्रस्वः। पप्याये, पप्यायाते। पप्यायिरे। इत्यादीनि। सिसता० अनेनेट्। प्यायिषीष्ट। प्यायिता। लुङ्लकारे वा सेरिण् भवति। अन्यत्साधनं तु पूर्ववत्। अप्यायिष्ट। अप्यायि। अप्यायिषातान्। अप्यायिषत। अप्यायिष्ठाः। अप्यायिषाथाम्। अप्यायिध्वम् अप्यायिषि। अप्यायिष्वहि, अप्यायिष्महि। इमौ द्वौ धातू भ्वादिकौ। इत्यात्मनेपदिप्रक्रिया कथिता।

## अथोभयपदिनः।

णह् बन्धने। नह्यति, नह्यते, नह्येत्, नह्येत, नह्यतु, नह्यताम्, अनह्यत्, अनह्यत। ननाह नेहतुः नेहुः। नेहिथननद्ध। नेहे, नह्यात्, नत्सीष्ट। नहो धः। नद्धा, नत्स्यति-नत्स्यते, अनत्स्यत्-अनत्स्यत। अनात्सीत्, अनाद्धाम्, अनात्सुः। अनद्ध अनत्सातान् अनत्सत। इति दिवादिषु

उभयपदिप्रक्रिया। इति यविकरणा दिवादयो धातवः। इति चतुर्थगणः।

अथोभयपदिप्रक्रिया कथ्यते। णह् बन्धने। अकार उभयपदार्थः। आदेः ष्णः स्नः। अनेन णकारस्य नकारः। तिबादयस्त आदयश्च प्रत्यया भवन्ति। दिवादेर्यः। अनेन यप्रत्ययः। नह्यति। नह्यते। चतुर्णां लकाराणां रूपाणि सुगमानि। अतः पिष्टपेषणं न कृतम्। लिट्लकारे। द्वित्व। पूर्वस्य। अत उपधायाः। ननाह। लोपः पचाम्। अनेनैत्वपूर्वलोपौ। नेहतुः। नेहुः। नेहिथ। थलतो०। ननह् थप् इति जाते। नहो धः। तथोर्धः। झबे जबा। ननद्ध। नेहे। नेहाते। नेहिरे। नह्यात्। नह् सीष्ट इति स्थिते। नहो धः। खसे चपा०। नत्सीष्ट। नह् ता। नहो धः। तथोर्धः। झबे जबाः। नद्धा। नहो धः। खसे०। नत्स्यति। नत्स्यते। इत्यादीनि। लुङ्लकारे। अत उपधायाः। अनात्सीत्। 'झसात्' अनेन सेर्लोपो भवति। अनाद्धाम्। अनात्सुः। इत्यादीनि। आत्मनेपदे। अनद्ध। अनत्साताम्। अनत्सत। इत्यादीनि। इत्युभयपदिप्रक्रिया समाप्ता। इति यविकरणा दिवादयो धातवः कथिताः।

---

## अथ स्वादयः।

तत्रादावुभयपदिनः।

षुञ् अभिषवे।

ञ उभयपदार्थः। आदेः ष्णः स्नः।

अथ स्वादयो धातवः कथ्यन्ते। तत्रादौ उभयपदिनः सन्ति। षुञ् अभिषवे। ञकार उभयपदार्थः। आदे ष्णः स्नः। तिबादयस्त आदयश्च प्रत्ययाः पूर्ववद् भवन्ति इति ज्ञातव्यम्।

## स्वादेर्नुः।

स्वादेर्गणान्नुः प्रत्ययो भवति चतुर्षु परेषु। अपोऽपवादः।

स्वादेर्नुः। स्वादेः। ( पं० ए० ) नुः। ( प्र० ए० ) द्विपदं सूत्रम्। स्वादेर्गणात्। चतुर्षु तिबादिषु परेषु नुप्रत्ययो भवति। सु नु तिप् इति जाते। सूत्रम्।

नूपः ।

विकरणस्य नुप्रत्ययस्य उप्प्रत्ययस्य च गुणो भवति पिति परे। सुनोति सुनुतः। नु धातोः। सुन्वन्ति। सुनोषि सुनुथः सुनुथ। सुनोमि।

नूपः। नुश्च उप् च। नूप्। तस्य। नूपः (ष० ए०)। स्वादिरूत्पन्नस्य नुप्रत्ययस्य। तनादिरूत्पन्नस्य। नुप्प्रत्ययस्य। पिति प्रत्यये परे गुणो भवति। अनेन गुणः। सुनोति। सुनुतः। नुधातोः। सुन्वन्ति। षत्वम्। सुनोषि। सुनुथः। सुनुथ। नूपः। अनेन गुणः। सुनोमि। सुनुवस् इति जाते। सूत्रम्।

ओर्वमोर्वा लोपः।

असंयोगादुत्तरस्य प्रत्ययसम्बन्धिन उकारस्य वा लोपो भवति वमोः परयोः। सुनुवः-सुन्वः सुनुमः-सुन्मः। सुनुते सुन्वाते सुन्वते। सुनुयात्, सुन्वीत, सुनोतु-सुनुतात्। सुनुताम्, सुन्वन्तु।

ओर्वमोर्वा लोपः। ओः (ष० ए०) वमोः (स० द्वि०) वा अव्ययम्। लोपः। (प्र० ए०) चतुःपदं सूत्रम्। असंयोगादुत्तरस्य प्रत्ययसम्बन्धिन उकारस्य वमोः परयोः सतोर्लोपो भवति। अनेन उकारस्य वा लोपः। सुनुवः। सुन्वः। सुनुमः। सुन्मः। सुते। सुन्वाते। आतोऽन्तो०। सुन्वते। षत्वम्। सुनुषे। सुन्वाथे सुनुध्वे। सुन्वे। ओर्वमोर्वा लोपः। सुनुवहे। सुन्वहे। सुनुमहे। सुन्महे। सुनुयात्। सुनुयाताम्। सुनुयुः। नुधातोः। सुन्वीत। सुन्वीयाताम्। सुन्वीरन्। अन्यानि सुगमानि। लोट्लकारे। नूपः। अनेन पिति प्रत्यये परे गुणः। सुनोतु। तुह्योः। सुनुतात्। सुनुतां सुन्वन्तु। 'सुनु हि' इति स्थिते सूत्रम्।

ओर्वा हेः।

प्रत्ययसम्बन्धिन उकारादुत्तरस्य हेर्लुग्भवति वाग्रहणात्

संयोगान्न। तेन तक्ष्णु हि त्वक्ष्णु हीत्यत्र न। सुनु, सुनुतात्, सुनवानि, सुनुताम्, असुनोत्, असुनुत। सुषाव सुषुवतुः। सुषविथ-सुषोथ। सुषुवे, सूयात्, सोषीष्ट, सोता, सोष्यति, सोष्यते, असोष्यत्, असोष्यत।

ओर्वाहि। ओः (पं० ए०) वा। अव्ययम् (प्र० ए०) हेः (ष० ए०) प्रत्ययसम्बन्धिन उकारादुत्तरस्य हिप्रत्ययस्य वा लुग् भवति। अस्मिन् सूत्रे वाग्रहणात् संयोगात् न लुग् भवति। हिः। तेन। तक्ष्णु हि त्वक्ष्णु हि इत्यत्र न सुनु। सुनुतात् सुनुत सुनुत। नूपः सुनवानि। सुनवाव। सुनवाम। सुनुताम्। सुन्वाताम्। सुन्वताम्। सुनुष्व। सुन्वाथाम्। सुनुध्वम्। सुनवै। सुनवावहै। सुनवामहै। दिबादावट्। नूपः। असुनोत्। असुनुताम्। असुन्वन्। असुनोः। असुनुतम्। असुनुत। असुनवम्। असुनुव। नुर्वमोः। असुन्व। असुनुम। असुन्म। असुनुत असुन्वाताम्। आर्तोऽन्तो०। असुन्वत। असुनुथाः। असुन्वाथाम्। असुनुध्वम्। असुन्वि। असुनुवहि। असुन्वहि। असुनुमहि। असुन्महि। लिट्लकारे। द्वित्व। सस्वरादिः। क्रित्वात्०। धातोर्नामिनः। सुषाव। नुधातोः। नानप्योर्वः। सुषुवतुः। सुषुवुः। अलतः। गुणः सुषविथ। सुषोथ। आत्मनेपदे। सुषुवे। सुषुवाते। सुषुविरे। यै। सूयात्। गुणः। षत्वम्। सोषीष्ट। अन्येषां रूपाणि सुगमानि। लुङ्लकारे। असु सि दिप्। इति जाते। सेः। सूत्रम्।

## सुसुधूञां पे सेरिड्वा वक्तव्यः।

असावीत् असौषीत् टुसुस्तुनुधातूनामिड्वेति केचित्। असविष्ट असोष्ट। चिञ् चयने। चिनोति, चिनुते, चिनुयात्, चिन्वीत, चिनोतु, चिनुताम्, अचिनोत्, अचिनुत।

सुसुधूञाम्। धातूनां परस्मैपदे सेः इड् वा वक्तव्यः सेर्णित्वात्। धातोर्नामिनः। अनेन वृद्धिः। असावीत्। असाविष्टाम्। असाविषुः। इडभावे। अनिटो०। असौषीत्। असौष्टाम्। असौषुः। इत्यादीनि। आत्मनेपदे। टुसुस्तुनुधातूनाम् इड् वा भवति। इति केचि-

हाचार्या वदन्ति। अनेनात्मनेपदेऽपि। सेरिट्। गुणः। अस्तविष्ट। अस्त-विषाताम्। अस्तविषत। इडभावे। अस्तोष्ट। अस्तोषाताम्। अस्तोषत। चिञ् चयने। स्वादेर्नुः। नूपः। चिनोति। चिनुतः चिन्वन्ति। चिनुते। चिन्वाते। चिन्वते। चिनुयात्। चिन्वीत। चिनोतु। चिनुतात्। चिनु-ताम्। चिन्वन्तु। ओर्वाहेः। चिनु। अन्यानि सुगमानि। चिनुताम्। अचि-नोत् अचिनुत। एतेषां रूपाणि सुगमानि। लिट्लकारे। चि णप् इति स्थिते। सूत्रम्।

## चिनोतेः सणादौ किस्त्वं वा वाच्यम्।

**चिकाय चिक्यतुः चिक्युः। चिचाय। चिक्ये-चिच्ये। चीयात्, चेषीष्ट, चेता २ चेष्यति-चेष्यते, अचेष्यत्-अचेष्यत, अचैषीत्, अचेष्ट। स्तृञ् आच्छादने। स्तृणोति स्तृणुते। तस्तार। गुणोर्ति-संयोगाद्योः। तस्तरतुः तस्तरुः। तस्तर्थ। तस्तरे, स्तर्यात्।**

चिनोतेः। चिनोतेर्धातोः। सप्रत्यये णादौ च परे किस्त्वं वा वाच्यम्। अनेन चकारस्य ककारः। द्वित्वम्। सस्वरादिः। क्वहोश्चुः। धातोर्नामिनः। चिकाय। णुधातोः। चिक्यतुः। चिक्युः। चिकयिथ। चिकेथ। चिचाय। चिच्यतुः। चिच्युः आत्मनेपदे। किस्त्वे कृते सति। चिक्ये। चिक्याते। चिक्यिरे। किस्त्वाभावे। चिच्ये। रूपाणि सुगमानि। येः। चीयात्। गुणः षत्वम्। चेषीष्ट। चेता। चेता। अन्येषां रूपाणि सुगमानि। लुङ्लकारे। अनिटो नामिवतः। अचैषीत्। अचैष्टाम् अचैषुः। आत्मनेपदे गुणः। अचेष्ट। अचेषाताम्। अचेषत। स्तृञ् आच्छादने। स्वादेर्नुः। पुर्नोणोऽनन्ते। नूपः। स्तृणोति स्तृणुते। चतुर्णां लकाराणां रूपाणि सुगमानि। स्तृणप् इति जाते द्वित्व। सस्वरादि०। अघात् खपाः। धातोर्नामिनः। तस्तार। गुणोऽर्ति०। अनेन गुणः। तस्तरतुः। तस्तरुः। ऋदन्तस्य गुणः। तस्तर्थ। आत्मनेपदे। तस्तरे। तस्तराते। तस्तरिरे। इत्यादीनि। गुणोऽर्ति०। अनेन यादादौ गुणो भवति। स्तर्यात्। अन्यानि सुगमानि। उः। अनेन गुणनिषेधः। क्रियात्। अनेन षत्वम्। स्तृषीष्ट। संयोगादेः। अनेन अस्य वेट् सीष्टादौ।

गुणः । स्तरिषीष्ट । गुणः । स्तर्ता । स्तर्ता । ऋद्धनोः स्ये । स्तरिष्यति । स्तरिष्यते । अन्यानि सुगमानि । लुङ्लकारे । वृद्धिः । अस्तार्षीत् । आत्मनेपदे ।

**संयोगादि ऋदन्ताद् वृङ्वृञ्भ्यां सीयुटोरात्मनेपदे इड्वा वक्तव्यः ।**

स्तरिषीष्ट । उः । स्तृषीष्ट, स्तर्ता २, स्तरिष्यति-स्तरिष्यते, अस्तरिष्यत्, अस्तरिष्यत, अस्तार्षीत्, अस्तरिष्ट, अस्तृत । वृञ् वरणे । वृणोति, वृणुते । ववार वव्रतुः वव्रुः ।

संयोगादि । अनेन वेट् । अस्तरिष्ट । इडभावे । अस्तृत । लोपो० । अनेन सेर्लोपः । अस्तृषाताम् । अस्तृषत । इत्यादीनि । वृञ् वरणे । ञकार उभयपदार्थः । स्वादेर्नुः । पुर्नोणोऽनन्ते । नूपः । वृणुते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । धातोर्नामिनः । ववार । ऋरम् । वव्रतुः । वव्रुः । ववर् थप् इति जाते । सूत्रम् ।

**वृणोतेस्थपो नित्यमिट् ।**

ववरिथ वव्रथुः वव्र । ववार-ववर वव्रव वव्रम । वव्रे, वव्रढ्वे । व्रियात्, वरिषीष्ट । ईटो ग्रहाम्० । वरिषीष्ट, वरिता-वरीता, वरिष्यति-वरीष्यति, वरिष्यते-वरीष्यते, अवरिष्यत्-अवरीष्यत्, अवरिष्यत-अवरीष्यत, अवारीत्, अवरिष्ट-अवरीष्ट, अवृत, । धूञ् कम्पने । धूनोति, धुनुते, धुनुयात्, धुन्वीत, धूनोतु, धुनुताम्, अधूनोत्, अधुनुत, दुधाव, दुधुवे, धूयात्, धविषीष्ट-धोषीष्ट ।

वृणोतेः । वृणोतेर्धातोः थपो नित्यं भवति इट् । ववरिथ । क्रादित्वान्नेट् । वव्रव । इत्यादीनि । वव्रे । वव्राते । वव्रिरे । यादादौ । व्रियात् । संयोगादेः । इषीष्ट । ईटो ग्रहाम् । अनेन इकारस्य ईकारः । वरिषीष्ट । वरीषीष्ट । इत्यादीनि । वरिता । वरीता । इत्यादीनि । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । दाविटौ वृद्धिः । अवारीत् । अवारिष्टाम् । अवारिषुः ।

आत्मनेपदे गुणः । अवरिष्ट । अवरीष्ट । इत्यादीनि रूपाणि भवन्ति । तेषां साधनमपि सुगमम् । धूञ् कम्पने । ञकार उभयपदार्थः । पूर्ववत् प्रत्यया भवन्ति । स्वादेर्नुः । नूपः । अनेन चतुर्षु पिति गुणो भवति । धूनोति । आत्मनेपदे । धूनुते । चतुर्णां पूर्ववद्रूपाणि । लिट्लकारे । द्वित्वादिकं सर्वं भवति । धातोर्नामिनः । झपानां अनेन धस्य दः । ह्रस्वः । दुधाव । दुधुवतुः । दुधुवुः । दुधविथ । इत्यादीनि । दुधुवे । दुधुवाते । दुधुविरे । धूयात् ।

## स्वरतिसूतिसूयतिधूञ्रधादीनां वा ।

धविता-धोता, धविष्यति-धोष्यति, अधविष्यत्-अधोष्यत्, अधावीत्, अधविष्ट-अधोष्ट । इति स्वादिषु उभयपदिप्रक्रिया ।

स्वरति० । अनेनास्य वेट् । गुणः । धविषीष्ट । इडभावे धोषीष्ट । अन्यानि रूपाणि सुगमानि । धविता । धोता । अन्येषां रूपाणि सुगमानि । सर्वत्रेड्विकल्पः । लुङ्लकारे । अधावीत् । अधाविष्टाम् । अधाविषुः । साधनं सुगमम् । इडभावे । अनिटो० । अधौषीत् । अधौष्टाम् । अधौषुः । आत्मनेपदे । अधविष्ट । अधोष्ट । इत्यादीनि रूपाणि भवन्ति । एतादृशानि रूपाणि शतशः साधितानि । अतो व्याख्यानं न कृतम् । इत्युभयपदिप्रक्रिया कथिता ।

## अथ परस्मैपदिनः ।

### हि गतौ वृद्धौ च हिनोति ।

अथाधुना परस्मैपदिप्रक्रिया कथ्यते । हि गतौ वृद्धौ । तिबादयो भवन्ति । स्वादेर्नुः । नूपः । हिनोति हिनुतः हिन्वन्ति इत्यादीनि रूपाणि भवन्ति । लिट्लकारे । द्वित्वादिकम् । सूत्रम् ।

## द्विरुक्तस्य हिनोतेः कुत्वं वाच्यम् ।

जिघाय, हीयात्, हेता, हेष्यति, अहेष्यत्, अहैषीत् ।

शक्लृ शक्तौ । शक्नोति, शशाक । लोपः पचां किस्ये चास्य । शेकतुः शेकुः । शक्यात्, शक्ता, शक्ष्यति, अशक्ष्यत्, अशकत् । धिवि प्रीतौ । इदित इति नुम् ।

हिरुक्तस्य । दिरुक्तस्य हिनोतेर्धातोः कुत्वं वाच्यम् । अनेन हस्य घः । धातोर्नामिनः । ऋपानाम् । जिघाय । जिघ्यतुः । जिघ्युः । जिघयिथ । जिघेथ । इत्यादीनि । ये । हीयात् । गुणः । हेता । हेष्यति । अहे-ष्यत् । शेषाणि रूपाणि सुगमानि । लुङ्लकारे । अनिटो नामिवतः । अनेन वृद्धिः । अहैषीत् । अहैष्टाम् । अहैषुः । इत्यादीनि । शक्लृ शक्तौ । लृकारो लृदित्कार्यार्थः । तिबादयः । स्वादेर्नुः । नुपः । शक्नोति । शक्नुतः । नुधातोः । शक्नुवन्ति । लोट्लकारे मध्यमपुरुषस्यैकवचने । शक्नुहि । अन्यानि सुगमानि । लिट्लकारे द्वित्वादिकं सर्वं भवति । अत उपधायाः । शशाक । लोपः पचाम् । शेकतुः शेकुः । अन्यानि सुगमानि । शक्यात् । शक्ता । क्विलात्० । कषसंयोगे शक्ष्यति अशक्ष्यत् । रूपाणि सुगमानि । लुङ्लकारे लिपषादिः । अनेन ङप्रत्ययो भवति । अशकत् । अशकताम् । अशकन् । इत्यादीनि भवन्ति । धिवि प्रीतौ । इकार इत् । इदितोनुम्० । तिबादयः । स्वादेर्नुः । धिन् व् नु तिप् । इति जाते । सूत्रम् ।

धिन्विकृण्व्योर्नो लोपो वाच्यः ।

चतुर्ष ।

धिन्विकृण्व्यो० । अनयोर्नकारस्य लोपो वाच्यः । चतुर्षु परेषु । अनेन नकारस्य लोपः । सूत्रम् ।

यवयोर्वसे हकारे च लोपः ।

धिनोति, धिनुयात्, धिनोतु, अधिनोत्, दिधिन्व, धिन्व्यात्, धिन्विता, धिन्विष्यति, अधिन्विष्यत्, अधिन्वीत् । कृवि हिंसायाम् । कृणोति, चकृण्व । धिनोतिवत् । श्रु श्रवणे ।

यवयोः० । यकारवकारयोर्वसे हकारे च लोपो भवति । नुपः । धिनोति ।

धिन्वतः। धिन्वन्ति। इत्यादीनि। लिट्लकारे। द्वित्वम्। पूर्वस्य। अपानाम्। दिधिन्व। दिधिन्वतुः। दिधिन्वुः। दिधिन्विथ इत्यादीनि भवन्ति। सिसता० अनेनेट्। धिन्विता। अन्येषां रूपाणि सुगमानि। लुङ्लकारे। द्वाविंशौ। अन्यत्साधनं तु पूर्ववत्। अधिन्वीत्। अधिन्विष्टाम्। अधिन्विषुः। इत्यादीनि। कृवि हिंसायाम्। सर्वसाधनं तु पूर्ववत्। णत्वम्। कृणोति। अयं धातुर्धिनोतिवत् ज्ञातव्यः। श्रु श्रवणे। तिबादयः। स्वादेर्नुः। सूत्रम्।

## श्रुवः शृ।

श्रुवः शृ भवति चतुर्षु परेषु। शृणोति, शुश्राव, शुश्रोथ, श्रूयात्, श्रोता, श्रोष्यति, अश्रोष्यत्, अश्रौषीत्। इति स्वादिषु परस्मैपदिप्रक्रिया।

श्रुवः। श्रुवः। (ष० ए०) शृ (प्र० ए०) साङ्केतिकम्। द्विपदं सूत्रम्। श्रुवो धातोः शृ इत्यादेशो भवति चतुर्षु परेषु। अनेन श्रुवः शृ। णत्वम्। शृणोति। शृणुतः। शृण्वन्ति। इत्यादीनि भवन्ति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे द्वित्वादिकं पूर्वस्य धातोर्नामिनः। अनेन वृद्धिः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। इत्यादीनि भवन्ति। ये। श्रूयात्। गुणः। श्रोता। श्रोष्यति अत्र षत्वं भवति। अश्रोष्यत्। रूपाणि सुगमानि। लिङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अन्यत्साधनं तु सुगमम्। अश्रौषीत्। अश्रौषिष्टाम्। अश्रौषीः इत्यादीनि रूपाणि भवन्ति इति परस्मैपदिप्रक्रिया समाप्ता।

---

## अथात्मनेपदिनः।

अशूङ् व्याप्तौ।

ऊङावितौ।

अश्नुते, अश्नुवीत, अश्नुताम्, आश्नुत। नुगभावः। आश्नो-

र्णादौ । आनशे । ऊदितो वा । अशिषीष्ट-अक्षीष्ट अशिता-अष्टा, अशिष्यते-अक्ष्यते, आशिष्यत-आक्ष्यत । आशिष्ट-आष्ट आक्षाताम् आक्षत । इति स्वादिषु आत्मनेपदिप्रक्रिया । इति नुविकरणाः स्वादयः ।

अथात्मनेपदिप्रक्रिया कथ्यते । अशूङ् व्याप्तौ ऊङावितौ स्तः । तिबादयः । स्वादेर्नुः । अश्नुते । अश्नुवाते । आतोऽन्तो० । अश्नुवते । इत्यादीनि । अश्नुवीत । अश्नुवीयाताम् । अश्नुवीरन् । अश्नुताम् । अश्नुवाताम् । अश्नुवताम् । स्वरादित्वाद् द्वावड्डागमौ भवतः । आश्नुत । अन्यानि सुगमानि । लिट्लकारे । ङित्वादिकं सर्वम् । नुगश्नो० । आश्वीर्णादौ । आनशे । आनशाते । आनशिरे । इत्यादीनि ऊदितो वा अनेनास्य धातोरिड्विकल्पो भवति । अशिषीष्ट । इडभावे छशष० । अनेन षत्वम् । षढोः कः से । षत्वम् । कषसंयोगे० । अक्षीष्ट । रूपाणि सुगमानि । अन्यानि मूलात् ज्ञेयानि । लुङ्लकारे । द्वावडागमौ स्वरादित्वात् । आशिष्ट । आशिषाताम् । आशिषत । इडभावे झसात्० । छशष० । ष्टुत्वम् । आष्ट । आक्षाताम् । आक्षत । इत्यादीनि । इत्यात्मनेपदिप्रक्रिया समाप्तिमगमत् । इति नुविकरणाः स्वादयो धातवः कथिताः ।

---

## अथ रुधादयः ।

### तत्रादावुभयपदिनः । रुधिरावरणे । इरित् ।

अथ रुधादयो धातवः कथ्यन्ते । तत्रादावुभयपदिनो धातवः सन्ति । रुधिर् आवरणे । इरित् । उभयपदित्वात् । तिबादय स्तआदयश्च प्रत्यया भवन्ति । सूत्रम् ।

### रुधादेर्नम् ।

रुधादेर्गणान्नम् प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । मकारः स्थाननियमार्थः । णत्वम् । तथोर्धः । इर्णाद्य । नमसोऽस्य ।

रुधादेर्नम्। रुध् आदिर्यस्य स रुधादिः तस्य रुधादेः (प० ए०) नम् (प्र० ए०) रुधादेर्गणान्नम्प्रत्ययो भवति चतुर्षु लकारेषु परेषु। श्नपोऽपवादः। प्रत्यये मकारःस्थाननियमार्थः। पुर्नो णोऽनन्त्ये अनेन णत्वं च। तथोर्धः। अनेन तकारस्य धकारः। झबे जबाः। रुणद्धि। रुध् तस् इति जाते। नमसोऽस्य। अनेन अकारस्य लोपः। तथोर्धः।

## हसात् झसस्य सवर्णे झसे लोपो वाच्यः।

रुन्धः रुन्धति। रुणत्सि रुन्धः रुन्ध। रुणध्मि रुन्ध्वः रुन्ध्मः। रुन्धे रुन्धाते रुन्धते। रुन्ध्यात्, रुन्धीत, रुणद्धु, रुन्धाम्, अरुणत्-अरुणद्, अरुन्ध। रुरोध, रुरुधतुः रुरुधुः। रुरोधिथ। रुरुधे रुरुधाते। रुध्यात्, रुत्सीष्ट, रोद्धा २, रोत्स्यति, रोत्स्यते, अरोत्स्यत्, अरोत्स्यत। अनिटो नामिवतः। अरौत्सीत्। सिस्योः। अरुद्ध अरुत्सातां अरुत्सत। इरितो वा। अरुधत्। उच्छृदिर् दीप्तिदेवनयोः। उइरावितौ। छृणत्ति-छृन्तः छृन्दन्ति। छृन्ते, छृन्द्यात्, छृन्दीत, छृणत्तु, छृन्ताम्, अच्छृणत्, अच्छृणद्। दः सः। दकारस्य वा सकारो भवति सिपि विषये। अच्छृणः अच्छृणतं अच्छृणत। चच्छर्द, चच्छृदे, छृद्यात्, छृत्सीष्ट-छर्दिषीष्ट, छर्दिता, छर्दिष्यति छर्त्स्यति, छर्दिष्यते-छर्त्स्यते, अच्छर्दिष्यत्-अच्छर्त्स्यत्, अच्छर्दिष्यत-अच्छर्त्स्यत। इरितो वा। अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट। उतृदिर् हिंसानादरयोः। तृणत्ति तृन्तः तृन्दति। तृन्ते, तृन्द्यात्, तृन्दीत, तृणत्तु, तृन्ताम्, अतृणत्, अतृन्त, ततर्द, ततृदे, तृद्यात्, तृत्सीष्ट-तर्दिषीष्ट, तर्दिष्यति-तर्त्स्यति, तर्दिष्यते तर्त्स्यते, अतर्दिष्यत्-अतर्त्स्यत्, अतर्दिष्यत-अतर्त्स्यत, अतृदत्, अतर्दीत्। कृतचृतछृदतृदनृतोऽसेः सादेरिड्वा। अतर्दिष्ट। इति रुधादि[illegible]प्रक्रिया।

इमात्०। अनेन धकारस्य लोपो भवति। नश्चा०। रुन्धः। रुन्धन्ति। खसे० रुणत्सि। रुन्धः। रुन्ध अन्धानि मूले सन्ति। रुन्धे। रुन्धाते। रुन्धते। इत्यादीनि रूपाणि भवन्ति। रुन्ध्यात्। रुन्ध्याताम्। रुन्ध्युः। सुगमानि। रुन्धीत। रुन्धीयाताम्। रुन्धीरन्। रुणद्धु। रुन्धात्। रुन्धाम्। रुन्धन्तु। झसाद्धिर्धः। इमात्। रुन्धि। रुन्धात्। रुन्धम्। रुन्ध। रुणधानि। रुणधाव। रुणधाम। रुन्धाम्। रुन्धाताम्। रुन्धताम्। इत्यादीनि। अरुणत्। अरुन्धाम्। अरुन्धन्। अरुणः। अरुन्ध। अरुन्धाताम्। अरुन्धत। अरुन्धाः। अरुन्धाताम्। अरुन्धम्। अरुणधम्। अरुन्ध। अरुन्धा। इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। तानि यथासम्भवं साध्यानि। लिट्लकारे। द्वित्वादिकं सर्वं भवति। उपधाया लघोः। रुरोध। रुरुधतुः। रुरुधुः। रुरोधिथ। इत्यादीनि। आत्मनेपदे। रुरुधे। रुरुधाते। रुरुधिरे। अन्यानि सुगमानि। रुध्यात्। रुत्सीष्ट। तथोर्धः। गुणः। रोद्धा। रोद्धा। खसे०। रोत्स्यति। रोत्स्यते। लुङ्लकारे। अनिटः। अनेन। वृद्धिः। खसे०। अरौत्सीत्। अरौद्धाम्। अरौत्सुः। इत्यादीनि। आत्मनेपदे। झमात्। अनेन सलोपो भवति। अरुद्ध अरुत्साताम्। अरुत्सत। इत्यादीनि रूपाणि सुगमानि। अस्य धातोरिरितो वा अनेन ङप्रत्ययो भवति। ङित्त्वात्। ङित्वात्। गुणाभावः। अरुधत्। अरुधताम्। अरुधन्। सुगमानि। उच्छृदिर् दीप्तिदेवनयोः। उकारविती। पूर्ववत् प्रत्ययाः। रुधादेर्नम्। अनेन चतुर्षु नम्प्रत्ययो भवति। छृणत्ति। अत्र झसे चपा झसानाम्। अनेन दस्य तः। नश्चापदान्ते झसि। अनेन नस्यानुस्वारो भवति। छृंत्तः छृन्दन्ति। इत्यादीनि रूपाणि पूर्वसदृशानि सन्ति। पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। छृन्ते। छृन्दाते। छृन्दते। चतुर्णां लकाराणां रूपाणि पूर्वसदृशानि। लिट्लकारे। द्वित्वादिकं सर्वं भवति। पूर्वस्य रः। उपधायाः। अनेन। गुणः। झपानाम्। चच्छर्द। चच्छृदतुः। चच्छृदुः। चच्छर्दिथ। आत्मनेपदे। चच्छृदे। चच्छृदाते। चच्छृदिरे। इत्यादीनि रूपाणि भवन्ति। छृद्यात्। सिर्णोः। अनेन गुणनिषेधः। खसे० छर्त्सीष्ट। कृत् तृद छृद अनेन वक्ष्यमाणेन वेट्। उपधाया लघोः अनेन गुणः। छर्दिता। अन्येषां रूपाणि सुगमानि। छर्दिष्यति। कृत्तृद०। अनेन वा इट्। खसे०। छर्त्स्यति। इत्यादीनि। लुङ्। हाविटौ सेर्लोपः। गुणः। अडागमः। अच्छर्दीत्। अच्छर्दिष्टाम्।

अच्छर्दिषुः। अन्यानि सुगमानि। आत्मनेपदे साधनं पूर्ववत्। अच्छर्दिष्ट। अच्छर्दिषाताम्। अच्छर्दिषत। इत्यादीनि। अस्य धातोरिरितो वा। अनेन ङप्रत्ययो भवति। ङित्त्वाद्गुणाभावः। अच्छृदन्। अच्छृदताम्। अच्छृदन्। अच्छृदः। अच्छृदतम्। अच्छृदत। अच्छृदम्। अच्छृदाव। अच्छृदाम। साधनमेतादृशं भवेत् ज्ञातम्। उ तृदिर् हिंसानादरयोः। उइरावितौ। पूर्ववत् प्रत्यया भवन्ति। रुधादेर्नम्। अनेन चतुर्षु नम्प्रत्ययो भवति। सालम्। तृणत्ति। अस्मिन्रूपे खसे०। अनेन दस्य तः। ङिति प्रत्यये परे 'नमसोऽस्य' अनेन नमोऽकारस्य लोपो भवति। नश्चा०। अनेन झसे परे नकारस्यानुस्वारो भवति। हस्वात्० अनेन वा तकारस्य लोपो भवति। तृन्त्तः। तृन्तः। एतादृशमपि रूपं स्यात्। तृन्दन्ति। तृन्ते। तृन्दाते। तृन्दते। इत्यादीनि चतुर्षां रूपाणि सुगमानि। पूर्वोक्तैरेव सूत्रैः सिद्धन्ति। लिट्लकारे। द्वित्व। पूर्वस्य रः। उपधाया लघोः। अनेन गुणः। ततर्द। कित्त्वात् गुणाभावः किति ग्रहादौ। अन्यत्साधनं पूर्ववत्। ततृदतुः। ततृदुः। गुणो भवति थपि। ततर्दिथ। इत्यादीनि। आत्मनेपदे साधनं पूर्ववत्। ततृदे। ततृदाते। ततृदिरे। अन्यानि सुगमानि। तृद्यात्। खसे०। कृतृतृद०। अनेन वा इड्निषेधः। सिखोः। अनेन गुणनिषेधः। तृत्सीष्ट। इटि क्ते गुणो भवति। तर्दिषीष्ट। अन्यानि रूपाणि सुगमानि। अन्यानि रूपाण्यन्येषां लकाराणां मूलात् ज्ञेयानि। सिवर्जितसादिप्रत्यये इड्विकल्पः। लुङ्लकारे। सिसता०। सै०। आभ्यां हादिटौ। सेर्लोपो भवति। उपधायाः। अनेन गुणः। दिवादावट्। वावसाने। अतर्दीत्। अतर्दिष्टाम्। अतर्दिषुः। इरितो वा अनेन वा ङप्रत्ययो भवति। ङित्त्वाद्गुणाभावः। अतृदत् आत्मनेपदे। सिसता०। अनेनेट्। गुणः। षत्वम्। ष्टुत्वम्। रात्सपोहिः। अनेन हिलम्। अतर्दिष्ट। अतर्दिषाताम्। अतर्दिषत। इत्युभयपदिप्रक्रिया समाप्ता।

## अथ परस्मैपदिनः।

शिषॢ विशेषणे। शिनष्टि शिंष्टः शिंषन्ति। शिंष्यात्, शिनष्टु, अशिनट्, शिशेष, शिष्यात्, शेष्टा, शेक्ष्यति, अशेक्ष्यत्, अशिषत्। हिंसि हिंसायाम्। इदितः।

अथ परस्मैपदिनः प्रक्रिया कथ्यते। तिबादयः प्रत्यया भवन्ति। रुधादेर्नम्।

अनेन नम्प्रत्ययो भवति। श्निप्तु विशेषणे। लृकारो लित्कार्यार्थः। पूर्ववत्सर्वं कार्यं भवति। शि नप् शिप् इति जाते। ष्टुत्वं शिनष्टि। नश्चापदान्ते झसि। शिंष्टः। शिंषन्ति। षढोः कः सि। षत्वम्। शिनक्षि। शिंष्ठः। शिंष्ठ। शिनष्मि। शिंष्वः। शिंष्मः। शिंष्यात्। शिंष्याताम्। शिंष्युः। शिनष्टु। शिंष्टात्। शिंष्टाम्। शिंषन्तु। झसाद्धिर्हेः। ष्टुत्वम्। षोडः। शिण्ढि। अन्यानि सुगमानि। लङ्लकारे षोडः। अनेन षकारस्य डकारः। वावसाने। दिवादावट्। अशिनट्। अशिनड्। अशिंष्टाम्। अशिंषन्। अन्यानि सुगमानि। लिट्लकारे। द्वित्वं पूर्वस्य। उपधाया लघोः। शिशेष। शिशिषतुः। शिशिषुः। शिशेषिथ। अन्यानि सुगमानि। शिष्यात्। उपधाया लघोः। ष्टुत्वम्। शेष्टा। गुणः। षढोः कः सि। कषसंयोगे क्षः। शेक्ष्यति। दिवादावट्। अशेक्ष्यत्। लुङ्लकारे। लित्पुषादेर्ङः। अनेन ङप्रत्ययः। ङित्त्वादगुणाभावः। दिवादावट्। अशिषत्। अशिषताम्। अशिषन्। हिसि हिंसायाम्। तिबादयः। इदितोनुम्०। पश्चात्। रुधादेर्नम्। अनेन नम्प्रत्ययो भवति। 'हिनस् तिप्' इति जाते सूत्रम्।

नमः।

**नमः प्रत्ययात्परस्य नस्य लोपो भवति। हिनस्ति। हिंस्तः हिंसन्ति। हिंस्यात्, हिनस्तु। धौ सलोपो वा सस्य द इति केचित्। हिन्धि हिन्द्धि, अहिनत् अहिनद्।**

नमः। नमः। (पं० ए०) एकपदं सूत्रम्। नमः प्रत्ययात्परस्य नकारस्य लोपो भवति। अनेन नकारस्य लोपः। खरद्योनं०। हिनस्ति। नमसोऽस्य: नश्चापदान्ते अनेन नमो नकारस्यानुस्वारः। हिंस्तः। हिंसन्ति। 'अनेनैव प्रकारेणान्यानि रूपाणि साध्यानि। हिंस्यात्। हिनस्तु। हिंस्तात्। हिंस्ताम्। हिंसन्तु। झसाद्धिर्हेः तदा हिंस् धि। इति जाते सूत्रम्। धौ। धौ परे सति। सकारस्य लोपो भवति। वा सकारस्य दकारो भवति। यदा सकारस्य लोपः। तदा। हिंधि। यदा सकारस्य दकारस्तदा। हिंद्धि। अन्यानि सुगमानि। लुङ्लकारे। दिवादावट्। अहिंस् दिप् इति जाते।

**दिपि सस्य दः सिपि वा।**

**अहिनत्, अहिनः, जिहिंस, हिंस्यात्, हिंसिता, हिंसि-**

**ष्यति, अहिंसिष्यत्, अहिंसीत्। भञ्जो आमर्दने। ओइत्। भनक्ति, भङ्क्तः, बभञ्ज, भञ्ज्यात्, भङ्क्ता, भंक्ष्यति, अभंक्ष्यत्।**

दिपि सस्य दः। अनेन सकारस्य दकारः। दिसोर्हसात्। वावसाने। अहिनत्। अहिनद्। अहिंस्ताम्। अहिंसन्। अहिनत्। अहिनः। अहिंस्तम्। अहिंस्त। अहिनसम्। अहिंस्व। अहिंस्म। लिट्लकारे। द्वित्वादिकम्। कुहोश्चुः। जिहिंस। जिहिंसतुः। जिहिंसुः। हिंस्यात्। हिंसिता। सिसता अनेन इडागमो भवति। हिंसिष्यति। दिबादावट्। अहिंसिष्यत्। लुङ्लकारे। हाविटौ। सेर्लोपः। दिबादावट्। अहिंसीत्। अहिंसिष्टाम्। अहिंसिषुः। इत्यादीनि। भञ्जो आमर्दने। ओकार इत्। तिबादयः। रुधादेर्नम्। भनज् तिप् इति जाते। नमः। चोः कुः। खसे चपा०। भनक्ति। नमसोऽस्य। अनेन ङित्यकारस्य लोपः। नश्चाप-दान्ते०। भंक्तः। भञ्जन्ति। झिलात्०। कष०। भनक्षि। भंज्यात्। भंज्याताम्। भंज्युः। भनक्तु। भंक्तात्। भंक्ताम्। भंजन्तु। भंग्धि। भंक्तात्। भंक्तम्। भंक्त। भनजानि। भनजाव। भनजाम। चोः कुः। दिसोर्हसात्। दिबादावट्। वावसाने। अभनक्। अभनग्। अभंक्ताम्। अभञ्जन्। अभनक्। अभनग्। अभंक्तम्। अभंक्त। अभनजम्। अभंज्व। अभंज्म। लिट्लकारे। द्वित्वादिकं झपानाम्। बभञ्ज। बभञ्जतुः। बभञ्जुः। बभञ्जिथ। अस्वतः। चोः कुः। खसे चपा०। बभंक्थ। इत्यादीनि। भज्यात्। अच नोलोपः। अनेन नकारस्य लोपः। भंज् ता इति जाते। चोः कुः। खसेचपा०। भंक्ता। भंक्तारौ। भंक्तारः 'भंज् स्यप् तिप्' इति जाते। चोः कुः। खसे०। झिलात्०। कष०। भंक्ष्यति। दिबादावट्। अभंक्ष्यत्। लुङ्लकारे। भूते सिः। सेः। दिबादावट्। अभंज् सि ईट् दिप् इति जाते। सूत्रम्।

## सावनिटो नित्यं वृद्धिः।

**अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे। अभांक्षीत् अभाङ्क्ताम् अभांक्षुः। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु।**

**अनक्ति, अञ्ज्यात्, अनक्तु, आनक् आनग् आनञ्ज, अञ्ज्यात्,। अञ्जिता, अङ्क्ता, अञ्जिष्यति, अंक्ष्यति, आञ्जिष्यत्, आंक्ष्यत्।**

सावनिटी नित्यं वृद्धिः। सौ (प्र० ए०) अनिटः। (ष० ए०) नित्यं (प्र० ए०) वृद्धिः। (प्र० ए०) अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे सुगममिदं सूत्रम्। चोः कुः। खसे०। क्लिलात्०। कष०। अभांक्षीत्। भसात्०। अभांक्ताम्। अभांक्षुः। अन्यानि सुगमानि। अंजू व्यक्तिम्रक्षणकान्तिगतिषु। उकार इड्विकल्पार्थः। तिवादयः। रुधादेर्नम्। चोः कुः। खसे०। अनक्ति। नमसोऽस्य। अङ्क्तः। अञ्जन्ति। अंज्यात्। अंज्याताम्। अंज्युः। अनक्तु। अंक्तात्। अंक्ताम्। अञ्जन्तु। अंग्धि। दिवादावट्। स्वरादेः परः। सवर्णे दीर्घः। चोः कुः। दिस्योर्हसात्। वावसाने। आनक्। आनग्। नमः। आंक्ताम्। नस्यापदान्ते। आंजन्। अन्यानि सुगमानि। लिट्लकारे। द्वित्वादिकम्। नुगशां०। आर्धधातुके। आनञ्ज। आनञ्जतुः। आनञ्जुः। आनञ्जिथ। अञ्ज्यात्। ऊदितो वा अनेन सूत्रेण इड्विकल्पो भवति। अञ्जिता। इडभावे। चोः कुः। खसे०। अंक्ता। अंजिष्यति। इडभावे। कुलम्। खसे०। षत्वम्। कष०। अंक्ष्यति। दिवादावट्। स्वरादेः। आंजिष्यत्। इडभावे आंक्ष्यत्। लुङ्लकारे। इड्विकल्पे प्राप्ते सूत्रम्।

## अञ्जेः सौ नित्यमिड्वाच्यः।

**आञ्जीत्। इति रुधादिषु परस्मैपदिप्रक्रिया।**

अञ्जेः। अञ्जेर्धातोः सौ नित्यं इड् वाच्यः। अन्यत् साधनं तु पूर्ववत्। आञ्जीत्। आञ्जिष्टाम्। आञ्जिषुः। इत्यादीनि। इति परस्मैपदिप्रक्रिया कथिता।

## अथात्मनेपदिनः।

**ञिइन्धि दीप्तौ। ञिई इतौ। इन्धे, इन्धीत, इन्धाम्, ऐन्ध, इन्धाञ्चक्रे इन्धिषीष्ट, इन्धिता, इन्धिष्यते, ऐन्धिष्यत, ऐन्धिष्ट। इति रुधादिषु आत्मनेपदिप्रक्रिया। इति नम्विकरणा रुधादयः।**

अथात्मनेपदिप्रक्रिया कथ्यते। ञिइन्धि दीप्तौ। ञिई इतौ। तआदयः। रुधादेर्नम्। नमः। तथोर्धः। नमसोऽस्य। नश्चापदान्ते। हसात्। इन्धे। इन्धाते। इन्धते। इन्धीत। इन्धीयाताम्। इन्धीरन्। इन्धाम्। इन्धाताम्। इन्धताम्। दिवादावट्। स्वरादेः परः। अइए। एऐऐ। अन्यत् साधनं तु पूर्ववत्। ऐन्ध। ऐन्धाताम्। ऐन्धत। ऐन्धाः। ऐन्धाथाम्। ऐंध्वम। कासादिप्रत्ययादाम्। अनेनाम्। अन्यत्साधनं तु पूर्ववत्। इन्धाञ्चक्रे। इन्धामास। इन्धांबभूव। रूपाणि सुगमानि। सिसता०। अनेनेट्। इन्धिषीष्ट। इन्धिता। इन्धिष्यते। द्यावसागमौ। अइए। एऐऐ ऐन्धिष्यत। लुङ्लकारे। ऐन्धिष्ट। ऐन्धिषाताम्। ऐन्धिषत। इत्यात्मनेपदिप्रक्रिया समाप्तिमगमत्। इति नम्विकरणा रुधादयो धातवः कथिताः।

---

## अथ तनादयः।

### सर्वे उभयपदिनः। तनु विस्तारे।

### तनादेरुप्।

**तनादेर्गणादुप् प्रत्ययो भवति चतुर्षु परेषु। अपोऽपवादः। नूपः। तनोति, तनुते, तनुयात्, तन्वीत, तनोतु, तनुताम्, अतनोत्, अतनुत। ततान तेनतुः तेनुः। तेने, तन्यात्, तनिषीष्ट, तनिता २, तनिष्यति, तनिष्यते, अतनिष्यत्, अतनिष्यत, अतानीत्-अतनीत्, अतनिष्ट।**

अथ तनादयो धातवः कथ्यन्ते। तनादयः सर्वे उभयपदिनः सन्ति। तनु विस्तारे। तिबादयः तआदयश्च प्रत्यया भवन्ति। सूत्रम्। तनादेरुप्। तनादेः (पं० ए०) उप् (प्र० ए०) तनादेर्गणात् चतुर्षु लकारेषु परेषु उपप्रत्ययो भवति। अपोऽपवादः। अनेन उप्। तनु तिप्। इति जाते। नूपः। अनेन गुणः। तनोति। तनुतः। नुधातोः। तन्वन्ति। तनोषि। तनुथः। तनुथ। तनोमि। ओर्वमोर्वा लोपः। तनुवः। तन्वः। तनुमः। तन्मः। तनुते। तन्वाते। आतोऽन्तोऽदनतः। तन्वते। इत्यादीनि। तनुयात्। नुधातोः। तन्वीत। तनोतु। हौ परे। ओर्वाहेः। तनु। तनुताम्।

तन्वाताम् । तन्वताम् । तनुष्व । अन्यानि सुगमानि । दिब्रादावट् । अतनीत् । अतनुताम् । अतन्वन् । आत्मनेपदे । अतनुत । इत्यादीनि । रूपाणि ज्ञातव्यानि । लिट्लकारे । द्वित्वं । पूर्वस्य । अत उपधायाः । ततान । लोपः पचाम् । तेनतुः । तेनुः । अत्वतः । तेनिथ । ततन्थ । इत्यादीनि । आत्मनेपदे । तेने । तेनाते । तेनिरे । अन्यानि सुगमानि । तन्यात् । सिसता० । षत्वम् । तनिषीष्ट । तनिता । तनिता । लुङ्लकारे । णित्वे । अनेन णित्वात् वृद्धिः । अन्यत्साधनं सुगमम् । अतानीत् । अतानिष्टाम् । अतानिषुः । आत्मनेपदे । अतनिष्ट ।

## तनादेरकारोतेस्तन्थासोर्वा सिलोपो वाच्यः ।

**लोपस्त्वनुदात्ततनाम् । अतत अतथाः अतनिष्ठाः । च्चणु च्चिणु हिंसायाम् । च्चणोति च्चणुते च्चणुयात् च्चण्वीत च्चणोतु च्चणुताम् अच्चणोत् अच्चणुत । चच्चाण, चच्चणे, च्चण्यात्, च्चणिषीष्ट, च्चणिता २, च्चणिष्यति, च्चणिष्यते, अच्चणिष्यत, अच्चणिष्यत । ह्यन्तच्चणेति० न वृद्धिः । अच्चणीत् । अच्चणिष्ट-अच्चत । अच्चथाः । अच्चणिष्ठाः ।**

तनादिः । अकारोतेस्तनादेस्तन्थासोः परयोः सेर्लोपो वाच्यः । अनेन वा सेर्लोपः । लोपस्त्वनुदात्त० । अनेन नकारस्य लोपः । अतत । अतनिषाताम् । अतनिषत । सेर्लोपः । नकारस्य लोपः । अतथाः । अतनिष्ठाः । अन्यानि सुगमानि । च्चणु । च्चिणु । हिंसायाम् । पूर्ववत् प्रत्यया भवन्ति । तनादिकृप् । नूपः । णत्वम् । च्चणोति । च्चणुतः । च्चण्वन्ति । च्चणुते । च्चणुयात् । च्चण्वीत । च्चणोतु । च्चणुताम् । अच्चणोत् । अच्चणुत । लिट्लकारे । द्वित्वं । पूर्वस्य कुहोश्चुः । अत उपधायाः । चच्चाण । चच्चणतुः । चच्चणुः । चच्चणे । चच्चणाते । चच्चणिरे । च्चण्यात् । सिसता० । षत्वम् । च्चणिषीष्ट । च्चणिता । च्चणिता । अन्येषां सूत्रात् ज्ञेयानि । लुङ्लकारे । इाविटौ । सेर्णित्वात् अत उपधायाः । अनेन वृद्धौ प्राप्तायां ह्यन्तच्चण० । अनेन तन्निषेधः । अच्चणीत् । अन्यानि सुगमानि । आत्मनेपदे । अच्चणिष्ट । तनादिः । अनेन वा सेर्लोपः । लोपस्त्वनुदात्त० । अच्चत । अच्चणिषाताम् ।

अचिणिषत। अचणिष्ठाः। वा सेर्लोपः। अचथाः। इत्यादीनि। चिणु-धातो रूपाणि कथ्यन्ते। प्रत्ययादयः पूर्ववत्। तनादेरुप्।

## तनादेरुपधाया गुणो वा पिति।

**च्चिणोति चेणोति अचेणीत् अचित-अचणिष्ट। षणु दाने। सेने सायात् सन्यात् असात-असनिष्ठ असाथाः-असनिष्ठाः। डुकृञ् करणे। डुञाविती। गुणः। नूपः। करोति।**

तनादेः। तनादेर्धातोरुपधाया गुणो वा भवति पिति प्रत्यये परे। च्चिणोति। चेणोति। चिणुते। चिणुयात्। चिण्वी। चिणोतु। चेणोतु। चिणुताम्। अचिणोत्। अचेणोत्। अचिणुत। अन्यानि रूपाणि सुगमानि। लिट्लकारे उपधाया लघोः। चिचेण। चिचिणतुः। चिच्चिणुः। चिचिणे। चिच्चिणाते। चिच्चिणिरे इत्यादीनि। चिण्यात्। सिसता०। चेणिषीष्ट। चेणिता। चेणिता। लुङ्लकारे। अचेणीत्। आत्मनेपदे। अचेणिष्ट। अचेत। इत्यादीनि। षणु दाने। पूर्ववत् प्रत्ययाः। तनादेरुप्। आदेः ष्णः स्नः। नूपः। सनोति। सनुतः। सनुते। सनुयात्। सन्वीत। सनोतु। हौ परे। सनु। सनुताम्। असनोत्। असनुत। रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकम्। वृद्धिः। ससान। लोपः पचां०। सेनतुः। सेनुः। सेने। सेनाते। सेनिरे। सन् यान् इति स्थिते। जनखनसनाम् अनेन वा आकारो भवति। सायात्। सन्यात्। सिसता०। सनिषीष्ट। सनिता। सनिता। लुङ्लकारे। असानीत्। असनिष्ट। असत। असनिष्ठाः। असथाः। इत्यादीनि। डुकृञ् करणे। डुञाविती। तनादेरुप्। गुणः। नूपः। करोति। कृ उप् तस् इति जाते। गुणः। सूत्रम्।

## ङित्यदुः।

**करोतेरकारस्य उकारो भवति ङिति विभक्तौ परतः। कुरुतः कुर्वन्ति। करोषि कुरुथः कुरुथ। करोमि।**

ङित्यदुः। ङिति (स० ए०) अत् (प० ए०) उः (प्र० ए०) करोते-

धातोरकारस्य उकारो भवति ङिति विभक्तौ परतः। कुरुतः। कुर्वन्ति। करोषि। कुरुथः। कुरुथ। करोमि। कुरुवस् इति जाते। नुर्वमोर्वा। अनेन लोपविकल्पे प्राप्ते। सूत्रम्।

## कृञो नित्यं वमोरुलोपो वाच्यः।

कुर्वः कुर्मः। कुरुते।

कृञः। कृञो धातोर्नित्यं वकारमकारयोरुकारस्य लोपो वाच्यः। अनेन नित्यं लोपः। य्वोर्विहसे अनेन दीर्घे प्राप्ते। सूत्रम्।

## कुर्छुरोर्न दीर्घः।

कुर्छुरोः। कुर्छुरोः दीर्घो न भवति। अनेन कुरुते। दीर्घाभावः। कुर्वः। कुर्मः। कुरु यात्। इति जाते। सूत्रम्।

## कृञो ये।

**कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति ये परे। कुर्यात् कुर्वीत करोतु करवाणि कुरुताम् करवै अकरोत् अकुरुत। चकार चक्रतुः चक्रुः। चकर्थ, चक्रे, क्रियात्, कृषीष्ट, कर्त्ता, करिष्यति, अकरिष्यत्, अकार्षीत्, अकृत अकृषाताम् अकृषत।**

कृञो ये। कृञः। (पं० ए०) ये। (स० ए०) कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति। अनेन उकारस्य लोपः। कुर्यात्। कुर्वीत। करोतु। कुरु-तात्। कुरुताम्। कुर्वन्तु। ओर्वाहि०। कुरु। णत्वम्। करवाणि। कुरु-ताम्। कुर्वाताम्। कुर्वताम्। करवै। अकरोत्। अकुरुत। रूपाणि सुग-मानि। लिट्लकारे। द्वित्वादिकम्। रः कृञोः। धातोर्नामिनः। चकार। चरम्। चक्रतुः। चक्रुः। क्रादित्वान्नेट्। चकर्थ। चक्रे। चक्राते। चक्रिरे। ऋसोरिङ्। क्रियात्। षत्वम्। कृषीष्ट। गुणः कर्त्ता। कर्त्ता। ऋनृतः स्यः। गुणः। करिष्यति। करिष्यते। दिवादावट्। अकरिष्यत् अकरिष्यत। लुङ्लकारे। धातोर्नामिनः अनेन वृद्धिः। अकार्षीत्। अकार्ष्टाम्। अकार्षुः। तनादेः। अकृत। अकृषाताम्। अकृषत।

## सम्पर्युपेभ्यः करोतेर्भूषणेऽर्थे सुट्।

**संस्करोति।**

संपर्युपेभ्यः। सम्पर्युपेभ्य उपसर्गेभ्यः करोतेर्धातोर्भूषणेऽर्थे सुड् भवति। संस्करोति। इत्यादीनि।

## अड्द्वित्वव्यवधानेऽपि सुट् स्यात्।

**समस्करोत् सञ्चस्कार।**

अड्द्वित्व०। अड्द्वित्वव्यवधाने सत्यपि सुट् स्यात्। समस्करोत्। सञ्चस्कार। टित्वादादौ भवति सुट्। सूत्रम्।

## ससुट् कञो थादौ नित्यमिड्वाच्यः।

**सञ्चस्करिथ। एवमुपस्कुरुते। मनु अवबोधने। मनुते मेने मन्ता। वनु याचने। परस्मैपद्ययमित्येके। वनुते। इति तनाद्युभयपदिप्रक्रिया। इत्युब्विकरणास्तनादयः।**

ससुट्कञः। सुटा सह वर्त्तमानः ससुट्। ससुट् चासौ कञ् च ससुट्कञ्। तस्य ससुट्कञः। ससुट्करोतेर्धातोर्थादौ परे सति नित्यमिड् वाच्यः। सञ्चस्करिथ एवमुपस्कुरुते। मनु अवबोधने। पूर्ववत् प्रत्यया भवन्ति। तनादिरूप्। अयं धातुरात्मनेपदी। मनुते। मन्वाते। मन्वते। मन्वीत। मनुताम्। दिवादावट्। अमनुत। रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकम्। लोपः पत्वम्। मेने। मेनाते। मेनिरे। इत्यादीनि। नश्चापदान्ते। मंसीष्ट। मन्ता। मंस्यते। दिवादावट्। अमंस्यत। लुङ्लकारे। अमंस्त। अमंसाताम्। अमंसत। इत्यादीनि। वनु याचने। अयमप्यात्मनेपदी। त आदयः प्रत्यया भवन्ति। तनादिरूप्। वनुते। वन्वीत। वनुताम्। अवनुत। लिट्लकारे। वादित्वान्नैत्वपूर्वलोपौ भवतः। ववने। ववनाते। ववनिरे। वंसीष्ट। वन्ता। वंस्यते। अवंस्यत। लुङ्लकारे। अवंस्त। अवंसाताम्। अवंसत। सर्वत्र नश्चापदान्ते झसि। अनेन अनुस्वारः। अयं धातुः परस्मैपदी इति एके आचार्या वदन्ति। तन्मते। वनोति। इत्यादीनि रूपाणि भवन्ति। इत्युब्विकरणास्तनादयो धातवः कथिताः।

# अथ तुदादयः ।

तत्रादावुभयपदिनः । तुद व्यथने । अकार उभयपदार्थः ।

अथ तुदादयो धातवः कथ्यन्ते । तत्रादावुभयपदिनो धातवः सन्ति । तुद व्यथने । अकार उभयपदार्थः । तिबादयस्त आदयस्त प्रत्यया भवन्ति । सूत्रम् ।

## तुदादेरः ।

तुदादेर्गणादः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । ङित्त्वान्न गुणः । तुदति, तुदते, तुदेत्, तुदेत, तुदतु, तुदताम्, अतुदत्, अतुदत, तुतोद, तुतुदे, तुद्यात्, तुत्सीष्ट, तोत्ता, तोत्स्यति, तोत्स्यते, अतोत्स्यत्, अतोत्स्यत । अतौत्सीत् अतौत्ताम् अतौत्सुः । अतुत्त अतुत्साताम् अतुत्सत । भ्रस्जो पाके । ओइत् ।

तुदादेरः । तुदादेः । ( पं० ए० ) अः ( प्र० ए० ) तुदादेर्गणात् अः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । ङित्त्वान्न गुणः । तुदति । आत्मनेपदे । तुदते । रूपाणि सुगमानि । तुदेत् । तुदेत । तुदतु । तुदताम् । अतुदत् । अतुदत । रूपाणि भूधातुवत् । किन्तु गुणाभावः । लिट्लकारे । द्विलादिकम् । उपधाया लघोः अनेन गुणो भवति । तुतोद । तुतुदतुः । तुतुदुः । तुतोदिथ । इत्यादीनि । आत्मनेपदे । तुतुदे । तुद्यात् । खसे० । तुत्सीष्ट । अन्येषां सूत्रतो ज्ञेयानि । लुङ्लकारे । अनिटो नामिवतः । अनेन वृद्धिः । अतौत्सीत् । झसात् । अनेन सेर्लोपः । अतौत्ताम् । अतौत्सुः । इत्यादीनि । आत्मनेपदे । झसात् । अनेन झसे परे सेर्लोपः । सिस्योः । अनेन गुणनिषेधः । अतुत्त । अतुत्साताम् । अतुत्सत इत्यादीनि भवन्ति । भ्रस्जो पाके । ओकार इत् । तिबादयो भवन्ति । तुदादेरः । अनेन अप्रत्ययो भवति । सूत्रम् ।

## अन्यत्र सो जः ।

झसपरत्वाभावे सस्य जो भवति । ग्रहां क्ङिति च ।

अन्यत्र सीजः। अन्यत्र। (स० ए०) सः (ष० ए०) जः (प्र० ए०) झस्परत्वाभावे सति सकारस्य जकारो भवति। अनेन सस्य जकारः। सूत्रम्।

## अप्रत्ययो ङिद्वत्।

**भृज्जति, भृज्जते, बभ्रज्ज। ऋसंयोगात्०। इति किन्त्वाभावान्न संप्रसारणम्। बभ्रज्जतुः बभ्रज्जुः बभ्रज्जिथ-बभ्रष्ट बभ्रज्जे।**

अप्रत्ययो ङिद्वद् ज्ञातव्यः। ङित्वात्सम्प्रसारणम्। 'ग्रहां क्ङिति च'। अनेन भवति। भृज्जति। भृज्जते। चतुर्णां लकाराणां रूपाणि सुगमानि लिट् लकारे। द्वित्व। पूर्वस्य हसादिः। झपानाम्। 'अन्यत्र सो जः।' अनेन सस्य जः। बभ्रज्ज। किन्त्वाभावात् सम्प्रसारणं न भवति। बभ्रज्जतुः। बभ्रज्जुः बभ्रज्जिथ। बभ्रष्ठ। आत्मनेपदे। बभ्रज्जे। बभ्रज्जाते। बभ्रज्जिरे। इत्यादीनि। सूत्रम्।

## भृज्जतेः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः।

**बभर्ज, बभर्जे, भृज्ज्यात्-भर्ज्यात्, भ्रक्षीष्ट-भर्क्षीष्ट, भ्रष्टा-भर्ष्टा, भ्रक्ष्यति-भर्क्ष्यति, अभ्रक्ष्यत्-अभर्क्ष्यत्, अभ्राक्षीत्-अभार्क्षीत्, अभ्रष्ट-अभर्ष्ट। दिश अतिसर्जने। दिक्षीष्ट, अदिक्षत्, अदिक्षत। क्षिप प्रेरणे। क्षिप्सीष्ट, अक्षिप्त। कृष् विलेखने। कृक्षीष्ट, क्रष्टा-कर्ष्टा, अकार्क्षीत्-अक्राक्षीत्। अकृक्षत-अकृष्ट अकृक्षाताम् अकृक्षत। मिल संगमे। मिमिले, अमेलिष्ट। मुच्लृ मोक्षणे।**

भृज्जतेः। भृज्जतेर्धातोः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः। सुगममिदं सूत्रम्। मिदन्त्यात् स्वरात्परो भवति। तत्पक्षे। बभर्ज। बभर्जतुः। बभर्जुः आत्मनेपदे। बभर्जे।' इत्यादीनि। अन्यत्र सीजः। सम्प्रसारणम्।

भज्ज्यात्। भज्ज्यते:। भज्ज्यात्। भस्ज् सीष्ट। इति स्थिते। स्कोरादौच। अनेन सस्य लोप:। चो: कु:। खसे०। षत्वम्। कषसंयोगे०। भक्षीष्ट। भज्जते:। तदा भर्क्षीष्ट। अन्येषां मूलाद् ज्ञातव्यानि सर्वाणि रूपाणि। अनेनैव प्रकारेण सिध्यन्ति। लुङ्लकारे। अनिटो नामिवत:। अनेन वृद्धि:। अन्य-त्साधनं तु पूर्ववत्। अभाक्षीत्। झसात् अनेन सेर्लोपो भवति। अभाष्टाम्। अभाक्षु:। रमागमे कृते। अभार्क्षीत्। आत्मनेपदे। स्कोरादौच। छशष० अनेन षकार:। अभष्ट। अभक्षाताम्। अभक्षत। रमागमे कृते। अभर्ष्ट। इत्यादीनि रूपाणि भवन्ति। दिश अतिसर्जने। अकार उभयपदार्थ:। पूर्व-वत् प्रत्यया भवन्ति। तुदादेर:। दिशति। दिशते। चतुर्णां लकाराणां रूपाणि सुगमानि। लिट्लकारे। उपधाया लघो:। अनेन गुण:। दिदेश। दिदिशे। अन्यानि रूपाणि सुगमानि। दिश्यात्। 'दिश् सीष्ट' इति स्थिते। छशष०। षढो०। षत्वम्। कषसंयोगे च:। दिक्षीष्ट। षत्वम्। ष्टुत्वम्। देष्टा। अत्र गुणो भवति। देष्टा। देक्ष्यति। देक्ष्यते। 'अदेक्ष्यत्। अदेक्ष्यत।' हशपान्तात्। अनेन लुङि सक्। अन्यत् साधनं तु पूर्ववत्। अदिक्षत्। आत्मनेपदे। अदिक्षत। अदिक्षाताम्। अदिक्षत। इत्यादीनि भवन्ति। क्षिप् प्रेरणे। प्रत्ययादय: पूर्ववत्। क्षिपति। क्षिपते। लिट्-लकारे। द्वित्वादिकम्। गुण:। चिक्षेप। चिक्षिपे। क्षिप्यात्। क्षिप्सीष्ट। क्षेप्ता। क्षेप्ता। अन्येषां रूपाणि सुगमानि। लुङ्लकारे। अनिट:। अनेन वृद्धि:। अक्षैप्सीत्। झसात्०। अक्षैप्ताम्। आत्मनेपदे। अक्षिप्त। इत्या-दीनि रूपाणि। कृष् विलेखने। तुदादेर:। कृषति। कृषते। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्व। र:। कुहोश्चु:। उपधाया लघो:। चकर्ष। चकृषतु:। चकृषु:। अस्तत:। चकर्षिथ। चकर्ष्ट। चकृषे। चकृषाते। चकृषिरे। इत्यादीनि। कृष्यात्। कृष् सीष्ट। इति स्थिते। सिस्यो:। अनेन गुणनिषेध:। षढो:०। षत्वम्। कषसंयोगे च:। कृक्षीष्ट। गुण:। ष्टुत्वम्। कर्ष्टा। 'रारोझसेदृशां' अनेन अरो रकारो वा भवति। क्रष्टा। कर्ष्टा। कर्क्ष्यति। क्रक्ष्यति। अन्येषां रूपाणां सिद्धिरनेनैव प्रका-रेण। लुङ्लकारे। 'अनिट:।' अनेन वृद्धि:। अन्यत्साधनं तु पूर्वं सदृशमस्ति। अकार्क्षीत्। अकार्ष्टाम्। 'अत्र झसात्' अनेन सेर्लोपो भवति। अकार्क्षु:। रारो झसे। अक्राक्षीत्। आत्मनेपदे। सिस्यो: अनेन गुणनिषेध:। 'झसात्०'

अनेन झसे परे सेर्लोपः । अक्लृष्ट । अक्लृक्षाताम् । आतोऽन्तो० । अक्लृक्षत । इअषान्तात् । अक्लृक्षत् । आत्मनेपदे । अक्लृक्षत । अक्लृक्षाताम् । आतोऽन्तो० । अक्लृक्षत । इत्यादीनि रूपाणि ज्ञातव्यानि । मिल सङ्गमने । अकारः । तुदादेरः । मिलति मिलते । चतुर्णां रूपाणि सुगमानि । लिट् लकारे । द्वित्वादिकम् । उपधाया लघोः । मिमेल । मिमिलतुः । मिमिलुः । मिमेलिथ । इत्यादीनि । मिमिले । मिल्यात् । उपधाया लघोः । मेलिषीष्ट । अत्र षत्वं च भवति । मेलिता । मेलिता । मेलिष्यति । मेलिष्यते । अमेलिष्यत् । अमेलिष्यत । लुङ् लकारे । दाविटौ । इट ईटि । अनेन सेर्लोपो भवति । दिवादावट् । अमेलीत् । अमेलिष्टाम् । अमेलिषुः । आत्मनेपदे । अमेलिष्ट । अमेलिषाताम् । अमेलिषत । इत्यादीनि । मुच्लृ । मोचणे । लृकारो लित्कार्यार्थः । तुदादेरः ।

## मुचादेर्मुम् ।

**मुचादीनां मुमागमो भवति अप्रत्यये परे । मुञ्चति, मुञ्चते, मुमोच, मुमुचे, मुच्यात् । 'सिस्योः' अनेन गुणाभावः । चोः कुः । मुक्षीष्ट, मोक्ता, मोक्ष्यति, मोक्ष्यते, अमोक्ष्यत्, अमोक्ष्यत, अमुचत्-अमुक्त । लुप्लृ छेदने । लुम्पति, लुप्सीष्ट, अलुपत् । विद्लृ लाभे । विन्दति, अवेदिष्ट । अनिडयमित्येके । वेत्ता । लिप् उपदेहे । मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एते मुचादयः । लिम्पति, लिलेप, अलिपत्, अलिपत ।**

मुचादेर्मुम् । मुचादेः । ( ष० ए० ) मुम् ( प्र० ए० ) मुचादीनां धातूनां मुमागमो भवत्यप्रत्यये परे । मिदं० । मुच् लुप् विद लिप् सिच् कृत् पिश खिद एते मुचादयो धातवो ज्ञातव्याः । मुञ्चति । मुञ्चते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट् लकारे द्वित्वम् । पूर्वस्य । उपधाया लघोः । मुमोच । मुमुचतुः । मुमुचुः । अत्वतः । मुमोचिथ । चोः कुः । मुमोक्थ । मुमुचे । मुच्यात् । चोः कुः । षत्वम् । कषसं० । 'सिस्योः' अनेन गुणनिषेधः । मुक्षीष्ट । गुणः । चोः कुः । मोक्ता । मोक्ता । मोक्ष्यति ।

सीक्ष्यते । असीक्ष्यत् । असीक्ष्यत । लिपुपादिभ्यः अनेन लुङि ङप्रत्ययो भवति । ङित्वाद्गुणाभावः । अमुचत् । आत्मनेपदे । झसात् । अनेन सेर्लोपो भवति झसि परे । अमुक्त । अमुचाताम् । अमुचत । लुप् छेदने । तुदादेरः । मुचादेर्नुम् । लुम्पति । लुंपते । चतुर्णां सुगमानि । लिट् लकारे । लुलोप । लुलुपे । लुप्यात् । 'सिस्योः' अनेन गुणनिषेधः । लुप्सीष्ट । लोप्ता । लोप्ता । लोप्स्यति लोप्स्यते । अलोप्स्यत् । अलोप्स्यत । लिपुपादिभ्यः । अलुपत् । आत्मनेपदे । झसात् । अलुप्त । अलुप्साताम् । अलुप्सत । इत्यादीनि ।

## लिपिसिचिह्वयतीनामात्मनेपदे सेर्ङो वा वाच्यः ।

अलिप्त । षिच्लृ क्षरणे । सिञ्चति, सिषेच, सिच्यात् सिक्षीष्ट, सेक्ता २, सेक्ष्यति, असिचत्, असिक्त । इति तुदादिषु उभयपदिप्रक्रिया ।

लिपिसिचिह्वयतीनाम् । एषां धातूनामात्मनेपदे सेर्ङो वा वाच्यः । अनेनात्मनेपदेऽपि । सेर्ङः । अलिपत । अलिपेताम् । अलिपन्त । इत्यादीनि । षिच्लृ क्षरणे । तुदादेरः । मुचादेर्नुम् । आदेः ष्णः स्नः । सिञ्चति । सिञ्चते । अन्येषां सुगमानि । लिट् लकारे । द्वित्वादिकम् । षत्वम् । गुणः । सिषेच । सिषिचतुः । सिषिचुः । सिषेचिथ । अत्वतः । चोः कुः । सिषेक्थ । सिषिचे । सिच्यात् । चोः कुः । षत्वम् । कष० । 'सिस्योः' अनेन गुणनिषेधः । सिक्षीष्ट । गुणः । चोः कुः । सेक्ता । सेक्ता । सेक्ष्यति । सेक्ष्यते । असेक्ष्यत् । असेक्ष्यत । लिपुपादिभ्यः । असिचत् । लिपिसिचि० । असिचत । असिचेताम् । असिचन्त । ङेरभावपक्षे । झसात्० । चोः कुः । असिक्त । असिक्षाताम् । असिक्षत । इत्यादीनि । इत्युभयपदिनो धातवः कथिताः ।

## अथ परस्मैपदिनः ।

कृती छेदने । कृन्तति चकर्त कृत्यात् कर्तिता कर्ति-

**ष्यति अकर्तिष्यत् अकर्तीत्। लुभ विमोहने। लोभिता-लोब्धा अलोभीत्। चृती हिंसाग्रन्थनयोः। चर्तिष्यति चर्त्स्यति अचर्तीत्। विध विधाने। वेधिता। कुट कौटिल्ये।**

अथ परस्मैपदिनो धातवः कथ्यन्ते। तिवादयः सर्वत्र भवन्ति। तुदादेरः। अयमपि चतुर्षु भवति। कृती छेदने। ईकार इत्। मुचादेर्मुम्। कृन्तति। कृन्तते। चतुर्णां सुगमानि रूपाणि। लिट् लकारे। द्विश्च। रः। उपधाया लघोः। कुहोश्चुः। चकर्त्त चकृततुः चकृतुः। चकर्त। कृत्यात्। सिसता०। गुणः। कर्त्तिता। कर्त्तिष्यति। अकर्त्तिष्यत्। लुङ्लकारे। दाविटौ। सेर्लोपः। उपधाया लघोः। अकर्त्तीत्। अकर्त्तिष्टाम्। अकर्त्तिषुः। लुभ् विमोहने। तुदादेरः। लुभति। लुभेत्। लुभतु। अलुभत्। लिट् लकारे। द्विलादिकं०। उपधाया लघोः। लुलोभ। लुलुभतुः। लुलुभुः। लुभ्यात्। इषुसह०। लोभिता। इडभावे गुणः। तथोर्धः। झबे जबाः। लोब्धा। लोब्धारौ। लोब्धारः। लोभिष्यति। अलोभिष्यत्। लुङ्लकारे। दाविटौ। उपधाया लघोः। अलोभीत्। अलोभिष्टाम्। अलोभिषुः। चृति हिंसा-ग्रन्थनयोः। ईकार इत्। तुदादेरः। चृतति। चृतेत्। चृततु। अचृतत्। लिट् लकारे। द्विश्च। पूर्वस्य रः। उपधाया लघोः। चचर्त्त। चचृततुः। चचृतुः। चृत्यात्। सिसता०। गुणः। चर्त्तिता। इत्। इट। अनेन स्यपि वा इट। चर्त्तिष्यति। चर्त्स्यति। अचर्त्तिष्यत्। अचर्त्स्यत्। लुङ्लकारे। दाविटौ। अचर्त्तीत्। अचर्त्तिष्टाम्। अचर्त्तिषुः। विध विधाने। तुदादेरः। विधति। चतुर्णां सुगमानि। लिट् लकारे। द्विलादिकम्। गुणः। विवेध। विविधतुः। विविधुः। विध्यात्। सिसता०। गुणः। वेधिता। वेधिष्यति। अवेधिष्यत्। लुङ्लकारे। दाविटौ। गुणः। सेर्लोपः। अलोभीत्। अलोभिष्टाम्। अलोभिषुः। इत्यादीनि। कुट कौटिल्ये। अकार इत्। तुदादेरः। कुटति। चतुर्णां रूपाणि सुगमानि। लिट् लकारे। द्विश्च पूर्वस्य। कुहोश्चुः। उपधाया लघोः। चुकोट। चुकुटतुः। चुकुटुः। 'चुकुट् इट् थप्' इति जाते। उपधाया लघोः। अनेन गुणे प्राप्ते। सूत्रम्।

**कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङिद्वत्।**

**चुकोट चुकुटिथ कुटिता अकुटीत्। त्रुट् छेदने। त्रुट्यति**

त्रुटति। ओव्रश्चू छेदने। ओऊ इतौ। ग्रहां क्ङिति च। वृश्चति। वव्रश्च वव्रश्चतुः वव्रश्चुः। वव्रश्चिथ वव्रष्ठ वृश्च्यात्। ऊदितो वा। व्रश्चिता-व्रष्टा। स्कोराद्योश्च व्रश्चिष्यति व्रक्ष्यति अव्रश्चीत् अव्राक्षीत् अव्राष्टाम्। कॄ विक्षेपे। ऋत इद्। किरति चकार चकरतुः कीर्यात् करिता। ईटो ग्रहाम्। करीता करीष्यति-करिष्यति अकरीष्यत् अकरिष्यत् अकारीत्।

कुटादिः। कुटादेर्धातोर्ञ्णिदूर्जः। प्रत्ययो ङिद्वत्। ङित्त्वाद्गुणाभावः। चुकुटिथ। कुट्यात्। कुटादिः। अनेन ङित्त्वाद्गुणो न भवति। कुटिता। कुटिष्यति। अकुटिष्यत्। शेषाणि रूपाणि सुगमानि। लुङ्लकारे। इाविटौ। गुणाभावः। अकुटीत्। अकुटिष्टाम्। अकुटिषुः। इत्यादीनि। त्रुट् छेदने। क्रमुभ्रमु० अनेनास्य धातोर्वा यः प्रत्ययो भवति। तुदादेरः। त्रुट्यति। अप्रत्यये कृते सति। त्रुटति। एवं चतुर्णां रूपाणि। लिट्लकारे। तुत्रोट। तुत्रुटतुः। तुत्रुटुः। तुत्रुटिथ। त्रुट्यात्। त्रुटिता। कुटादित्वाद्गुणो न भवति। त्रुटिष्यति। अत्रुटिष्यत्। लुङ्लकारे इाविटौ। सेर्लोपः। दिवादावट्। अत्रुटीत्। अत्रुटिष्टाम्। अत्रुटिषुः। इत्यादीनि रूपाणि भवन्ति। ओव्रश्चू० छेदने। ओकारोकारावितौ। तुदादेरः। 'ग्रहांक्ङिति च' अनेन सम्प्रसारणं भवति। वृश्चति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्व। पूर्वस्य। वव्रश्च। सम्प्रसारणम्। वव्रश्चतुः। वव्रश्चुः। वव्रश्चिथ। ऊदितो वा। संयोगान्तस्य लोपः। अनेन चकारस्य लोपः। व्रश्च०। ष्टुत्वम्। वव्रष्ठ। इत्यादीनि। सम्प्रसारणम्। वृश्च्यात्। सिसता०। व्रश्चिता। ऊदितो वा० अनेन वा इट्। संयोगान्तस्य लोपः। षत्वम्। ष्टुत्वम्। व्रष्टा। व्रश्चिष्यति। इडभावे। स्कोराद्योश्च। चोः कुः। षत्वम्। कषसंयोगे०। व्रक्ष्यति। अव्रश्चिष्यत्। अव्रक्ष्यत्। लुङ्लकारे। इाविटौ। सेर्लोपः। दिवादावट्। अव्रश्चीत्। अव्रश्चिष्टाम्। अव्रश्चिषुः। इडभावे। स्कोरा०। चोः कुः। अनिटो नामिवतः। अनेन वृद्धिः। अव्राक्षीत्। 'झसात्' अनेन सेर्लोपः। अन्यत्साधनं पूर्ववत्। अव्राष्टाम्। अव्राक्षुः। कॄ विक्षेपे। तुदादेरः। ऋत इर्। अनेन ऋकारस्य इड् भवति। किरति। किरेत्। किरतु। अकि-

रत्। लिट्लकारे डिश। रः। कृद्दोगुः। धातोर्नामिनः। चकार। ऋसंयोगात्। अनेनाकित्त्वान्न गुणाभावः। चकरतुः। चकरः। चकरिथ। ऋत इट्। यीर्विङ्सी। कीर्यात्। सिसता०। गुणः। करिता। 'इटो ग्रहाम्' अनेन वा दीर्घः। करीता। अन्येषां नूलाद् ज्ञेयानि। लुङ्लकारे। णित्पे। अनेन सेर्णित्त्वात् वृद्धिः। धातोर्नामिनः। अकारीत्। वृद्धिर्हेतौ। अनेन दीर्घाभावः। अकारिष्टाम्। अकारिषुः। इत्यादीनि।

## उपात्किरतेश्छेदेऽर्थे सुड्वाच्यः।

उपात्०। उपोपसर्गपूर्वात् किरतेर्धातोः छेदनेऽर्थे सुड् वाच्यः।

## हिंसायां प्रतेश्च।

**उपस्किरति, उपचस्कार, प्रतिस्किरति। गॄ निगरणे। गिरति।**

हिंसायाम्। किरतेर्धातोर्हिंसायामर्थे प्रतिपूर्वाच्च सुड् वाच्यः। उपस्किरति। उपचस्कार। हिंसायाम्। प्रतिस्किरति। गॄ निगरणे। ऋत इर्। अनेनेट्। तुदादेरः। गिरति।

## गिरतेरस्य वा लः स्वरे वाच्यः।

**गिलति। जगार-जगाल-जगरतुः-जगलतुः जगरुः-जगलुः। अगारीत् अगालीत्। स्पृश स्पर्शने। स्पृशति पस्पर्श स्पृश्यात् स्प्रष्टा स्पर्ष्टा स्प्रक्ष्यति-स्पर्क्ष्यति, अस्प्रक्ष्यत्-अस्पर्क्ष्यत्, अस्प्राक्षीत्। रो वा। अस्पार्क्षीत्।**

गिरतेः। गिरतेर्धातोरकारस्य लकारः स्वरे परे वाच्यः। अनेन रकारस्य लकारः। गिलति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। डिश। रः। कृद्दोगुः। धातोर्नामिनः। अनेन वृद्धिः। जगार। जगाल। ऋसंयोगात्। अनेनाकित्त्वाद्गुणो भवति। जगरतुः। जगलतुः। इत्यादीनि। ऋत इर्। यीर्विङ्सी। गीर्यात्। गरिता। गलिता। अन्यानि सुगमानि। लुङ्-

लकारे । ह्राविटौ । धातोर्नामिन: । अनेन वृद्धि: । अगारीत् । अगारिष्टाम् । अगारिषु: । लत्वे कृते सति । अगालीत् । अगालिष्टाम् । अगालिषु: । इत्यादीनि । स्पृश् स्पर्शने । तिबादय: । तुदादिश: । स्पृशति । लिट्लकारे द्वित्व । र: । पूर्वस्य हसादि: । उपधाया लघो: । पस्पर्श । पस्पृशतु: । पस्पृशु: । इत्यादीनि । स्पृश्यात् । स्पृश् ता इति स्थिते । छशष० । अनेन षकार: । उपधाया लघो: । अनेन गुण: । रारीभसे० अनेन अरौ रकार: । कृषादीनां० । अनेन विकल्प: । ष्टुत्वम् । स्प्रष्टा । स्पर्ष्टा । षढो: क: से । स्प्रक्ष्यति । स्पर्क्ष्यति । अस्प्रक्ष्यत् । अस्पर्क्ष्यत् । लुङ् लकारे 'अनिटो नामिवत:' अनेन वृद्धि: । अन्यत्साधनं सुगमम् । अस्पार्क्षीत् । 'झसात्०' अनेन सेर्लोप: । अस्पार्ष्टाम् । अस्पार्क्षु: । अरौ रकारे कृते । अस्प्राक्षीत् । अस्प्राष्टाम् । अस्प्राक्षु: । इत्यादीनि । 'कृषादीनां०' अनेन 'भूते सि:' अनेन विहित: सिप्रत्ययो वा भवति ।

## कृषादीनां वा सिर्वाच्य: ।

तत्पक्षे । हशषान्तात्सक् । अस्पृक्षत् । प्रच्छ ज्ञीप्सायाम् । सम्प्रसारणम् । पृच्छति । पप्रच्छ पप्रच्छतु: । पप्रच्छिथ पप्रष्ठ, पृच्छ्यात्, प्रष्टा, प्रक्ष्यति, अप्राक्षीत् । सृज विसर्गे । सृजति, ससर्ज ससृजतु: ससृजु: । ससर्जिथ-सस्रष्ठ । सृज्यात् रारो भसे इत्याम् । स्रष्टा, स्रक्ष्यति, अस्राक्षीत् । टुमस्जो शुद्धौ । टु ओ इतौ । अन्यत्र सो ज: । मज्जति, ममज्ज, मङ्क्ता । मस्जिनशोर्झसे नुम् । मंक्ष्यति, अमांक्षीत् अमाङ्क्ताम् अमांक्षु: । विश् प्रवेशने । वेष्टा, अविक्षत् । मृश् आमर्षणे । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । विच्छ गतौ । आय: । विच्छायति, विच्छायाञ्चकार-विविच्छ. विच्छाय्यात्, विच्छ्यात्, विच्छायिता-विच्छिता, अविच्छायीत् । इषु इच्छायाम् । गमां छ: । इच्छति, इच्छेत्, इयेष, एषिता, एष्टा । छुप स्पर्शे । छोप्ता, अच्छौप्सीत् ।

**लिश गतौ। लेटा अलिक्षत्। खिद परिघाते। खिन्दति, खेत्ता, अखैत्सीत्। पिश अवयवे। पिंशति, पेशिता। इति तुदादिषु परस्मैपदिप्रक्रिया।**

ऋषादीनाम्। अनेन ऋषादीनां धातूनां सर्वत्र सेर्विकल्पः। तदा 'इश-षान्तात्'। अनेन सक्। अन्यत्साधनं सुगमम्। अस्पृक्षत्। अस्पृक्षताम्। अस्पृक्षन्। इत्यादीनि। प्रच्छ ज्ञीप्सायाम्। तुदादेरः। ग्रहां क्ङिति च। अनेन सम्प्रसारणं०। पृच्छति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्व। पूर्वस्य। पप्रच्छ। सम्प्रसारणं०। पपृच्छतुः। पपृच्छुः। पप्रच्छिथ। अस्वतः। षत्वम्। ष्टुत्वम्। पप्रष्ठ। इत्यादीनि। सम्प्रसारणं०। पृच्छ्यात्। षत्वम्। ष्टुत्वम्। प्रष्टा। षढोः कः सि। क्विलात्०। कष०। प्रक्ष्यति। अप्रक्ष्यत्। लुङ्-लकारे। अत उपधायाः। अनेन वृद्धिः। अन्यत् साधनं सुगमम्। अप्राक्षीत्। झयप०। ष्टुत्वम्। अप्राष्टाम्। अप्राक्षुः। इत्यादीनि। सृज विसर्गे। तुदादेरः। सृजति। चतुर्णां सुगमानि। लिट्लकारे। द्वित्व। रः। उप-धाया लघोः। ससर्ज। ससृजतुः। ससृजुः। अस्वतः। ससर्जिथ। ससृज् थप् इति जाते। उपधाया लघोः। रारौ झसि० झयप०। ष्टुत्वम्। ससष्ठ। सृज्यात्। रारौझसि। षत्वम्। ष्टुत्वम्। स्रष्टा। षढोः कः सि। षत्वम्। कपसंयोगे०। स्रक्ष्यति। अस्रक्ष्यत्। अनिटो नामिवतः। अस्राक्षीत्। अस्राष्टाम्। अस्राक्षुः। टुमस्जो शुद्धौ। टुकारौकारौ इतौ। तुदादेरः। अन्त्य सोजः। अनेन सकारस्य जकारः। मज्जति। चतुर्णां लकाराणां रूपाणि सुगमानि। लिट्लकारे। द्वित्व। पूर्वस्य। अन्त्य सोजः। ममज्ज। ममज्जतुः। ममज्जुः। इत्यादीनि। मस्ज् ता इति स्थिते स्कोराद्योश्च। अनेन सकारस्य लोपः। चोः कुः। खसे चपा०। मस्जिनशोः। अनेन नुम्। नश्चापदान्ते। मंक्ता। मंक्तारौ। मंक्तारः। मंक्ष्यति। अमंक्ष्यत्। अत उपधायाः। अमांक्षीत्। झसात्। अनेन सेर्लोपः। अमांक्ताम्। अमांक्षुः। इत्यादीनि। विश् प्रवेशने। तुदादेरः। विशति। लिट्लकारे। द्वित्व। पूर्वस्य हसा०। गुणः। विवेश। विविशतुः। विविशुः। विवेशिथ। अस्वतः। षत्वम्। ष्टुत्वम्। गुणः। विवेष्ठ। विश्यात्। गुणः। षत्वम्। ष्टुत्वम्। वेष्टा। षत्वम्। षढोः कः सि। क्विलात्०। कष०। गुणः। वेक्ष्यति। अवेक्ष्यत्। इशषान्तात् अनेन सक्। अन्यत्साधनं सुगमम्। अविक्षत्। अवि-

चताम्। अविचन्। मृश् आमर्षणे। तुदादेरः। मृशति। लिट् डित्वादिकम्। रः। गुणः। ममर्श। ममृशतुः। ममृशुः। ममर्शिथ। अत्वतः। ममर्ष्ठ। मृश्यात्। गुणः। ष्टुत्वम्। रारौ म्रष्टा। षढोः कः सि। म्रक्ष्यति। अम्रक्ष्यत्। अनिटो नामिवतः। अम्राक्षीत्। अम्राष्टाम्। अम्राक्षुः। 'स्पृशादीनां०' अनेन सेर्विकल्पः। तत्पक्षे। हशषान्तात्। अमृक्षत्। अमृक्षताम्। अमृक्षन्। विच्छ गतौ। आयः। अनेन आयः प्रत्ययः। तुदादेरः। अदे। विच्छायति। लिट्। विच्छायांचकार। अत्र कासादि० अनेनाम्। अनपि वा इति उक्तत्वात्। अनपि वा भवति। तत्पक्षे विविच्छ। विविच्छतुः। विविच्छुः। विच्छायात्। अत्र। 'यतः' अनेन अकारस्य लोपः। आयाभावे। विच्छ्यात्। सिसता। विच्छायिता। विच्छिता। विच्छायिष्यति। विच्छिष्यति। अविच्छायिष्यत्। अविच्छिष्यत्। लुङ्लकारे। द्वाविटौ। अविच्छायीत्। अविच्छीत्। इषु इच्छायाम्। तुदादेरः। गमिष्वः। इच्छति। लिट्। द्वित्वं। गुणः। असवर्णे। इयेष। सवर्णे। ईषतुः। ईषुः। इत्यादीनि। इष्यात्। इषु सह०। गुणः। एषिता। ष्टुत्वम्। एष्टा। एषिष्यति। स्वरादेः। ऐषिष्यत्। लुङ्। ऐषीत्। छुप स्पर्शे। तुदादेरः। छुपति। चतुर्णां रूपाणि सुगमानि। लिट् द्वित्वं। गुणः। झपानाम्। चुच्छोप। छुप्यात्। गुणः छोप्ता। छोप्स्यति। अच्छोप्स्यत्। अनिटो नामिवतः। अच्छौप्सीत्। झसात्। अच्छौप्ताम्। अच्छौप्सुः। लिश् गतौ। तुदादेरः। लिशति। लिट्। लिलेश। लिलिशतुः। लिलिशुः। लिलेशिथ। अत्वत०। लिलेष्ठ। लिश्यात्। गुणः। षत्वम्। लेष्टा। षढोः कः सि। लेक्ष्यति। अलेक्ष्यत्। हशषान्ता०। छशष०। षढोः कः सि। षत्वम्। कष०। अलिक्षत्। अलिक्षताम्। अलिक्षन्। खिद परिघाते। तुदादेरः। अनेनाप्रत्ययो भवति। मुचादेर्नुम्। अनेन नुमागमो भवति। नश्चापदान्ते झसि। अनेनानुस्वारः। खिन्दति। खिन्देत्। खिन्दतु। दिबादावट्। अखिन्दत्। रूपाणि सुगमानि। लिट्लकारे। द्वित्वं। पूर्वस्य। 'उपधाया लघोः' अनेन गुणः। चिखेद। चिखिदतुः। चिखिदुः। इत्यादीनि। खिद्यात्। खसे०। गुणः। खेत्ता। खेत्स्यति। अखेत्स्यत्। 'अनिटो नामिवतः' अनेन वृद्धिः। अखैत्सीत्। झसात्०। अनेन सेर्लोपः। तथोर्धः। अखैद्धाम्। अखैत्सुः। इत्यादीनि। पिश अवयवे। तुदादेरः। मुचादेर्नुम्। पिंशति। चतुर्णां लकाराणां रूपाणि सुग-

मानि। लिट्लकारे। द्वित्व। पूर्वस्य। उपधाया लघोः। पिपेश। पिपिशतुः। पिपिशुः। पिपेशिथ। पिश्यात्। सिसता०। उपधाया लघोः। पेशिता। घत्वम्। पेशिष्यति। दिवादावट्। अपेशिष्यत्। लुङ्लकारे द्वाविटौ। अन्यत्साधनं तु पूर्ववद्‌ज्ञेयम्। अपेशीत्। अपेशिष्टाम्। अपेशिषुः। इत्यादीनि। इति परस्मैपदिनो धातवः कथिताः।

## अथात्मनेपदिनः।

म्रुङ् प्राणत्यागे।

### अयकि।

ऋकारस्य रिङादेशो भवति अकारे प्रत्यये यकि च परे। नुधातोः। म्रियते।

अथात्मनेपदिनः कथ्यन्ते। म्रुङ् प्राणत्यागे ङकार आत्मनेपदार्थः। तुदादेरः। सूत्रम्। अयकि। अश्च यक् च। अयक्। तस्मिन् अयकि। ऋकारस्य 'तुदादेरः' अनेन सूत्रेण विहिते अकारे परे च यक् प्रत्यये परे रिङादेशो भवति। अत्र ङकारव्यवधानात् 'ये' अनेन दीर्घो न भवति 'अनुबन्धः प्रत्ययवत्' इति न्यायात्। नुधातोः अनेनेय् भवति। म्रियते। आदाथई। अइए। म्रियेते। म्रियन्ते। म्रियेत। म्रियताम्। अम्रियत।

### सपरोक्षयोस्तादौ म्रियतेः परस्मैपदं वाच्यम्।

ममार मम्रतुः। मृषीष्ट, मर्ता, मरिष्यति, अमरिष्यत्। लोपो ह्रस्वाज्झसे। अमृत अमृषाताम् अमृषत। दृङ् आदरे। द्रियते, दद्रे, दृषीष्ट, दर्ता। ऋतः स्यपः। दरिष्यते, अदरिष्यत, अदृत। धृङ् अवस्थाने। ध्रियते। तद्वत्। पृङ् व्यापारे। व्याप्रियते, व्यापरिष्यते, व्यापृत व्यापृषाताम्। ओविजी भयचलनयोः। विजते, विजेत, विजताम्, अविजत, विविजे, विजिता।

सपरोक्षयोः। सपरोक्षयो स्तादौ अपि परतो म्रियतेर्धातोः परस्मैपदं वाच्यम्। तदा णबादयः प्रत्यया भवन्ति। द्वित्व। रः। धातोर्नामिनः। ममार।

ऋरम्। मम्रतुः। मम्रुः। ममर्थ। इत्यादीनि। उः। अनेन गुणनिषेधः। षत्वम्। मृषीष्ट। गुणः। मर्ता। ह्रस्वतः स्यः। मरिष्यति। अमरिष्यत्। लुङ्लकारे। लोपो ह्रस्वाज्झसि। अनेन सेर्लोपः। अमृत। अमृषातां। अमृषत। दृङ् आदरे। ङकार आत्मनेपदार्थः। तुदादेरः। अयक्ङि। नृधातोः। द्रियते। द्रियेत। द्रियताम्। अद्रियत। लिट्लकारे। द्वित्व। रः। ऋरम्। दद्रे। दद्राते। दद्रिरे। दृषीष्ट। गुणः। दर्त्ता। ह्रस्वतः। दरिष्यति। अदरिष्यत्। लुङ्लकारे 'लोपोह्रस्वाज्झसि' अनेन सेर्लोपः। अदृत। अदृषातां। अदृषत। इत्यादीनि। धृङ् अवस्थाने। ङकार आत्मनेपदार्थः। तुदादेरः। अयक्ङि। नृधातोः। अनेन इय् भवति। ध्रियते। ध्रियेत। ध्रियताम्। अध्रियत। लिट्लकारे। द्वित्व। रः। झपानां। ऋरम्। दध्रे। दध्राते। दध्रिरे। उः। धृषीष्ट। अत्र षत्वं भवति। गुणः। धर्त्ता। 'ह्रस्वतः' अनेनेट्। धरिष्यति। अधरिष्यत्। लुङ्लकारे। सेर्लोपः। अधृत। अधृषाताम्। अधृषत। पृङ् व्यापारे। ङकारः। अन्यत्साधनं तु पूर्ववद्द्दृष्टम्। व्यापूर्वोऽयं धातुः। व्याप्रियते। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकम्। व्यापप्रे। अन्येषां रूपाणि पूर्ववद्द्दृष्टानि। लुङ् लकारे। सेर्लोपः व्यापृत। व्यापृषातां। व्यापृषत। इत्यादीनि। ओविजी भयचलनयोः। ईकारौकारावितौ स्तः। तुदादेरः। विजते। लिट्लकारे। द्वित्वादिकं। विविजे। विविजाते। विविजिरे। विज् इट् ता इति जाते। तत्र गुणे प्राप्ते।

## विजेः पर इट् किद्वक्तव्यः।

**ततो नोपधागुणः। विजिष्यते, अविजिष्यत, अविजिष्ट ओलस्जी व्रीडायाम्। अन्यत्र। सो जः। लज्जते, ललज्जे अलज्जिष्ट। इति तुदादिषु आत्मनेपदिप्रक्रिया। इति अविकरणास्तुदादयः। इति धातूनामष्टमो गणः। ८।**

विजेः। विजे धातोः पर इट् किद्वक्तव्यः। अनेन गुणनिषेधः। विजिता षत्वम्। विजिष्यते। अविजिष्यत। लुङ्लकारे। ष्टुत्वम्। अविजिष्ट। अविजिषाताम्। अविजिषत। ओलस्जी व्रीडायाम्। द्वावितौ। तुदादेरः। अन्यत्र 'सोजः' अनेन सकारस्य जकारः। लज्जते। चतुर्णां लकाराणां सुग-

मानि। लिट्लकारे द्वित्वादिकम्। ललज्जे। इत्यादीनि। लज्जिषीष्ट। लज्जिता। लज्जिष्यते। अलज्जिष्यत। अलज्जिष्ट। अलज्जिषातां। अलज्जिषत। इत्यादीनि। इत्यात्मनेपदिनः कथिताः। इति अविकरणास्तुदादयो धातवः कथिताः।

## अथ क्र्यादयः।

**तत्रादावुभयपदिनः डुक्रीञ् द्रव्यविनिमये। ना क्र्यादेः। क्र्यादेर्गणान्ना प्रत्ययो भवति चतुर्षु परेषु। अपोऽपवादः। णत्वम्। क्रीणाति।**

अथ क्र्यादयो धातवः कथ्यन्ते। तत्रादावुभयपदिनो धातवः सन्ति। डुक्रीञ् द्रव्यविनिमये। द्रव्यपरावर्त्तने। वस्तूनां मौल्येन ग्रहणे इत्यर्थः। डुकारञकारावनुबन्धौ। डुकारो ड्वितस्त्रिमक् इति कार्यार्थः। ञकारानुबन्धत्वादुभयपदी। तिबादयः प्रत्ययाः। क्री तिप् इति स्थिते सूत्रम्। नाक्र्यादेः। ना। सांके० (प्र० ए०) क्र्यादेः। (पं ए०) क्र्यादेर्गणात् नाप्रत्ययो भवति चतुर्षु तिबादिषु परेषु। अनेन नाप्रत्ययः। णत्वम्। क्रीणाति। 'क्री ना तस्' इति जाते।

## ई हसे।

**नाइत्यस्याकारस्य ईकारो भवति ङिति हसे परे। क्रीणीतः।**

ईहसे। ई। (प्र० ए०) सांकेतिकं हसे। (स० ए०) ना इति प्रत्ययसंबन्धिन आकारस्य ङिति हसे प्रत्यये परे ईकारो भवति। अनेन सर्वत्र ङिति हसे आकारस्य ईकारः कार्यः। पुनर्नोणोऽनन्ते। अनेन णत्वम्। क्रीणीतः। क्री ना अन्ति इति स्थिते।

## नातः।

**नाइत्यस्याकारस्य लोपो भवति ङिति स्वरे परे। क्रीणन्ति। क्रीणासि क्रीणीथः क्रीणीथ। क्रीणामि क्रीणीवः क्रीणीमः।**

क्रीणीते,क्रीणीयात्, क्रीणीत, क्रीणातु, क्रीणीताम्, अक्रीणात्, अक्रीणीत। चिक्राय चिक्रियतुः चिक्रियुः। चिक्रयिथ-चिक्रेथ। चिक्रिये, क्रीयात्, क्रेषीष्ट, क्रेता २, क्रेष्यति, क्रेष्यति, क्रेष्यते, अक्रेष्यत्, अक्रेष्यत, अक्रैषीत्, अक्रेष्ट। प्रीञ् तर्पणे कान्तौ च। पिप्रिये। मीञ् हिंसायाम्। मीनाति। मीनातिमिनोतिदीङां गुणवृद्धिविषये क्वापि च आत्वं वाच्यम्। ममौ मिम्यतुः मिम्युः। ममिथ-ममाथ। मासीष्ट, माता, अमासीत्, अमेष्ट। स्कुञ् आप्रवणे। स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्योश्नुर्नाश्च। स्कुनोति, स्कुनाति, अस्कुनीत्, चुस्कुविषे, अस्कौषीत्, अस्कोष्ट। स्तम्भु स्तुम्भुस्कम्भुस्कुम्भु रोधने। स्तभ्नोति-स्तभ्नाति, स्तुभ्नोति-स्तुभ्नाति, स्कभ्नोति-स्कभ्नाति, स्कुभ्नोति-स्कुभ्नाति, स्तभान-स्तुभान, स्कभान-स्कुभान, अस्तभत्। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च्लेरङ् वा। अस्तम्भीत्। पूञ् पवने।

नातः। ना (ष० ए०) सांके०। आतः (ष० ए०) द्विपदं सूत्रम्। क्र्यादेरुत्पन्नस्य ना इति प्रत्ययसंबन्धिन आकारस्य ङिति स्वरे लोपो भवति। अनेन ङिति स्वरे सर्वत्र आकारस्य लोपः कार्यः। क्रीणन्ति। क्रीणासि। पित्त्वादीकारो न। अन्यानि सूत्रे सन्ति। आत्मनेपदे। क्रीणीते। क्रीणाते। क्रीणते। आतोऽन्तो०। अनेन अन्त अत्। अन्यानि सुगमानि यथासम्भवं साध्यानि। यादादावीकारः सर्वत्र। क्रीणीयात्। क्रीणीयातां। क्रीणीयुः। इत्यादीनि। 'नातः' अनेन आकारस्य लोप ईतादौ भवति। क्रीणीत। क्रीणीयाताम्। क्रीणीरन्। इत्यादीनि। लोट्लकारेऽपि साधनं सदृशम्। क्रीणातु। तातङि ङित्त्वादीकारः। क्रीणीतात्। क्रीणीतां। नातः। अनेनाकारस्य लोपः। क्रीणन्तु। हौ परे। आकारस्येकारः। क्रीणीहि। आनिवादौ सवर्णे। क्रीणानि। क्रीणीव। क्रीणीम। इत्यादीनि। आत्मनेपदे०। क्रीणीतां। क्रीणातां। क्रीणतां षत्वं भवति। क्रीणीष्व। इत्यादीनि। दिवादावट्। अक्रीणात्। अक्रीणीतां। अक्रीणन्। अक्रीणाः। अलिपि सवर्णे दीर्घः।

अक्रीणाम्। आत्मनेपदे। अक्रीणीत। नात:। अक्रीणातां। अक्रीणत। इत्यादीनि रूपाणि ज्ञातव्यानि। सर्वेषां रूपाणां द्वाभ्यां सूत्राभ्यां प्राय: सिद्धिर्भवति। लिट्लकारे। द्वित्वं। सस्वरादि:। ह्रस्व:। कुहोश्चु:। धातोर्नामिन:। अनेन वृद्धि:। चिक्राय। ख्वधातो:। अनेन इय्। चिक्रियतु:। चिक्रियु:। अलत:। गुण:। चिक्रयिथ। चिक्रेथ। चिक्रियथु:। चिक्रिय। इत्यादीनि रूपाणि भवन्ति। चिक्रिये। चिक्रियाते। चिक्रियिरे। क्रीयात्। गुण:। षत्वम्। क्रेषीष्ट अन्यानि सूत्रात् ज्ञेयानि। लुङ्लकारे। अनिटो नामिवत:। षत्वम्। दिबादावट्। अक्रैषीत्। अक्रैष्टाम्। अक्रैषु:। आत्मनेपदे। गुण:। षत्वम्। ष्टुत्वम्। दिबादावट्। अक्रेष्ट। अक्रेषातां। अक्रेषत। इत्यादीनि भवन्ति। प्रीञ् तर्पणे कान्तौ च। तिबादयो भवन्ति। नाक्रयादे:। अनेन चतुर्षु ना प्रत्यय:। णत्वम्। प्रीणाति। ईहसे। प्रीणीत:। नात:। प्रीणन्ति। रूपाणि पूर्ववत्। प्रीणीते। प्रीणीयात्। प्रीणीत। प्रीणीतु। प्रीणाताम्। अप्रीणात्। अप्रीणीत। लिट्लकारे। द्वित्वं। सस्वरादि:। ह्रस्व:। धातोर्नामिन:। पिप्राय। पिप्रियतु:। पिप्रियु:। अलत: पिप्रयिथ। पिप्रेथ। इत्यादीनि। पिप्रिये। पिप्रियाते। पिप्रियिरे। प्रीयात्। गुण:। प्रेषीष्ट। अत्र षत्वं भवति। प्रेता। प्रेता। षत्वम्। प्रेष्यति। प्रेष्यते। अप्रेष्यत्। अप्रेष्यत। अनिटो नामिवत:। अप्रैषीत्। आत्मनेपदे गुण:। अप्रेष्ट। अप्रेषातां। अप्रेषत। इत्यादीनि रूपाणि ज्ञातव्यानि। पूञ् पवने। तिबादय:। नाक्रयादे:।

### प्वादेर्ह्रस्व:।

प्वादीनां ह्रस्वो भवति चतुर्षु परेषु। पुनाति, पुनीते, पुनीयात्, पुनीत, पुनातु, पुनीताम्, अपुनात्, अपुनीत, पुपाव, पुपुवे, पूयात्, पविषीष्ट, पविता २, पविष्यति, पविष्यते, अपविष्यत्, अपविष्यत, अपावीत्, अपविष्ट। कॄञ् हिंसायाम्। कृणाति, कृणीते, चकार, चकरे, कीर्यात्, करिषीष्ट, अकारीत्। धूञ् कम्पने। धुनाति, धुनीते, दुधाव, अधविष्ट-अधोष्ट। ग्रह उपादाने। ग्रहां क्ङिति च।

गृह्णाति गृह्णीतः । गृह्णीते, गृह्णीयातात्, गृह्णीत, गृह्णातु गृह्णीतात् गृह्णीताम् गृह्णन्तु ।

प्वादेर्ह्रस्वः । प्वादेः (ष० ए०) । ह्रस्वः । (प्र० ए०) प्वादीनां धातूनां ह्रस्वो भवति चतुर्षु परेषु । अनेन ह्रस्वः । पुनाति । पुनीते । अन्यानि पूर्वसदृशानि । लिट्लकारे । द्वित्वं । सस्वरादिः । ह्रस्वः । धातोर्नामिनः । पुपाव । नुधातोः । पुपुवतुः । पुपुवुः । पुपविथ । आत्मनेपदे । पुपुवे । पुपुवाते । पुपुविरे । पूयात् । 'सिसता' अनेन इट् । गुणः । षत्वम् । पविषीष्ट । अन्येषां मूलतो ज्ञातव्यानि । लुङ्लकारे । धातोर्नामिनः । अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अपावीत् । अपाविष्टाम् । अपाविषुः । आत्मनेपदे तु गुणः । षत्वम् । ष्टुत्वम् । अपविष्ट । अपविषाताम् । अपविषत । इत्यादीनि भवन्ति । कॄञ् हिंसायाम् । ञकार उभयपदार्थः । तिबादयः प्रत्यया भवन्ति । नाक्र्यादेः । अनेन नाप्रत्ययो भवति । प्वादेर्ह्रस्वः । णत्वम् । कृणाति । ईहसे । कृणीतः । 'नातः' अनेन आकारस्य ङिति स्वरे लोपः । कृणन्ति । आत्मनेपदे । कृणीते । कृणाते । कृणते । कृणीयात् । कृणीत । कृणातु । कृणीताम् । अकृणात् । अकृणीत । लिट्लकारे । द्वित्वादिकम् । रः । कुहोश्चुः । धातोर्नां । चकार । चकरतुः । चकरुः । चकरिथ । चकरे । चकराते । चकरिरे । यादादौ । य्वोर्विहसे । कीर्यात् । सिसता । गुणः । षत्वम् । करिषीष्ट । करिता । करिता । षत्वम् । गुणः । इट् । करिष्यति । करिष्यते । अकरिष्यत् । अकरिष्यत । रूपाणि सुगमानि सन्ति । अतो न लिखितानि । लुङ्लकारे । सेर्णित्वात् । 'धातोर्नां' अनेन वृद्धिः । अकारीत् । अकारिष्टाम् । अकारिषुः । आत्मनेपदे० । गुणः । षत्वम् । ष्टुत्वम् । अकरिष्ट । अकरिषाताम् । अकरिषत । इत्यादीनि भवन्ति । धूञ् कम्पने । ञकारः । तिबादयः । प्वादेर्ह्रस्वः । नाक्र्यादेः । धुनाति । धुनीते । चतुर्णां लकाराणां रूपाणि सुगमानि । तेषां साधनमपि पूर्वसदृशमस्ति । लिट्लकारे । द्वित्वादिकम् । ह्रस्वः । झपानाम् । धातोर्नां । दुधाव । नुधातोः । नानप्योर्वः । अनेनोव् भवति । दुधुवतुः । दुधुवुः । दुधविथ । दुधुवे । दुधुवाते । दुधुविरे । इत्यादीनि । धूयात् । स्वरति० । अनेनास्य धातोरिड्विकल्पः । गुणः । षत्वम् । धविषीष्ट । इड-

भावे। गुणः। षत्वम्। धीषीष्ट। धविता २। धीता २। धविष्यति इडभावे। धीष्यति। धविष्यते। धीष्यते। अधविष्यत्। अधीष्यत्। अधविष्यत। अधीष्यत। लुङ्लकारे। 'स्तुसुधूञ्भ्यां' अनेन सेरिट्। वृद्धिः। अधावीत्। अधाविष्टाम्। अधाविषुः। आत्मनेपदे। अधविष्ट। अधविषाताम्। अधविषत। इडभावे। गुणः। षत्वम्। ष्टुत्वम्। अधोष्ट। अधोषाताम्। अधोषत। ग्रह उपादाने। उपादानं ग्रहणम्। तिबादयः। ना क्र्यादेः। ग्रहां क्ङिति च। अनेन सम्प्रसारणम्। णत्वम्। गृह्णाति। गृह्णीतः। गृह्णन्ति। गृह्णीते। गृह्णीयात्। गृह्णीत। गृह्णातु। गृह्णीतात्। गृह्णीताम्। गृह्णन्तु। 'गृह् हि' इति स्थिते। सूत्रम्।

## हसादान हौ।

**हसान्तात् क्र्यादेर्गणादानः प्रत्ययो भवति हौ परे। नाप्रत्ययाभावः। गृहाण, अगृह्णात्, जग्राह, जगृहे, गृह्यात्। ईटो ग्रहाम्। इति ईः। ग्रहीषीष्ट, ग्रहीता २, ग्रहीष्यति, अग्रहीष्यत्, अग्रहीष्यत, अग्राहीत्, अग्रहीष्ट। इति क्र्यादिषु उभयपदिप्रक्रिया।**

हसादान हौ। हसात्। (पं० ए०) आनः। (प्र० ए०) हौ। (स०ए०) हसान्तात् क्र्यादेर्गणात् आनः प्रत्ययो भवति हिप्रत्यये परे। नाप्रत्ययाभावो भवति। अतः। अनेन हेर्लुक्। सम्प्रसारणम्। गृहाण। अन्यानि सुगमानि। गृह्णीताम्। अगृह्णात्। अगृह्णीत। लिट्लकारे। द्वित्व। सम्प्रसारणम्। रः। कुहोश्चुः। अत उपधायाः। जग्राह। जगृहतुः। जगृहुः। जगृहे। जगृहाते। जगृहिरे। सम्प्रसारणम्। गृह्यात्। ग्रह सीष्ट। इति स्थिते। सिसता। 'ईटो ग्रहां०' अनेन दीर्घः। ग्रहीषीष्ट। ग्रहीता २। ग्रहीष्यति। ग्रहीष्यते अग्रहीष्यत्। अग्रहीष्यत। एतेषां रूपाणि सुगमानि। लुङ्लकारे। अत उपधायाः अनेन वृद्धिः। अन्यत्साधनं सुगमम्। अग्राहीत्। अग्राहिष्टाम्। अग्राहिषुः 'वृद्धिर्हेतौ' अनेन अत्र दीर्घाभावः। आत्मनेपदे। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत। इत्यादीनि। इत्युभयपदिनः।

## अथ परस्मैपदिनः ।

पुष् पुष्टौ । पुष्णाति, पुष्णीयात्, पुष्णातु पुष्णीतात्, पुष्णीताम्, पुष्णन्तु । पुषाण, अपुष्णात्, पुपोष, पुष्यात्, पोषिता, पोषिष्यति, अपोषिष्यत्, अपोषीत् । मुष स्तेये । मुष्णाति, मुमोष, मुष्यात्, मोषिता, मोषिष्यति, अमोषिष्यत्, अमोषीत् । शॄ हिंसायाम् । शृणाति । शशार शशरतुः शशरुः । शीर्यात्, शरिता, शरिष्यति, अशरिष्यत्, अशारीत् । ज्या वयोहानौ । ग्रहादित्वात्संप्रसारणम् । जीनाति, जीनीयात् । जिज्यौ जिज्यतुः जिज्युः । जिज्यिथ-जिज्याथ । जीयात्, ज्याता, ज्यास्यति, अज्यास्यत्, अज्यासीत् । ज्ञा अवबोधने । ज्ञाजनोर्जा । जानाति, जज्ञौ, ज्ञायात्, ज्ञेयात्, ज्ञाता, अज्ञासीत् । ली श्लेषणे । लीनाति । लीलिङोरात्वं वा । ललौ, लिलाय, लिल्यतुः, लाता-लेता, अलासीत्, अलैषीत् । बन्ध् बन्धने । बध्नाति, बबन्ध, भन्त्स्यति, अभान्त्सीत् । मन्थ विलोडने । मथ्नाति । कुष् निष्कर्षे । कुष्णाति, कुषाण, चुकोष, कुष्यात्, कोषिता, अकोषीत् । अश भोजने । अश्नाति, अश्नीयात् । अश्नातु अश्नीतात् अश्नीताम् अश्नन्तु । अशान, आश, अशिता, आशीत् । इति क्र्यादिषु परस्मैपदिप्रक्रिया ।

अथ परस्मैपदिनो धातवः कथ्यन्ते । पुष् पुष्टौ । तिबादयः । ना क्र्यादेः । णत्वम् । अन्यत्र साधनं तु पूर्ववदृश्यम् । पुष्णाति । चतुर्णां रूपाणि सुगमानि हौ परे पुषाण । अन्यानि सुगमानि । लिट्लकारे । द्विः । पूर्वस्य । उपधाया लघोः । पुपोष । पुपुषतुः । पुपुषुः । क्र्यादेर्णादेः । गुणः । पुपोषिथ । पुष्यात् । सिस्तता० । उपधाया लघोः । पोषिता । षत्वम् । पोषिष्यति । दिबादावट् । अपोषिष्यत् । लुङ्लकारे । दाविटौ । सेर्लोपः ।

गुणः। अपोषीत्। अपोषिष्टाम् अपोषिषुः। इत्यादीनि। मुष् स्तेये। तिबादयः। नाक्र्यादिः। णत्वम्। मुष्णाति। मुष्णीयात्। मुष्णातु। हौ परे। मुषाण। अमुष्णात्। रूपाणि सुगमानि। लिट्लकारे। द्वित्वम्। पूर्वस्य। उपधाया लघोः। मुमोष। मुमुषतुः। मुमुषुः। गुणः। मुमोषिथ। मुष्यात्। सिसता०। गुणः। मोषिता। षत्वम्। मोषिष्यति। अमोषिष्यत्। लुङ्लकारे। द्वाविटौ। गुणः। सेर्लोपः। अमोषीत् अमोषिष्टाम् अमोषिषुः। शॄ हिंसायाम्। तिबादयः। नाक्र्यादिः। प्वादेर्ह्रस्वः। णत्वम्। शृणाति। शृणीयात्। शृणातु। अशृणात्। लिट्लकारे। द्वित्वम्। रः। धातोर्नामिनः। शशार। शॄसंयोगात्। अनेनाकित्त्वात् गुणः। शशरतुः। शशरुः। शशरिथ। ॠत इट्। वृॄोर्विहसे। शीर्य्यात्। सिसता०। गुणः। शरिता। षत्वम्। शरिष्यति। अशरिष्यत्। धातोर्नामिनः। अशारीत्। अशारिष्टाम् अशारिषुः। ज्या वयोहानौ। तिबादयः। नाक्र्यादिः। ग्रहां क्ङिति च। अनेन सम्प्रसारणम्। दीर्घस्वरत्वात्। दीर्घः। जीनाति। जीनीतः। जीनन्ति। जीनीयात्। जीनातु। जीनीहि। अजीनात् अजीनीताम्। अजीनन्। लिट्लकारे। द्वित्वम्। णबादौ पूर्वस्य ह्रस्वः। आतो णप् डौ। जिज्यौ। जिज्यतुः। जिज्युः। जिज्यिथ। जिज्याथ। सम्प्रसारणं०। जीयात्। ज्याता। ज्यास्यति। अज्यास्यत्। 'आदन्तानाम्' अनेनेट्सकौ। अज्यासीत्। अज्यासिष्टाम्। अज्यासिषुः। ज्ञा अवबोधने। तिबादयः। पूर्ववत्। नाक्र्यादिः। अनेन चतुर्षु नाप्रत्ययो भवति। ज्ञाजनिज्ञोः। अनेन सूत्रेण जा इत्यादेशः। जानाति। ईर्हसे०। जानीतः। नातः। जानन्ति। इत्यादीनि रूपाणि भवन्ति। तानि पूर्ववद्दृश्यानि। जानीयात्। जानातु। हौ परे सति। 'ई हसे' अनेन ईकारः। जानीहि। अजानात्। लिट्लकारे। द्वित्वम्। पूर्वस्य ह्रस्वः। आतो णप् डौ। डित्वात् टिलोपः। जज्ञौ। आतोऽनपि। जज्ञतुः। जज्ञुः। अत्वतः। आतोऽनपि। अनेन आकारस्य लोपो भवति। जज्ञिथ। जज्ञाथ। संयोगादेः। ज्ञायात्। ज्ञेयात्। ज्ञाता। ज्ञास्यति। दिबादावट्। अज्ञास्यत्। 'आदन्तानां०' अनेन इट्सकौ भवतः। अन्यत्साधनं सुगमम्। अज्ञासीत्। अज्ञासिष्टाम्। अज्ञासिषुः। इत्यादीनि। ली श्लेषणे। तिबादयः। नाक्र्यादिः। लीनाति। लीनीयात्। लीनातु। दिबादावट्। अलीनात्। चतुर्णां रूपाणि सुगमानि। लकाराणां मूलम्।

लीञ्लीङी:। धीञ्लीङीर्धात्वोर्गुणवृद्धिविषये आत्वं वा भवति। षष्ठी। अनेनात्वस्य भवति। आत्वपक्षे। लणौ। आत्वाभावपक्षे। द्वित्वादिकम्। 'धातोर्नामिन:' अनेन वृद्धि:। लिलाय लिल्यतु:। नुधातो:। अनेन यत्वम्। लिल्यु:। अत्वत:। ललिथ। ललाथ। लिलयिथ। लिलेथ। इत्यादीनि। लीयात्। आत्वे कृते। लाता। आत्वाभावे गुण:। लेता। लास्यति। लेष्यति। अलास्यत्। अलेष्यत्। यादन्तानां०। अनेनात्वपक्षे। इट्सकौ। अलासीत्। अलासिष्टाम्। अलासिषु:। आत्वाभावपक्षे। 'अनिटो नामिवत:' अनेन वृद्धि:। अलैषीत्। अलैष्टाम्। अलैषु:। बन्ध बन्धने। तिबादय:। नाक्र्यादे:। नो लोप:। अनेन नकारस्य लोप:। बध्नाति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकम्। बबन्ध। बबन्धतु:। बबन्धु:। बबन्धिथ। अत्वत:। तथोर्ध:। झबे जबा:। नोलोप:। बध्यात्। बबन्ध। इत्यादीनि। बद्धा आदिजबानाम्। अनेन बस्य भ:। खसे चपा। भंत्स्यति। दिवादावट्। अभंत्स्यत्। लुङ्लकारे। 'अत उपधाया:' अनेन वृद्धि:। अनेन वृद्धि:। अभांत्सीत्। प्रत्ययलोपे०। अस्यानित्यत्वान्न भकार:। 'झसात्' अनेन सेर्लोपो भवति। तथोर्ध:। अबान्द्धाम्। अभांत्सु:। इत्यादीनि। मन्थ विलोडने। नाक्र्यादे:। नोलोप:। मथ्नाति। चतुर्णां सुगमानि। लिट्लकारे। ममन्थ। ममन्थतु:। ममन्थु:। ममन्थिथ। अन्येषां लकाराणां भ्वादिगणोक्तमन्थधातुवत् रूपाणि। कुष् निष्कर्षे। नाक्र्यादे:। णत्वम्। कुष्णाति। कुष्णीत:। कुष्णन्ति। इत्यादीनि। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकम्। कुहोश्चु:। उपधाया लघो:। चुकोष। चुकुषतु:। चुकुषु:। चुकोषिथ। कुष्यात्। सिसता०। गुण:। कोषिता। षत्वम्। कोषिष्यति। दिवादावट्। अकोषिष्यत्। लुङ्लकारे। इटविटौ। सेर्लोप:। गुण:। अकोषीत्। अकोषिष्टाम्। अकोषिषु:। अश् भोजने। तिबादय:। नाक्र्यादे:। अश्नाति। चतुर्णां लकाराणां रूपाणि सुगमानि। हौ परे। हसादान हौ। अत:। अशान। लुङ्लकारे। स्वरादे:। अनेन द्वितीयोऽडागम:। सवर्णे। आश्नत्। लिट्लकारे। द्वित्वादिकम्। अत उपधाया:। सवर्णे। आश। आशतु:। आशु:। आशिथ। अश्यात्। सिसता। अशिता। षत्वम्। अशिष्यति। दिवादावट्। स्वरादे:। आशिष्यत् आशीत् आशिष्टाम् आशिषु:। इत्यादीनि। इति परस्मैपदिनो धातव: कथिता:।

## अथात्मनेपदिनः ।

वृङ् संभक्तौ । वृणीते, वृणीत, वृणीताम्, अवृणीत, वव्रे, वरिषीष्ट-वरीषीष्ट । संयोगादिऋदन्तवृङ्वृञां सिस्योरात्मनेपदे इड्वा वाच्यः । वृषीष्ट । उः । अवरिष्ट, अवरीष्ट, अवृत । इति क्र्यादिषु आत्मनेपदिप्रक्रिया । इति नाविकरणाः क्र्यादयः ।

अथात्मनेपदिनः कथ्यन्ते । वृङ् सम्भक्तौ । ङकार आत्मनेपदार्थः । तत्रादयः प्रत्यया भवन्ति । नाक्र्यादेः । ईहसे । णत्वम् । वृणीते । नातः । वृणाते । वृणते । वृणीत । वृणीताम् । अवृणीत । रूपाणि सुगमानि । तेषां कार्य्यमपि सदृशम् । लिट्लकारे । द्वित्व । रः । ऋरम् । वव्रे । वव्राते । वव्रिरे । क्रादित्वान्नेट् । वव्रषे । इत्यादीनि । वृ सीष्ट । इति स्थिते । सिसता । गुणः । वरिषीष्ट । ईटो ग्रहां० । वरीषीष्ट । संयोगादि० अनेन सीष्टादौ वेट् । उः । अनेन गुणनिषेधः । वृषीष्ट । वरिता । वरीता । वरिष्यते । वरीष्यते । अवरिष्यत । अवरीष्यत । लुङ्लकारे । अवरिष्ट । अवरिषाताम् । अवरिषत । दीर्घे कृते । अवरीष्ट । अवरीषाताम् । अवरीषत । इडभावपक्षे । 'लोपो ह्रस्वाज्झसि' अनेन झसि परे सेर्लोपः । अवृत । अवृषाताम् । अवृषत । अवृथाः । इत्यादीनि रूपाणि भवन्ति । इत्यात्मनेपदिनः कथिताः । इति नाविकरणाः क्र्यादयो धातवः ।

## अथ चुरादयः ।

चुर स्तेये । चुरादेः । चुरादेर्गणात् स्वार्थे ञिः प्रत्ययो भवति । उपधाया गुणः । स धातुः । अप्‌गुणायः । चोरयति, चोरयेत्, चोरयतु, अचोरयत्, चोरयाञ्चकार, चोरयाम्बभूव, चोरयामास, चोरयाञ्चक्रे । ञेः । चोर्यात्, चोरयिता, चोरयिष्यति, अचोरयिष्यत् । ञेरङ् द्वित्वं । अङि लघौ ह्रस्व उपधायाः । लघोर्दीर्घः । अचूचुरत् । चिती संज्ञाने । चेतयति, अचीचितत् । चिति स्मृत्याम् । इदितो नुम् ।

चिन्तयति। लघोरभावान्न दीर्घः। अचिचिन्तत्। चुरादेर्णिर्वेति केचित्। चिन्तति। पीड अवगाहने। पीडयति।

अथ चुरादयो धातवः कथ्यन्ते। चुर स्तेये। सूत्रम्। चुरादेः। चुरादेः। (पं० ए०) चुरादेर्धातुगणात् धातुपाठोक्तात् स्वार्थे मूलार्थे एव प्रेरणाद्यर्थं विनैव णिप्रत्ययो भवति। यथा भ्वादीनां शबादिविकरणं तथा चुरादीनां णिविकरणमित्यर्थः। अनेन णिप्रत्ययो भवति। तत्र वृद्धेः प्राप्तौ सूत्राभावे। उपधाया लघोः। अनेन गुणो भवति। चोरि इति स्थिते। स धातुः। अनेन धातुसंज्ञा। धातुत्वात् तिबादयः। अप् कर्तरि। अनेन अप्प्रत्ययः। गुणः। णअप्। स्वरहीनं०। चोरयति चोरयतः चोरयन्ति इत्यादीनि रूपाणि भवन्ति तानि सुगमानि। चोरयेत्। चोरयतु। दिबादावट्। अचोरयत्। लिट्लकारे कासादिप्रत्ययादाम्। अनेन आम्। गुणः। अन्यत् साधनं सुगमम्। चोरयाञ्चकार। चोरयामास। चोरयाम्बभूव। इत्यादीनि रूपाणि भवन्ति। णित्वादुभयपदी। चोरयते। चोरयाञ्चक्रे। चोरियात् इति जाते। णेः। अनेन णेर्लोपः। चोर्यात्। 'सिमता' अनेनेट्। चोरयिता। चोरयिष्यति। दिबादावट्। अचोरयिष्यत्। चुर् णि दिप् इति जाते। णेरङ्दिश्च। अनेन सिविषये अङ्प्रत्ययो भवति च धातोर्द्वित्वम्। पूर्वस्य। चुचुर् णि अङ् दिप् इति जाते। 'णेः' अनेन णेर्लोपो भवति। चुचुर् अङ् दिप् इति जाते। लघो दीर्घः। अनेन पूर्वस्य दीर्घः। दिबादावट्। स्वर०। वावसाने। अचूचुरत्। अचूचुरताम्। अचूचुरन्। इत्यादीनि भवन्ति रूपाणि। अथवा चोर इति सिद्धस्यैव अङ्प्रत्यये कृते। 'णे' अनेन णेर्लोपे कृते। निमित्ताभावे इति वचनात् चोइत्यस्य चुः। ततो द्वित्वम्। एवमपि साधना भवति। अचूचुरच्चन्द्रमसोऽभिरामताम् इति माघः। चिती संज्ञाने। ईकार इत्। चुरादेः। उपधाया लघोः। सधातुः। तिबादयः। अप् कर्तरि। गुणः। णअप्। चेतयति। चेतयेत्। चेतयतु। अचेतयत्। कासादि० अनेन सर्वत्र णन्तादौ। आम्प्रत्ययो भवति। चेतयाञ्चकार। चेतयामास। चेतयांबभूव। 'णेः' अनेन णेर्लोपः। चेत्यात्। सिमता। गुणः। चेतयिता। चेतयिष्यति। अचेतयिष्यत्। लुङ्लकारे। णेरङ् दिश्च। अङि लघौ। ह्रस्वः। लघोर्दीर्घः। दिबादावट्। अचीचितत्। अचीचितताम्। अचीचितन्। इत्या·

दीनि। चिति स्मृत्याम्। चुरादिः। अनेन ञिप्रत्ययो भवति। इदितो नुम्। अन्यत्साधनं पूर्वसदृशं वर्त्तते। चिन्तयति। लिट्लकारे आम्प्रत्ययो भवति। अन्यानि रूपाणि पूर्वधातुवत्। लुङ्लकारे। ञेरङ्द्विश्च। अनेनाङ्प्रत्ययो भवति। लघोरभावात् पूर्वस्य दीर्घो न भवति। दिबादावट्। अचिचिन्तत्। अचिचिन्तताम्। अचिचिन्तन्। इत्यादीनि। चुरादेर्धातुर्गणात् ञिः प्रत्ययो वा भवति। इति केचिदाचार्या वदन्ति। तन्मते। चिन्तति। चिन्ततः। चिन्तन्ति। इत्यादीनि रूपाणि स्युः। पीड अवगाहने। अवगाहनं प्रवेशः। चुरादिः। लघुभावात् 'उपधाया लघोः' अनेन गुणो न भवति। अप। गुणः। पीडयति। लिट्लकारे कासादि०। अनेनाम्। पीडयाञ्चकार। ञेः। पीड्यात्। सिसतां०। गुणः। पीडयिता। लुङ्लकारे। 'ञेरङ्द्विश्च' अनेन अङ्प्रत्ययः। धातोर्द्विर्त्व च। पूर्वस्य। दिबादावट्। ह्रस्वः। अपि-पीड् ञि अङ् दिप् इति जाते। सूत्रम्।

## भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वो ङपरे ञौ।

अपीपिडत्-अपिपीडत्। प्रथ प्रख्याने। प्रथयति।

भ्राज०। भ्राजभासभाषदीपजीवमीलपीडामेतेषां धातूनामुपधाया वा ह्रस्वो भवति। अङ्परे ञौ परे। अनेन वोपधाया ह्रस्वः। ञेः। अनेन ञेर्लोपः। लघोर्दीर्घः। अनेन पूर्वस्य दीर्घः। अपीपिडत्। अपीपिडताम्। अपी-पिडन्। इत्यादीनि। यदोपधाया ह्रस्वो न भवति तदा अपिपीडत्। अपि-पीडताम्। अपिपीडन्। प्रथ प्रख्याने। चुरादिः। प्रथयति। लिट्लकारे आम्प्रत्ययः। प्रथयाञ्चकार। लुङ्लकारे। ञेरङ् द्विश्च। पूर्वस्य। अप्-प्रथ्ञिअङ्दिप् इति जाते 'अङि लघौ' अनेनोपधाया ह्रस्वः। अकारस्येकारे प्राप्ते सूत्रम्।

## स्मृदृत्वरप्रथम्रदस्तृस्पृशां पूर्वस्यातोऽदङ्परे ञौ।

इत्यपवादः। अपप्रथत्। पृथ प्रक्षेपे।

स्मृ०। स्मृदृत्वरप्रथम्रदस्तृस्पृशां धातूनां पूर्वस्य अकारस्य अकार एव भवति।

इत्यपवादः। अनेन पूर्वस्य अकारस्य इकारो न भवति। 'णेः' अनेन णेर्लोपः। अपप्रथत्। अपप्रथताम्। अपप्रथन्। इत्यादीनि। पृथ प्रक्षेपे। चुरादेः। उपधायाश्च लघोः। अन्यत्तु पूर्ववत्। पर्थयति। लुङ्लकारे। णेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः। णेः। अपीपृथ् अङ्दिप्। इति जाते।

## उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः।

इररारामपवादः। अपीपृथत् अपपर्थत्। ज्ञप ज्ञान-ज्ञापनयोर्मित्।

उपधायाः। उपधाया ऋवर्णस्य ऋकारो वा वक्तव्यः। इररारामपवादः। अनेन ऋकारस्य ऋकार एव। अपीपृथत्। अपीपृथताम्। अपीपृथन्। यदा ऋकारो न भवति। तदा णौ परे गुणः। अपपर्थत्। अपपर्थताम्। अपपर्थन्। ज्ञप ज्ञानज्ञापनयोः। चुरादेः। अत उपधायाः। ज्ञाप् णि इति जातेः। सूत्रम्।

## मितां ह्रस्वः।

मितां धातूनां ह्रस्वो भवति णौ परे। ज्ञपयति। चिञ् चयने। मित्।

मितां ह्रस्वः। मितां (ष० ब०) ह्रस्वः (प्र० ए०) मितां धातूनां ह्रस्वो भवति णौ परे। मितो धातवो धातुपाठादवगन्तव्याः। अनेन ह्रस्वः। अन्यत् सुगमम्। ज्ञपयति। लिट्लकारे। आम्प्रत्ययः। ज्ञपयांचकार। लुङ्लकारे। णेरङ् द्विश्च। पूर्वस्य ह्रस्वः। णेः। अङि। अजिज्ञपत्। अजिज्ञपताम् अजिज्ञपन्। चिञ् चयने। अयं धातुर्मित्। चुरादेः। अनेन णिः। सूत्रम्।

## चिस्फुरोर्णावात्वं वा।

चिस्फुरोः। चिस्फुरोर्धात्वोर्णिप्रत्यये परे आत्वं वा भवति। षष्ठी। अनेनायमादेशोऽन्त्यस्य। चा णि इति जाते। सूत्रम्।

## रातो णौ पुक्।

ऋ गतावित्यस्याऽऽकारस्य च पुगागमो भवति णौ परे। चपयति-चययति। अर्च पूजायाम्। अर्चयति।

राती औ पुक्। रात: (ष० ए०) औ। (स० ए०)। पुक् (प्र० ए०) ऋ गतौ इत्यस्य धातोराकारान्तस्य च धातोर्ञिप्रत्यये परे पुगागमो भवति। अनेन पुक्। कित्त्वादन्ते। 'मितां ह्रस्वः' अनेन ह्रस्वः। स धातुः। तिबादयः। अप्कर्त्तरि। गुणः। चपयति। चपयेत्। चपयतु। अचपयत्। लिट्लकारे। कासादिप्रत्ययादाम्। अनेनाम्। अन्यत्साधनं सुगमम्। चपयाञ्चकार। चपयामास। चपयांबभूव। ञेः। चप्यात्। सिसता०। चपयिता। चपयिष्यति। अचपयिष्यत्। लुङ्लकारे। चप् ञि दिप् इति जाते। ञेरङ् द्विश्च। पूर्वस्य। अङि लघौ। लघोर्दीर्घः। अचीचपत्। अचीचपताम्। अचीचपन्। आत्वाभावपक्षे। धातोर्नामिनः। अनेन वृद्धिः। मितां ह्रस्वः। सधातुः। अप्। चपयति। लिट्लकारे। आम्प्रत्ययः। चपयांचकार। ञेः। चप्यात्। लुङ्लकारे। चप्ञिदिप् इति जाते। ञेरङ् द्विश्च। ञेः। अङिलघौ। लघोर्दीर्घः। अचीचयत्। अचीचयताम्। अचीचयन्। अर्च पूजायाम्। चुरादेः। अन्यत्साधनं तु पूर्ववत्। अर्चयति। लिट्लकारे। अर्चयांचकार। आशीर्य्यादादौ। ञेः। अर्च्यात्। लुङ्लकारे। अर्चि दिप् इति जाते। ञेरङ् द्विश्च।

## स्वरादेः परः।

स्वरादेर्धातोः परोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति। 'नदराः संयोगादयो न द्विः' इति रेफस्य न द्वित्वम्। आर्चिचत्। क्षत संशब्दे।

स्वरादेः परः। नदराः। अनेन रकारस्य द्वित्वनिषेधः। ञेः। दिवादावट्। स्वरादेः। आर्चिचत्। आर्चिचताम्। आर्चिचन्। क्षत संशब्दे। चुरादेः। सूत्रम्।

## धातोरुपधाया ऋकारस्य ईकारादेशो वाच्यो ञिप्रत्यये परे।

कीर्तयति, अचिकीर्तत्। गण संख्याने। अकारान्तः। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। गणयति।

धातोः। धातोरुपधाया ऋकारस्य ञिप्रत्यये परे ईरादेशो वाच्यः। 'र्वोर्वि-

हसे' अनेन दीर्घः। कीर्त्तयति। लिट्। कीर्त्तयाञ्चकार। लुङ्। णेरङ्द्वित्व। ह्रस्वः। कुहोश्चुः। दिवादावट्। अचिकीर्त्तत्। अचिकीर्त्तताम्। अचिकीर्त्तन्। गण संख्याने। अयमकारान्तः। चुरादेः। यतः। अनेनाकारस्य लोपः। तत्र। अत उपधायाः। अनेन सूत्रेण वृद्धेः प्राप्तौ सत्यां 'यदादेशस्तद्वद्भवति' इति न्यायेन वृद्धिर्न भवति। उपधायामकाराभावात्। गणयति। चतुर्णां सुगमानि। लिट्। गणयाञ्चकार। लुङ्। णेरङ् द्वित्व। पूर्वस्य। कुहोश्चुः।

## अल्लोपिनो नाङ्कार्यम् ।

अजगणत्। कथगणयोरङ्कार्यं वेति केचित्। अजीगणत्। कथ वाक्यप्रबन्धे। कथयति, अचकथत्, अचीकथत्। जन परिज्ञाणे। जनयति। णिनिमित्तस्वरादेशो द्वित्वे कर्त्तव्ये स्थानिवत्। स्वरादेः परः। अर्थङ् याचने। अर्थयते, आर्तथत। संग्रामङ् युद्धे। अससंग्रामत। अन्ध दृष्ट्युपघाते। आन्दधत्। अङ्क अङ्ग पदे लक्षणे च। आञ्चकत्। इति चुरादिप्रक्रिया।

अल्लोपिनः। अल्लोपिनो धातोरङ्कार्य्यं न भवति। असि लघौ। लघोर्दीर्घः। आभ्यां सूत्राभ्यामुक्तं कार्य्यं न भवति इत्यर्थः। अजगणत्। अजगणताम्। अजगणन्। कथगणयोर्धात्वोरङ्कार्यं वा भवतीति केचिदाचार्या वदन्ति। तन्मते। अजीगणत्। अजीगणताम्। अजीगणन्। कथ वाक्यप्रबन्धे। अयमप्यकारान्तः। चुरादेः। कथयति। कथयाञ्चकार। कथ्यात्। अल्लोपिनः। अनेनाङ्कार्य्यं न भवति। कुहोश्चुः। अचकथत्। अचकथताम्। अचकथन्। वा भवतीत्युक्तत्वात् अङ्कार्यं भवति। साधनं तु पूर्ववत्। अचीकथत्। अचीकथताम्। अचीकथन्। जन परिज्ञाणे। चुरादेः। अकारान्तोऽयम्। जनयति। जनयेत्। जनयतु। स्वरादेः अनेनास्य धातोर्द्वितीयोऽडागमो भवति। आजनयत्। लिट्लकारे। कासादि०। अनेनाम्। जनयाञ्चकार। णेः। जन्यात्। सिसता०। जनयिता। जनयिष्यति। आजनयिष्यत्। लुङ्लकारे। जनयिदिप इति स्थिते। णेरङ् द्वित्व। अनेन

ङप्रत्ययो धातोर्द्वित्वं च भवति। स्वरादेः परः। अनेन नकारस्य द्वित्वम्। जेः। यतः। दिबादावट्। स्वरादेः परः। औननत्। औननताम्। औननन्। इत्यादीनि रूपाणि भवन्ति। अर्थङ् याचने। ङकार आत्मनेपदार्थः। अकारान्तोऽयं धातुः। चुरादेः। अन्यत्साधनं पूर्ववत्। अर्थयते। अर्थयेत। अर्थयताम्। स्वरादेः। अनेन द्वितीयोऽडागमो भवति। आर्थयत। लिट्लकारे। कास्यादि० अनेनाम्। अर्थयाञ्चक्रे। आम्प्रत्ययः। अनेन। अर्थयामास। अर्थयाम्बभूव। इत्यादीनि रूपाणि। सिसता। अर्थयिषीष्ट। लुङ्लकारे। अङ्प्रत्ययः। धातोर्द्वित्वम्। स्वरादेः परः। अनेन थकारस्य द्वित्वं भवति। झपानां० अनेन थकारस्य तकारः। जेः। यतः। स्वरादेः। अनेन द्वितीयोऽडागमः। आर्तथत। आर्तथेताम्। आर्तथन्त। इत्यादीनि। संग्रामङ युद्धे। ङकार आत्मनेपदार्थः। अकारान्तोऽयम्। चुरादेः। यतः। अन्यत्साधनं पूर्ववत्। संग्रामयते। संग्रामयेत। संग्रामयताम्। असंग्रामयत। कास्यादि०। संग्रामयाञ्चक्रे। सिसता०। संग्रामयिषीष्ट। संग्रामयिता। लुङ्लकारे। सस्वरादिः। अनेन सकारस्य द्वित्वम्। अन्यत् असंग्रामत। अससंग्रामत। अससंग्रामेताम्। अससंग्रामत। इत्यादीनि भवन्ति। अन्ध दृष्ट्युपघाते। अकारान्तोऽयम्। चुरादेः। यतः। सधातुः। तिबादयः। अबादयः। अन्धयति। अन्धयेत्। अन्धयतु। स्वरादेः। अनेन द्वितीयोऽडागमो भवति। आन्धयत्। लिट्लकारे आम्प्रत्ययो भवति। अन्धयाञ्चकार। जेः। अन्ध्यात्। सिसता०। अन्धयिता। आन्धयिष्यति। अन्धयिष्यत्। लुङ्लकारे। अङ्प्रत्ययः। धकारस्य द्वित्वम्। झपानाम्। जेः। यतः। स्वरादेः। आन्दधत्। आन्दधताम्। आन्दधन्। इत्यादीनि। अङ्क अङ्ग पदे लक्षणे च। अकारान्तौ। चुरादेः। यतः। अङ्कयति। अङ्गयति। इत्यादीनि रूपाणि सुगमानि। लिट्लकारे आम्प्रत्ययो भवति। अङ्कयाञ्चकार। लुङ्लकारे अङ्प्रत्ययः। स्वरादेः परः अनेन ककारस्य द्वित्वम्। कुहोश्चुः। जेः। यतः। स्वरादेः। आञ्चकत्। आञ्चकताम्। आञ्चकन्। इत्यादीनि। इति चुरादयो धातवः कथिताः।

## अथ आन्ताः।

अथ आन्ता धातवः कथ्यन्ते।

## धातोः प्रेरणे ।

प्रयोजकव्यापारेऽर्थे धातोर्ञिः प्रत्ययो भवति। कुर्वन्तं प्रेरयति यः स प्रयोजकः। कारयति, कारयते, अचीकरत्। पाचयति, अपीपचत्। भवन्तं प्रेरयति भावयति, भावयते, भावयांबभूव। अङ्लयोः। पूर्वस्योकारस्येत्वं पवर्गयवरलाजकारेष्ववर्णपरेषु परतः। द्विर्निमित्तेऽचि। द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये। अबीभवत्। भूङ् मोक्षने। भावयति अबीभवत्। यु मिश्रणे। अयीयवत्। रु शब्दे। अरीरवत्। लूञ् छेदने। अलीलवत्। जु गतौ। अजीजवत्।

धातोः प्रेरणे। धातोः। (ष० ए०) प्रेरणे (स० ए०) द्विपदं सूत्रम्। भ्वादेर्धातोः प्रेरणेऽर्थे कारितेऽर्थे ञिः प्रत्ययो भवति। प्रेरणेऽर्थे इति कोऽर्थः। प्रयोजकव्यापारे। प्रयोजक इति कोऽर्थः। कुर्वन्तं पुरुषं यः कारयति 'एतत्-कार्यं त्वं कुरु' इति प्रवर्त्तयति स प्रयोजक इत्युच्यते। तस्य व्यापारः प्रयोज्य-द्वारेण रूपेण क्रियासम्बन्धस्तस्मिन् ञिः प्रत्ययो भवति। कुर्वन्तं प्रेरयति यः स प्रयोजकः। एकः करोति तं कुर्वन्तम् अन्यः प्रेरयति इत्यस्मिन्नर्थे कृधातोर्ञिः प्रत्ययः। कृञि इति जाते अकारो वृद्ध्यर्थः उभयपदार्थश्च। 'धातोर्नामिनः' अनेन वृद्धिः। स धातुः। अनेनास्मिन् प्रकरणे धातुसंज्ञा सर्वत्र भवति। तिबादयः। अप् कर्त्तरि। गुणः। ए अय्। कारयति। ञित्वादयमुभय-पदी। कारयते। चतुर्णां लकाराणां रूपाणि सुगमानि। लिट्लकारे। कासादिप्रत्ययादाम्। अनेनाम्प्रत्ययो भवति। अन्यत्साधनं सुगमम्। कारया-ञ्चकार। कारयाञ्चक्रे। कारयामास। कारयाम्बभूव। इत्यादीनि। ञेः। कार्य्यात्। सिसतो०। षत्वम्। कारयिषीष्ट। कारयिता २। अन्येषां सुगमानि। लुङ्लकारे। कार् ञि दिप् इति जाते। ञेरङ् विश्व। अले-नाङ्। धातोर्द्वित्वं च। ह्रस्वः। कुहोश्चुः। अङि लघौ। लघोर्दीर्घः। दिवादावट्। अचीकरत्। अचीकरताम्। अचीकरन्। आत्मनेपदे। अची-करत। अचीकरेताम्। अचीकरन्त। इत्यादीनि भवन्ति। अन्ये धातवः

सर्वे उभयपदिनः। ञित्वात्। डुपचष् पाके। पचन्तं प्रेरयति इति विग्रहे। धातोः प्रेरणे। अनेन ञिः प्रत्ययः। अत उपधायाः। स धातुः। तिबादयः। अप् कर्त्तरि। गुणः। ए अप्। पाचयति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। आम्प्रत्ययः पाचयाञ्चकार। ञेः। पाच्यात्। स्निसता०। पाचयिता। धलम्। पाचयिष्यति। दिबादावट्। अपाचयिष्यत्। लुङ्लकारे। ञेरङ् द्विश्च। अन्यत्साधनं सुगमम्। अपीपचत्। अपीपचताम्। अपीपचन्। इत्यादीनि। भू सत्तायाम्। भवन्तं प्रेरयति इति विग्रहे। धातोः प्रेरणे। धातोर्नामिनः। अन्यत्साधनं सुगमम्। भावयति। भावयते। भावयाञ्चकार। भाव्यात्। स्निसता०। भावयिता। लुङ्लकारे। भूभूञिअङ्दिष् इति जाते। धातोर्नामिनः। अनेन वृद्धि। ह्रस्वः। झपानाम्। अङ्सयोः। अङ्सयोः परयोः पूर्वस्य उकारस्य इत्वं भवति। अवर्णपरेषु पवर्गयवरलजकारेषु परतः। अनेन उकारस्य इत्वम्। अङि लघौ। लघोर्दीर्घः। अबीभवत्। अबीभवताम्। अबीभवन्। इत्यादीनि। मूङ् मोहने भवन्तं प्रेरयति। धातोः प्रेरणे। अन्यत्पूर्ववत्। मावयति। लिट्लकारे। कासादि० अनेनाम्। मावयांचकार। ञेः। माव्यात्। स्निसता। मावयिता। लुङ्लकारे। साधनं पूर्वसदृशम्। अमीमवत्। अमीमवताम्। अमीमवन्। इत्यादीनि। यु मिश्रणे। एकः यौति तमन्यः प्रेरयति इति विग्रहे धातोः प्रेरणे। यावयति। लिट्लकारे। कासादि० अनेनाम्। यावयाञ्चकार। ञेः। याव्यात्। यावयिता। लुङ्लकारे। अङ्प्रत्ययः। द्वित्वादिकम्। अङ्सयोः। अनेन इत्वम्। अयीयवत्। अयीयवताम्। अयीयवन्। रु शब्दे। धातोः प्रेरणे। अन्यत्पूर्ववत् ज्ञेयम्। रावयति। लिट्लकारे। रावयाञ्चकार। ञेः। राव्यात्। रावयिता। लुङ्लकारे अङ्प्रत्ययः द्वित्वादिकम्। अन्यत्पूर्ववत् कार्यं भवति। अरीरवत्। अरीरवताम्। अरीरवन्। इत्यादीनि। लुञ् छेदने। धातोः प्रेरणे। एकः लुनाति तमन्यः प्रेरयति। लावयति। लावयेत्। लावयतु। अलावयत्। लावयाञ्चकार। लाव्यात्। स्निसता। लावयिता। लावयिष्यति। अलावयिष्यत्। लुङ्लकारे। अलीलवत्। अलीलवताम्। अलीलवन्। जु गतौ। धातोः प्रेरणे। जावयति। लिट्लकारे। जावयाञ्चकार। जाव्यात्। लिट्लकारे साधनं सुगमम्। अजीजवत्। अजीजवताम्। अजीजवन्। इत्यादीनि रूपाणि भवन्ति। एषां धातूनां लुङ्लकारे।

द्वित्वनिमित्ते स्वरे स्वरादेशो न भवति। तस्मात् पूर्वं द्वित्वं भवति। पश्चाद्वृद्धिः। स्रु स्रवे। एकः स्रवति तमन्यः प्रेरयति। धातोः प्रेरणे। अन्यत् सुगमम्। स्रावयति। लिट्लकारे। आम्प्रत्ययः। स्रावयाञ्चकार। लुङ्लकारे। ञेरङ् द्वित्वं। पूर्वस्य। ञेः अनेन ञेर्लोपो भवति। असुस्रव् अङ् दिप् इति जाते। अञ्लिघौ। सूत्रम्।

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनाम्।

अङ्सयोः पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे। असिस्रवत्, असुस्रवत्, अशिश्रवत्, अशुश्रवत्, अदिद्रवत्, अदुद्रवत्।

स्रवति। स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां धातूनाम् अङ्सयोः परयोः पूर्वस्य इत्वं वा भवति। अवर्णपरे धात्वक्षरे परे। अनेन पूर्वस्य इकारः। असिस्रवत्। असिस्रवताम्। असिस्रवन्। इत्वाभावपक्षे। असुस्रवत्। असुस्रवताम्। असुस्रवन्। श्रु श्रवणे। शृण्वन्तं प्रेरयति। धातोः प्रेरणे। धातोर्नामिनः। श्रावयति। श्रावयेत्। श्रावयतु। अश्रावयत्। लिट्। कासादि०। अनेनाम्। श्रावयाञ्चकार। ञेः। श्राव्यात्। सितता०। श्रावयिता। श्रावयिष्यति। अश्रावयिष्यत्। लुङ्। ञेरङ् द्वित्वं। पूर्वस्य ह्रस्वादिः। धातोर्नामिनः। ञेः। अञ्लिघौ। स्रवतिशृणोति०। अनेन पूर्वस्येत्वम्। अशिश्रवत्। अशिश्रवताम्। अशिश्रवन्। इत्वाभावपक्षे साधनं पूर्वसदृशम्। अशुश्रवत्। अशुश्रवताम्। अशुश्रवन्। द्रु गतौ। धातोः प्रेरणे। द्रावयति। चतुर्णां सुगमानि। लिट्। द्रावयाञ्चकार। लुङ्लकारे। स्रवति० अनेन पूर्वस्य वा इत्वम्। अदिद्रवत्। अदिद्रवताम्। अदिद्रवन्। इत्वाभावपक्षे। अदुद्रवत्। अदुद्रवताम्। अदुद्रवन्। हन् हिंसागत्योः। घ्नन्तं प्रेरयति इति विग्रहे। धातोः प्रेरणे। हन् ञि इति जाते। सूत्रम्।

## हनो घत्।

हन्तेर्घदादेशो भवति ञ्णति णप्वर्जिते परतः। घातयति, अजीघतत्। शद्लृ शातने।

हनो घत्। हनः (ष० ए०)। घत् (प्र० ए०)। द्विपदम्। हन्ते-

र्धातोर्घदादेशो भवति। णप् वर्जिते ञ्णिति प्रत्यये परतः। अनेन घदादेशः। अत उपधायाः। स धातुः। घातयति। घातयेत्। घातयतु। अघातयत्। लिट्। कासादि०। घातयाञ्चकार। जेः। घात्यात्। सिसता०। घातयिता घातयिष्यति। अघातयिष्यत् लुङ्लकारे। घात् जि दिप् इति स्थिते। जेरङ् द्विश्च। कुहोश्चुः। झपानाम्। अङि लघौ। लघोर्दीर्घः। द्विवाद्भावट्। अजीघतत्। अजीघतताम्। अजीघतन्। इत्यादीनि। शद्लृ शातने। शदन्तं प्रेरयति इति विग्रहे। धातोः प्रेरणे।

## शदेः शत्।

**शदेः शतादेशो भवति अगतौ ञौ परे। शातयति। गतौ तु शादयति अशीशतत्। आतो ञौ पुक् च। डुदाञ् दाने। दापयति, अदीदपत्, धापयति, अदीधपत्।**

शदेः शत्। शदेः (ष० ए०)। शत् (प्र० ए०)। शदेर्धातोः शतादेशो भवति। अगतौ ञौ परे। अत उपधायाः। शातयति। लिट्। शातयाञ्चकार। लुङि साधनं तु पूर्ववत्। अशीशतत् अशीशतताम्। अशीशतन्। गतौ तु। शादयति। अशीशदत्। डुदाञ् दाने। ददतं प्रेरयति इति विग्रहे। धातोः प्रेरणे। रातो ञौ पुक् च। अनेन पुगागमः। दापयति। लिट्। दापयाञ्चकार। लुङ्लकारे। जेरङ् द्विश्च। ह्रस्वः। अङि लघौ। लघोर्दीर्घः। अदीदपत्। डुधाञ्। धारणपोषणयोः। दधतं प्रेरयति। इति विग्रहे धातोः प्रेरणे। रातो ञौ पुक् च। धापयति। धापयाञ्चकार। लुङ्।- झपानां० अनेन दस्य धः। अन्यत्पूर्ववत्। अदीधपत्। अदीधपताम्। अदीधपन्। ऋ गतौ। ऋच्छन्तं प्रेरयति इति विग्रहे। धातोः प्रेरणे। रातो ञौ पुक् च। ऋप् जि इति जाते सूत्रम्।

## पुगन्तस्य गुणो वक्तव्यः।

**अर्पयति। स्वरादेः परः। आर्पिपत्। ष्ठा गतिनिवृत्तौ। स्थापयति।**

पुगन्तस्य०। पुगन्तस्य धातोर्गुणो वक्तव्यः। अनेन गुणः। अर्पयति। लिट् अर्पयाञ्चकार। जेः। अर्प्यात्। सिसता०। अर्पयिता। लुङ्लकारे।

अर्पि दिप् इति स्थिते । णेरङ् डिश्च । ख्वरादेः । नदराः अनेन दकारस्य द्वित्वं न भवति । णेः । दिवादावट् । खरादेः । सवर्णे० । आर्पिपत् । आर्पिपताम् । आर्पिपन् । ष्ठा गतिनिवृत्तौ । आदेः ष्णः स्नः । धातोः प्रेरणे । तिष्ठन्तं प्रेरयति इति विग्रहे । ञिः प्रत्ययः । रातौ ञौ पुक् च । स्थापयति । स्थापयाञ्चकार । णेः । स्थाप्यात् । सिमता० । स्थापयिता । स्थापयिष्यति । अस्थापयिष्यत् । लुङ्लकारे । स्थाप् । ञि दिप् इति स्थिते । णेरङ् डिश्च । णेः । सूत्रम् ।

## तिष्ठतेरुपधाया इकारो वक्तव्योऽङि परे ।

### ततो द्वित्वम् । अतिष्ठिपत् ।

तिष्ठतेः । तिष्ठतेर्धातोरुपधाया इकारो वक्तव्यः अङि परे । ततः द्वित्वं भवति तस्मात् खपाः । अतिष्ठिपत् । अतिष्ठिपताम् । अतिष्ठिपन् । अतिष्ठिपः । अतिष्ठिपतम् । अतिष्ठिपत । इत्यादीनि । पा पाने । पिबन्तं प्रेरयति इति विग्रहे धातोः प्रेरणे अनेन ञिप्रत्ययः । पा ञि इति जाते सूत्रम् ।

## पादेर्युक् ।

### पाशाच्छासाह्वेञ्वेञां युगागमो भवति ञौ परे । पाययति ।

पादेर्युक् । पादेः ( प० ए० ) । युक् ( प्र० ए० ) । पाशाच्छासाह्वेञ्वेञामितेषां धातूनां युगागमो भवति ञिप्रत्यये परे । पुकोऽपवादः । पाय् ञि इति जाते । स धातुः । अन्यत्साधनं पूर्ववत् । पाययति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । कासादि० । पाययांचकार । णेः । पाय्यात् । सिमता० । पाययिता । पाययिष्यति । अपाययिष्यत् । अपापाय् ञि अङ् दिप् । णेः अनेन णेर्लोपो भवति । सूत्रम् ।

## पिबतेरङि पूर्वस्येकारोपधालोपौ वक्तव्यौ ।

### अपीप्यत् । शोतनूकरणे । संध्यक्षराणामा । शाययति, अशीशयत् । छो छेदने । अचीच्छयत् । षोऽन्तकर्मणि । साययति, असीषयत् । ह्वेञ् स्पर्धायाम् ।

पिबतेः। पिबतेर्धातोरङि पूर्वस्य ईकारोपधालोपौ वक्तव्यौ। सुगममिदं सूत्रम्। अनेन पूर्वस्य ईकारो भवति। उपधालोपश्च। अपीप्यत्। अपीप्यताम् अपीप्यन्। इत्यादीनि। शो तनूकरणे। सन्ध्यक्षराणामा। श्यन्तं प्रेरयति। पादेर्युक्। अन्यत्साधनं सुगमम्। शाययति। लिट् लकारे। शाययाञ्चकार। ञेः। शाय्यात्। सिसता०। शाययिता। शाययिष्यति। अशाययिष्यत्। शाय् ञि दिप् इति जाते। ञेरङ् द्विश्च। अङिलघौ। लघोर्दीर्घः। दिवादावट्। अशीशयत् अशीशयताम्। अशीशयन्। छो छेदने सन्ध्यक्षराणामा। एकः स्यति तमन्यः प्रेरयति। धातोः प्रेरणे। पादेर्युक्। अनेन युगागमो भवति। छाययति। छाययाञ्चकार। ञेः। छाय्यात्। सिसता०। छाययिता। छाययिष्यति। अच्छाययिष्यति। अच्छाययिष्यत्। लुङ्लकारे। झपानां० अनेन छकारस्य चकारः। अन्यत्साधनं सुगमम्। अचीछयत्। अचीछयताम्। अचीछयन्। षो अन्तकर्मणि। आदेः ष्णः स्नः। सन्ध्यक्षराणामा। एकः स्यति तमन्यः प्रेरयति। धातोः प्रेरणे। पादेर्युक्। साययति। साययाञ्चकार। ञेः। साय्यात्। सिसता०। साययिता। साययिष्यति। असाययिष्यत्। लुङ्लकारेऽपि पूर्ववत् साधनम्। असीषयत्। असीषयताम्। असीषयन्। इत्यादीनि। ह्वेञ् स्पर्धायाम्। एको ह्वयति तमन्यः प्रेरयति। सन्ध्यच०। धातोः प्रेरणे। पादेर्युक्। ह्वाययति। ह्वाययाञ्चकार। लुङ्लकारे। सूत्रम्।

## ह्वयतेरङि संप्रसारणं युगभावश्च वक्तव्यः।

**कृतसंप्रसारणस्य ह्वयतेरङि क्रमाद्गुणवृद्धी वाच्ये। अजुहावत्, अजुहवत्, अजुहवताम्। व्येञ् संवरणे। व्याययति, अवीव्ययत्। वेञ् तन्तुसन्ताने। वाययति, अवीवयत्।**

ह्वयतेः। ह्वयतेः (ष० ए०) ह्वयतेर्धातोरङि परे सति सम्प्रसारणं युगभावश्च वक्तव्यः। कृतसम्प्रसारणस्य ह्वयतेर्धातोरङि क्रमात् गुणवृद्धी वाच्ये। कुहोश्चुः अनेन हस्य जः। अजुहावत्। अजुहावताम्। अजुहावन्। गुणे कृते सति। अजुहवत्। अजुहवताम् अजुहवन्। व्येञ् संवरणे। सन्ध्यक्षराणामा०। पादेर्युक्। एको व्ययति तमन्यः प्रेरयति। व्याययति। व्याययाञ्चकार। लुङ्लकारे। व्याय् ञि दिप् इति जाते। ञेरङ् द्विश्च। ञेः। पूर्वस्य। अङि

लधौ । अवीव्ययत् । अवीव्ययताम् । अवीव्ययन् । वेञ् तन्तुसन्ताने । एको वयति । तमन्यः प्रेरयति । धातोः प्रेरणे सम्यच० । पादेर्युक् । वाययति । लिट्लकारे । कासादि० । अनेनाम्प्रत्ययो भवति । वाययाञ्चकार । ञेः वाय्यात् । सिसता० । वाययिता । वाययिष्यति । अवाययिष्यत् । लुङ्लकारे । पूर्वोक्तैरेव सूत्रैः रूपाणां सिद्धिः । अवीवयत् । अवीवयताम् । अवीवयन् । पा रक्षणे । धातोः प्रेरणे । सूत्रम् ।

## पातेर्ञौ लुग्वक्तव्यः ।

**युकोऽपवादः । पालयति अपीपलत् । रभ राभस्ये । रभसो वेगहर्षयोः ।**

पातेः । पातेर्धातोर्ञिप्रत्यये परे लुगागमो वक्तव्यः । युकोऽपवादः । पालयति । लिट् । पालयांचकार । लुङ् । अपीपलत् । अपीपलताम् । अपीपलन् । रभ राभस्ये । सूत्रम् ।

## रभलभोः स्वरे णाद्यपौ विना नुम् वाच्यः ।

**रम्भयति अररम्भत् । डुलभष् प्राप्तौ । लम्भयति, अललम्भत् ।**

रभलभोः । वेगहर्षयोः रभलभोर्णाद्यपौ विना स्वरे परे नुम् वाच्यः । नश्चापदान्ते । धातोः प्रेरणे । रम्भयति । लिट्लकारे रम्भयाञ्चकार । ञेः । रम्भ्यात् । सिसता० । रम्भयिता । लुङ्लकारे । ञेरङ् द्विश्च । अनेनाङ्प्रत्ययः । धातोर्द्विलम् । चङ्कार्यं न स्यात् । अररम्भत् अररम्भताम् । अररम्भन् । इत्यादीनि । डुलभष् प्राप्तौ । डुकारषकारावितौ । धातोः प्रेरणे । रभलभोः । अनेन नुम् । अन्यत्साधनं पूर्ववत् । लम्भयति । लिट्लकारे । लम्भयाञ्चकार । सिसता । लम्भयिता । लुङ्लकारे । अललम्भत् । अललम्भताम् । अललम्भन् । प्रीङ् तर्पणे । धातोः प्रेरणे । एकः प्रीणाति । तमन्यः प्रेरयति । सूत्रम् ।

## प्रीङ्धूञोर्नुक् ।

अनयोर्नुगागमो भवति ञौ परे । प्रीञ् तर्पणे । प्रीणयति,

अपीप्रिणत्। धूङ् कम्पने धूनयति, अदूधुनत्। स्मिङ् ईषद्धसने।

प्रीङ्धूङोर्नुक्। प्रीङ् च धूङ् च प्रीङ्धूङौ तयोः। प्रीङ्धूङोः (ष० द्वि०) नुक् (प्र० ए०) अनयोः प्रीङ्धूङोर्धात्वोर्नुगागमो भवति ञिप्रत्यये परे। णत्वं भवति। प्रीणयांचकार। लुङ्लकारे। ञेरङ् द्विश्च। पूर्वस्य ह्रस्वः। अङि लघौ। अनेनोपधाया ह्रस्वः। अपीप्रिणत्। अपीप्रिणताम्। अपीप्रिणन्। धूङ् कम्पने। धातोः प्रेरणे। प्रीङ्धूङोर्नुक्। धूनयति। धूनयाञ्चकार। धून्यात्। धूनयिता। लुङ्लकारे। ञेरङ्। अङि लघौ। लघोर्दीर्घः। झपानाम्। अदूधुनत्। अदूधुनताम्। अदूधुनन्। स्मिङ् ईषद्धसने। एकः स्मयति तमन्यः प्रेरयति। धातोः प्रेरणे। सूत्रम्।

## स्मयतेरात्वं ञौ वाच्यम्।

विस्मापयते, असिष्मपत। आत्वे किम्। विस्मापयति, असिष्मपत्।

स्मयतेः। स्मयतेर्धातोरात्वं वा भवति ञिप्रत्यये परे। अनेनात्वं वा। स्मापयति। अत्र रातो ञौपुक्। अनेन पुक्। स्मापयाञ्चकार। लुङ्लकारे। पूर्वस्येकारः। षत्वम्। असिष्मपत्। असिस्मपताम्। असिष्मपन्। आत्वाभावपक्षे। वृद्धिः। ऐआय्। विस्माययति। विस्माययाञ्चकार। लुङ्लकारे। असिष्मयत्। असिष्मयताम्। असिष्मयन्। साधनं सुगमम्। रुह बीजजन्मनि प्रादुर्भावे च। धातोः प्रेरणे। सूत्रम्।

## रुहेर्ञौ पो वा वाच्यः।

रुह बीजजन्मनि प्रादुर्भावे च। रोहयति। रोपयति। अरूरुहत्-अरूरुपत्। कृपू सामर्थ्ये। कृपो रो लः। कल्पयति।

रुहेः। रुहेर्धातोर्ञिप्रत्यये परे पो वा वाच्यः। षष्ठी। अनेनान्त्यस्यैव। उपधाया अनेन गुणः। रोपयति। रोपयाञ्चकार। लुङ्लकारे। अङ्कार्ये

भवति। अरूरुपत्। अरूरुपताम्। अरूरुपन्। पत्वाभावपक्षे। रोहयति। रोहयाञ्चकार। अङ्कार्य्यं सर्वं भवति। अरूरुहत्। अरूरुहताम्। अरूरुहन्। क्लृपू सामर्थ्ये। धातोः प्रेरणे। गुणो भवति। क्लृपोरोलः। अनेन रकारस्य लः। कल्पयति। कल्पयाञ्चकार। ङेः। कल्प्यात्। सिसता। कल्पयिता।

## उपधाया ऋवर्णस्याङि ऋट वा वक्तव्यः।

इररारामपवादः। अचीक्लृपत् अचकल्पत्। वृतुङ् वर्तने। वर्तयति, अवीवृतत्, अववर्तत्। मृजूष् शुद्धौ। मार्जयति, अमीमृजत्, अममार्जत्।

उपधाया ऋवर्णस्य। अचीक्लृपत्। विकल्पेन। अचकल्पत्। अवाङ्कार्य्यं न भवति। अचकल्पताम्। अचकल्पन्। वृतुङ् वर्त्तने। धातोः प्रेरणे। उपधाया लघोः। वर्तयति। वर्त्तयाञ्चकार। उपधाया ऋवर्णस्य। अनेन वा ऋकारस्य ऋकारः। यदा ऋकारस्तदा अङ्कार्य्यं भवति। अवीवृतत्। अवीवृतताम्। अवीवृतन्। ऋकाराभावपक्षे। अङ्कार्य्यं न भवति। सूत्रप्राप्त्यभावात्। अववर्त्तत्। अववर्त्तताम्। अववर्त्तन्। मृजूष्। शुद्धौ। धातोः प्रेरणे। मृजेः। अनेन वृद्धिः। मार्जयति। लिट्लकारे कासादि०। अनेनाम्। मार्जयाञ्चकार। अन्येषां सुगमानि। लुङ्लकारे। उपधायाः। अन्यत्साधनं सुगमम्। अमीमृजत्। अमीमृजताम्। अमीमृजन्। मृजेः अनेन वृद्धिः। अममार्जत्। अममार्जताम्। अममार्जन्। इङ् अध्ययने। धातोः प्रेरणे। सूत्रम्।

## इङादेर्ञौ पुक् च।

इङ्क्रीजीनामात्वं भवति ञौ परे। क्रोवल्लोरीक्नूयोक्ष्मायीनां पुगागमो भवति ञौ परे। इङ् अध्ययने। अध्यापयति, अध्यापिपत्।

इङादेर्ञौ पुक् च। इङादेः (प० ए०)। ञौ (स० ए०)। पुक् (प्र०ए०) च (प्र० ए०) इङ्क्रीजीनां धातूनां ञिप्रत्यये परे आत्वं भवति। पुक् च भवति

क्नौव्लीरीक्नूयीक्ष्मायीनां धातूनां ञिप्रत्यये पुगागमो भवति। एकोऽधीते। तमन्यः प्रेरयति। इयंस्वरे। अध्यापयति। अध्यापयाञ्चकार। लुङ्लकारे। अङ्लिघौ। अनेन पूर्वस्येकारः। अध्यापिपत्। अध्यापिपताम्। अध्यापिपन्। सूत्रम्।

## अङ्परे ञौ इङो गाङ् वा वक्तव्यः।

**अध्यजीगपत्। डुक्रीञ् द्रव्यविनिमये। क्रापयति अचिक्रपत्। जि जये। जापयति, अजीजपत्। ह्री लज्जायाम्। ह्रेपयति, अजिह्रिपत्। व्ली वरणे। व्लेपयति अविव्लिपत्। रीङ् स्रवणे। रेपयति, अरीरिपत्। क्नूयी दुर्गन्धे।**

अङ्परे। अङ्परे ञिप्रत्यये परे इङो धातोर्गाङ् वा वाच्यः। अनेन गा इत्यादेशः। पुगागमः। ततो द्विलम्। कुहोश्चुः। अङि लघौ। लघोर्दीर्घः। अध्यजीगपत्। अध्यजीगपताम्। अध्यजीगपन्। डुक्रीञ् द्रव्यविनिमये। एकः क्रीणाति। तमन्यः प्रेरयति। धातोः प्रेरणे। इङादेर्ञौ पुक्। अनेनात्वपुकौ। क्रापयति। लिट्। आम्प्रत्ययः। क्रापयाञ्चकार। ञेः। क्राप्यात्। सिसता०। क्रापयिता। क्रापयिष्यति। अक्रापयिष्यत्। लुङ्लकारे। ञेरङ्द्विश्च। अङि लघौ। अचिक्रपत्। अचिक्रपताम्। अचिक्रपन्। जि जये। एको जयति तमन्यः प्रेरयति। धातोः प्रेरणे। आत्वपुकौ। जापयति। लिट्लकारे। जापयाञ्चकार। ञेः। जाप्यात्। सिसता०। जापयिता। जापयिष्यति। अजापयिष्यत्। लुङ्लकारे। ञेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः। अजीजपत्। अजीजपताम्। अजीजपन्। ह्री लज्जायाम्। एको जिह्रेति तमन्यः प्रेरयति। धातोः प्रेरणे। पुग् भवति। गुणः। ह्रेपयति। ह्रेपयाञ्चकार। लुङ्लकारे। ञेरङ् द्विश्च। अङि लघौ। कुहोश्चुः। अजिह्रिपत्। अजिह्रिपताम्। अजिह्रिपन्। व्ली वरणे। धातोः प्रेरणे। पुक्। गुणः। अन्यत्सर्वं पूर्ववत्। व्लेपयति। व्लेपयाञ्चकार। ञेः व्लेप्यात्। सिसता०। व्लेपयिता। व्लेपयिष्यति। अव्लेपयिष्यत्। लुङ्लकारे। ञेरङ्द्विश्च। अङिलघौ।

अबिब्लिपत्। अबिब्लिपताम्। अबिब्लिपन्। रीङ् चरणे। धातोः प्रेरणे। पुक्। गुणः। रेपयति। रेपयाञ्चकार। ञेः। रेप्यात्। रेपयिता। लुङ्लकारे। पूर्ववत् साधना। अरीरिपत्। अरीरिपताम्। अरीरिपन्। क्नूयी दुर्गन्धे। ईकार इत्। धातोः प्रेरणे। ञौ परे पुगागमः।

## यवयोर्वसि हकारे च लोपो वक्तव्यः।

**क्नोपयति, अचुक्नुपत्। क्ष्मायी विधूनने। एकः क्ष्मायति तमन्यः प्रेरयति क्ष्मापयति, अचिक्ष्मपत्। लीङ् श्लेषणे।**

यवयोः। अनेन यकारस्य लोपः। गुणः। क्नोपयति। क्नोपयाञ्चकार। ञेः क्नोप्यात्। सिसता०। क्नोपयिता। अक्नोपयिष्यत्। क्नोपयिष्यति। लुङ्लकारे। ञेरङ्द्वित्व। अङि लघौ। कुहोश्चुः। अचुक्नुपत्। अचुक्नुपताम्। अचुक्नुपन्। क्ष्मायी विधूनने। धातोः प्रेरणे। पुगागमः। यवयोः। अनेन यकारस्य लोपः। क्ष्मापयति। क्ष्मापयाञ्चकार। क्ष्माप्यात्। सिसता०। क्ष्मापयिता। क्ष्मापयिष्यति। अक्ष्मापयिष्यत्। लुङ्लकारे। ञेरङ्द्वित्व। पूर्वस्य। अङि लघौ। कुहोश्चुः। अचिक्ष्मपत्। अचिक्ष्मपताम्। अचिक्ष्मपन्। लीङ् श्लेषणे। एको लिनाति। धातोः प्रेरणे। सूत्रम्।

## लीयतेर्ञावात्वं वा।

**विलापयति।**

लीयतेः। लीयतेर्धातोर्ञौ परे आत्वं वा भवति। रातौ ञौ पुक् च। विपूर्वोऽयम्। विलापयति। विलापयाञ्चकार। विलाप्यात्। सिसता०। विलापयिता। लुङ्लकारे। व्यलीलिपत्। व्यलीलिपताम्। व्यलीलिपन्। सूत्रम्।

## लीलोः पुग् वक्तव्यः।

**विलेपयति, व्यलीलिपत्, व्यलीलपत्।**

लीलोः। ली ला एतयोर्धात्वोः पुग् वक्तव्यः। तदा विलेपयति। विलेपयाञ्चकार। लुङ्लकारे। ञेरङ्द्वित्व। अङ्लिघौ। लघोर्दीर्घः। व्यलीलिपत्। व्यलीलिपताम्। व्यलीलिपन्। सूत्रम्।

## लीलोञ्नौ क्रमान्नुग्लुकौ वा ।

विलीनयति, व्यलीलिनत् । ला ग्रहणे । लापयति, अलीलपत् । लालयति, अलीललत् अलीललताम् ।

लीलो: । ली ला एतयोर्धात्वो: क्रमात् नुग्लुकौ वा भवत: । तदा विलीनयति । विलीनयाञ्चकार । विलीन्यात् । सिसता० । विलीनयिता । विलीनयिष्यति । लुङ्लकारे । पूर्वसूत्रैरेतद्रूपाणां सिद्धि: । व्यलीलिनत् । व्यलीलिनताम् । व्यलीलिनन् । ला ग्रहणे । एको लाति तमन्य: प्रेरयति । धातो: प्रेरणे । पुक् । लापयति । लापयाञ्चकार । लाप्यात् । लापयिता । लापयिष्यति । अलापयिष्यत् । लुङ्लकारे । अलीलपत् । अलीलपताम् । अलीलपन् । लुगागमे कृते सति । लालयति । लालयाञ्चकार । लाप्यात् । सिसता० । लापयिष्यति । लुङ्लकारे । ञेरङ् द्वित्वं । अङि लघौ । लघोर्दीर्घ: । अलीललत् । अलीललताम् । अलीललन् । ढौकृ गतौ । ऋकार इत् । एको ढौकति तमन्य: प्रेरयति । धातो: प्रेरणे । ढौकयति । चतुर्णां सुगमानि । ढौकयाञ्चकार । ञे: । ढौक्यात् । सिसता० । ढौकयिता । ढौकयिष्यति । अढौकयिष्यत् । लुङ्लकारे । ञेरङ् द्वित्वं । सूत्रम् ।

## न रित: ।

ऋकारेतोऽनेकस्वरस्य शासश्चाङि उक्तं कार्यं न भवति । ढौकृ गतौ । ढौकयति, अडुढौकत् । टुयाचृ याञ्चायाम् । याचयति अययाचत् । शासु अनुशिष्टौ । शासयति, अशशासत् । दरिद्रा दुर्गतौ । दरिद्रयति, अददरिद्रत् अददरिद्रताम् । दुष वैकृत्ये ।

न रित: । न (प्र० ए०) ऋ इत् यस्यासौ रित् तस्य रित: (ष० ए०) ऋकारानुबन्धस्य अनेकस्वरस्य च शासो धातोरङि प्रत्यये परे । अङि लघौ । लघोर्दीर्घ: । इति द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । ह्रस्व: । कपानाम् । अडढौकत् । अडुढौकताम् । अडुढौकन् । इत्यादीनि । टुयाचृ याञ्चायाम् ।

ऋकार इत्। धातोः प्रेरणे। याचयति। याचयाञ्चकार। ञेः। याच्यात्। सिसता०। याचयिता। याचयिष्यति। अयाचयिष्यत्। लुङ्लकारे। न रितः। अन्यत्सुगमं साधनम्। पूर्ववत्। अययाचत्। अययाचताम्। अययाचन्। शासु अनुशिष्टौ। एकः शास्ति तमन्यः प्रेरयति। धातोः प्रेरणे। शासयति। शासयाञ्चकार। शासयिता। लुङ्। न रितः। अशशासत्। अशशासताम्। अशशासन्। दरिद्रा दुर्गतौ। एको दरिद्राति तमन्यः प्रेरयति। धातोः प्रेरणे। णप् वुण्। अनेन आकारस्य लोपः। दरिद्रयति। लिट्लकारे। कासादि०। दरिद्रयाञ्चकार। ञेः। दरिद्रियात्। सिसता०। दरिद्रयिता। दरिद्रयिष्यति। अदरिद्रयिष्यत्। लुङ्लकारे। न रितः। सखरादिः। अददरिद्रत्। अददरिद्रताम्। अददरिद्रन्। दुष वैकृत्ये। धातोः प्रेरणे।

## दुषेर्ञौ वा दीर्घो वक्तव्यः।

दूषयति, दोषयति, अदूदुषत्। घट चेष्टायाम्। मितां ह्रस्वः। धातुपाठे मित इत्येवं पठितानां धातूनां ह्रस्वो भवति ञौ परे। घटयति, अजीघटत्। व्यथ दुःखभयचलनयोः। व्यथयति, अवीव्यथत्। एवं पञ्चपञ्चाशतो रूपम्।

दुषेः। दुषेर्धातोर्ञिप्रत्यये परे वा दीर्घो भवति। अनेन पूर्वस्य वा दीर्घः। दूषयति। दूषयाञ्चकार। लुङ्लकारे। ञेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः। अदूदुषत्। अदूदुषताम्। अदूदुषन्। दीर्घाभावपक्षे। दोषयति। दोषयाञ्चकार। ञेः। दोष्यात्। सिसता०। दोषयिता। दोषयिष्यति। अदोषयिष्यत्। लुङ्लकारे। पूर्वसूत्रैरेव सिद्धिः। अदूदुषत्। अदूदुषताम्। अदूदुषन्। घट चेष्टायाम्। धातोः प्रेरणे। अत उपधायाः। मितां ह्रस्वः। अनेन ह्रस्वः। घटयति। लिट्लकारे कासादि०। अनेनाम्। घटयाञ्चकार। ञेः। घट्यात्। सिसता०। घटयिता। घटयिष्यति। अघटयिष्यत्। लुङ्लकारे। ञेरङ्द्विश्च। अङिलघौ। लघोर्दीर्घः। झपानाम्। अजीघटत्। अजीघटताम्। अजीघटन्। व्यथ दुःखभयसञ्चलनयोः। एको व्यथति तमन्यः प्रेरयति। धातोः प्रेरणे। अत उपधायाः। मितां ह्रस्वः। अनेन ह्रस्वो भवति। अन्यत् सुगमम्। व्यथयति। लिट्लकारे। आम्प्रत्ययो भवति। व्यथयाञ्चकार। ञेः। व्यथ्यात्। सिसता०। व्यथयिता। व्यथयिष्यति। अव्यथयिष्यत्। लुङ्लकारे। ञेरङ् द्विश्च। पूर्वस्य। अङि लघौ। अवीव्यथत्। अवीव्यथताम्। अवीव्यथन्।

जनीजॄष्क्नसुरञ्जोऽमन्ताश्च। एतेऽपि मितः। जनयति, अजीजनत्। जॄष् वयोहानौ। षइत्। जरयति, अजीजरत्। क्नसु ह्वरणदीप्त्योः। क्नसयति, अचिक्नसत्। रञ्ज रागे।

जनी प्रादुर्भावे। एको जायते तं०। धातोः प्रेरणे। वृद्धिः। मितां ह्रस्वः। जनयति। लिट्लकारे। कासादि०। जनयाञ्चकार। ञेः। जन्यात्। सिसता०। जनयिता। जनयिष्यति। अजनयिष्यत्। लुङ्लकारे। ञेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः। अजीजनत्। अजीजनताम्। अजीजनन्। इत्यादीनि। जॄष् वयोहानौ। षइत्। धातोः प्रेरणे। एको जॄणाति तं०। धातोर्नामिनः। अनेन वृद्धिः। मितां ह्रस्वः। अन्यत् सुगमम्। जरयति। जरयाञ्चकार। ञेः। जर्यात्। सिसता०। जरयिता। जरयिष्यति। अजरयिष्यत्। लुङ्लकारे। त्रिसूत्रैः कार्य्यसिद्धिः। अजीजरत्। अजीजरताम्। अजीजरन्। क्नसु ह्वरणदीप्त्योः। धातोः प्रेरणे। वृद्धिः। मितां ह्रस्वः। क्नसयति। क्नसयाञ्चकार। ञेः। क्नस्यात्। सिसता०। क्नसयिता। क्नसयिष्यति। अक्नसयिष्यत्। लुङ्लकारे। ञेरङ् द्विश्च। अङि लघौ। अचिक्नसत्। अचिक्नसताम्। अचिक्नसन्। रञ्ज रागे। एको रज्यति तं०। धातोः प्रेरणे।

## रञ्जेर्ञौ मृगरमणेऽर्थे नलोपो वाच्यः।

रज्यति मृगान्, अरीरजत्। शम दम उपशमे। शमयति, अशीशमत्। दमयति, अदीदमत्।

रञ्जेः। रञ्जेर्धातोर्मृगरमणेऽर्थे नकारस्य लोपो वाच्यः। अनेन सूत्रेण नकारस्य लोपो भवति। अत उपधायाः। मितां ह्रस्वः। रजयति। रजयाञ्चकार। ञेः। रज्यात्। सिसता०। रजयिता। रजयिष्यति। अरजयिष्यत्। लुङ्लकारे। त्रिसूत्रैः कार्य्यसिद्धिः प्रायः। अजीजरत्। अजीजरताम्। अजीजरन्। मृगरमणाभावेऽर्थे नकारस्य लोपो न भवति। रञ्जयति। रञ्जयाञ्चकार। अररञ्जत्। अररञ्जताम्। अररञ्जन्। शम् दम् उपशमे। एकः शाम्यति तं०। धातोः प्रेरणे। मितां ह्रस्वः। शमयति। शमयाञ्चकार। ञेः। शम्यात्। सिसता०। शमयिता। लुङ्लकारे। ञेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः। अशीशमत्। अशीशमताम्। अशीशमन्। दमयति। दमयाञ्चकार। अदी-

दमत् । अदीदमताम् । अदीदमन् । एतेषां रूपाणां पूर्वोक्तैरेव सूत्रैः सिद्धिः ।
ज्ञा अवबोधने । धातोः प्रेरणे । एको जानाति तमन्यः प्रेरयति ।

## जानातेर्ञौ वा ह्रस्वः ।

ज्ञाऽवबोधने । एकः जानाति तमन्यः प्रेरयति । ज्ञपयति, अजिज्ञपत् ।

जानातेः । जानातेर्धातोर्ञिप्रत्यये परे वा ह्रस्वो भवति । ज्ञपयति । अत्र प्रथमं दीर्घं कृत्वा पश्चात् ह्रस्वो भवति । ह्रस्वाभावपक्षे । ज्ञापयति । ज्ञपयाञ्चकार । ज्ञापयाञ्चकार । लुङ्लकारे तु । अजिज्ञपत् । त्रिसूत्रैः । अजिज्ञपताम् । अजिज्ञपन् । ज्वल दीप्तौ । धातोः प्रेरणे । एको ज्वलति तं० । अत उपधायाः ।

## ज्वलग्लास्नाश्च वा मितः ।

ज्वल दीप्तौ । ज्वलयति, ज्वालयति, अजिज्वलत । ग्लै हर्षक्षये । ग्लपयति, ग्लापयति, अजिग्लपत् । ष्णा शौचे । आदेः ष्णः स्नः । स्नापयति, स्नपयति, असिस्नपत् । ओ स्फायी वृद्धौ ।

ज्वलग्लास्नाः । ज्वलग्लास्ना एते धातवो वा मितो भवन्ति । मितां ह्रस्वः । ज्वलयति । मित्त्वाभावे । ज्वालयति । ज्वलयाञ्चकार । ज्वालयाञ्चकार । ञेः । ज्वल्यात् । ज्वाल्यात् । सिसता० । ज्वलयिता । ज्वालयिता । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । अजिज्वलत् । अजिज्वलताम् । अजिज्वलन् । ग्लै हर्षक्षये । धातोः प्रेरणे । सन्ध्यक्षराणामा । रातो ञौ पुक् च । ज्वल० अनेन वा मित्त्वम् । ग्लापयति । ग्लपयति । ग्लापयाञ्चकार । ग्लपयाञ्चकार । ञेः । ग्लाप्यात् । ग्लप्यात् । सिसता० । ग्लापयिता । ग्लपयिता । लुङ्लकारे । ञेरङ् । अङि लघौ । अजिग्लपत् । अजिग्लपताम् । अजिग्लपन् । इत्यादीनि । ष्णा शौचे । एकः स्नाति तमन्यः प्रेरयति । धातोः प्रेरणे । वा मित्त्वम् । रातो ञौ पुक् च । स्नपयति । स्नापयति । लिट्लकारे । कासादि । स्नपयाञ्चकार । स्नापयाञ्चकार । लुङ्लकारे । पूर्वस्य । अङि लघौ । असिस्नपत् । असिस्नपताम् । असिस्नपन् । ओस्फायी वृद्धौ । आकारैकारावितौ । धातोः प्रेरणे ।

## स्फायो वकारः स्यात् ञौ परे ।

स्फावयति, अपिस्फवत् ।

स्फाय: । स्फायो धातोर्वकार: स्यात ञिप्रत्यये परे । षष्ठी । अनेनान्त्यस्यैव भवति । स्फावयति । लिट्लकारे । कासादि० अनेनाम्प्रत्ययो भवति । स्फावयाञ्चकार । ञे: । स्फाव्यात् । सिसता० । स्फावयिता । स्फावयिष्यति । अस्फावयिष्यत् । लुङ्लकारे । ञेरङ्द्विश्च । भ्रसात् । भ्रपानाम् । अङ्लिघौ । अपिस्फवत् । अपिस्फवताम् । अपिस्फवन् । ञि भी भये । जकार इत् । एको ञिभेति तं० । धातो: प्रेरणे ।

## भियो ञौ वा षुगात्वे वाच्ये ।

### भीषयति, भापयति, भाययति, अबीभिषत्, अबीभपत्, अबीभयत् ।

भिय: । भियो धातोर्ञिप्रत्यये परे षुगात्वे वाच्ये । क्रमाद्द भवत: । भीषयति । भीषयाञ्चकार । लुङ्लकारे । ञेरङ्द्विश्च । भ्रपानाम् । अङि लघौ । लघोर्दीर्घ: । अबीभिषत् । अबीभिषताम् । अबीभिषन् । आत्वे कृते । रातो ञौ पुक् च । भापयति । भापयाञ्चकार । भाप्यात् । भापयिता । भापयिष्यति । लुङ्लकारे । त्रिसूत्रै: पूर्वोक्तैरेव रूपसिद्धि: । अबीभपत् । अबीभपताम् । अबीभपन् । सूत्रे वा ग्रहणं कृत्वा भापयति इति रूपमिच्छन्ति । भाययाञ्चकार । लुङ्लकारे । पूर्वोक्तैरेव सूत्रै: सिद्धि: । अबीभयत् । अबीभयताम् । अबीभयन् ।

## व्यापारमात्रे ञिर्वक्तव्य: स च डित् ।

### हलं गृह्णाति हलयति । इति ञ्यन्तप्रक्रिया ।

व्यापारमात्रे । व्यापारमात्रे ञिप्रत्ययो वक्तव्य: । स च डित् । हलं गृह्णाति इति । अत्रानेन ञि: प्रत्ययो भवति । डित्वात् टिलोप: । हलयति । लिट्लकारे हलयाञ्चकार । ञे: । हल्यात् । सिसता० । हलयिता । हलयिष्यति । अहलयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अग्लोपिन: । अनेनास्याङ्कार्यं न भवति । कुहोश्चु: । अजहलत् । अजहलताम् । अजहलन् । इत्यादीनि रूपाणि भवन्ति । इति ञ्यन्तप्रक्रिया समाप्ता ।

## अथ सप्रक्रिया निरूप्यते ।

अथ सप्रक्रिया निरूप्यते ।

## इच्छायामात्मनः सः।

धातोरिच्छायामर्थे सः प्रत्ययो भवति सा चेत् स्वसम्बन्धिनी। द्वित्वं। भवितुमिच्छति बुभूषति। स धातुः। धातुत्वात्तिबादि। अदे।

इच्छायामात्मनः सः। इच्छायां ( स० ए० ) आत्मनः ( ष० ए० ) सः ( प्र० ए० ) धातोरर्थसम्बन्धिन्यामिच्छायां वाच्यमानायाम् इच्छारूपेऽर्थे वाच्ये सति सः प्रत्ययो भवति। स चेच्छा स्वसम्बन्धिनी चेत्। धातोर्द्वित्वं च भवति। भवितुमिच्छति इति विग्रहे। अनेन सूत्रेण सः प्रत्ययः। द्वित्वं च भवति। ह्रस्वः। झपानाम्। षत्वम्। नन्वत्र० सिसता अनेनेट् कथं न क्रियते। तत्राह।

## वुः से।

उश्च ऋश्च वृ तस्मात् वुः। उवर्णान्तादृवर्णान्ताच्च ग्रहगुहोश्च से परे इट् न भवति।

वुः से। उश्च ऋ च वृ तस्मात् वुः ( पं० ए० ) से ( स० ए० ) अयं समासो बालबोधनार्थं दर्शितः। उवर्णान्तात् ऋवर्णान्तात् 'ग्रह उपादाने' 'गुह संवरणे' इत्येताभ्यां परस्य सप्रत्ययस्य इडागमो न भवति इति इडागमनिषेधः। नन्वत्र गुणः कथं न क्रियते। तत्राह।

## नानिटि से।

इड्वर्जिते सप्रत्यये परे गुणो न भवति। तॄ प्लवनतरणयोः।

नानिटि से। अस्य सूत्रस्य व्याख्यानं कृतमस्ति। अनेन गुणनिषेधः। बुभूष इति जाते। स धातुः। अनेन धातुत्वम्। धातुत्वात् तिबादयो भवन्ति। अप् कर्त्तरि। अदे। बुभूषति। बुभूषेत्। बुभूषतु। अबुभूषत्। लिट्लकारे। कासादि० अनेनाम्। बुभूषाञ्चकार। याद्यादौ। यतः। अनेन आकारस्य लोपः। बुभूष्यात्। सिसता०। बुभूषिता। बुभूषिष्यति। अबुभूषिष्यत्। लुङ्लकारे। दाविटौ। सिलोपः। अन्या साधना पूर्ववत्। अबुभूषीत्। अबुभूषिष्टाम्। अबुभूषिषुः। तॄ प्लवनतरणयोः। तरितुमिच्छतीति विग्रहे। इच्छायामात्मनः सः। अनेन सः प्रत्ययः। धातोर्द्वित्वं च।

## नाम्यन्तात्परस्य सस्य कित्त्वं वाच्यम् ।

ऋत इर् । तरितुमिच्छति तितीर्षति, अतितीर्षीत् । डुकृञ् करणे । कर्त्तुमिच्छति चिकीर्षति ।

नाम्यन्तत् । नाम्यन्ताद्धातोः परस्य सस्य कित्त्वं वाच्यम् । ऋत इर् । अनेन इर् । पश्चाद्द्वित्वम् । य्वोर्विहसे । षत्वम् । स धातुः । तितीर्षति । लिट्लकारेः । तितीर्षाञ्चकार । मिसता० । तितीर्षिता । लुङ् । अतितीर्षीत् । अतितीर्षिष्टाम् । अतितीर्षिषुः । इत्यादीनि । डुकृञ् करणे । सप्रत्ययः । नाम्यन्तात् । ऋत इर् । ततः द्वित्वम् । कहोश्चुः । य्वोर्विहसे । नैकस्वरात् । अनेन इड्निषेधः । चिकीर्षति । चिकीर्षाञ्चकार । अचिकीर्षीत् । अचिकीर्षिष्टाम् । अचिकीर्षिषुः । ऋत इति तपरकरणात् ऋकारस्यैव इर् क्रियते । स विधिः सार्वत्रिको न । तेन ऋस्वस्यापि ऋवर्णस्य इर् भवति । चिञ् चयने । इच्छायाम् ।

## चिनोतेः से णादौ कित्त्वं वा वाच्यम् ।

चिकीषति, चिचीषति । जि जये । सपरोक्षयोर्जेर्गिः । जेतुमिच्छति जिगीषति । यु मिश्रणे । युयूषति । डु पचष् पाके । यः से । पक्तुमिच्छति पिपक्षति । पातुमिच्छति पिपासति ।

चिनोतिः । चिनोतेर्धातोः सप्रत्यये णादौ कित्त्वं वा वाच्यम् । अनेन चस्य कः । ततो द्वित्वम् ।

## से दीर्घः ।

से परे पूर्वस्य दीर्घो भवति । चिञ् चयने ।

से दीर्घः । सप्रत्यये परे पूर्वस्य दीर्घो भवति । नैकस्वरात् षत्वम् । स धातुः । चिकीषति । चिकीषाञ्चकार । अचिकीष्यात् । कत्वाभावे । सेदीर्घः । अन्यत्साधनं तु पूर्ववत् । चिचीषति । चिचीषाञ्चकार । अचिचीषीत् । जि जये । इच्छायाम् । सपरोक्षयोर्जेर्गिः । अनेन जस्य गः । ततः द्वित्वम् । कुहोश्चुः । से दीर्घः । षत्वम् । नैकस्वरात् अनेन सूत्रेण । सर्वेषाम् एकस्वराणां धातूनां सप्रत्यये परे इड् न भवति । इति ज्ञातव्यम् । जिगीषति । जिगीषाञ्चकार ।

सिसतौ। जिगीषिता। अजिगीषीत। यु मिश्रणे। इच्छायाम्। यवितुमिच्छति इति विग्रहे। सप्रत्ययः। धातोर्द्वित्वम्। से दीर्घः। युयूषति। युयूषाञ्चकार। यतः। युयूष्यात्। सिसता०। युयूषिता। युयूषिष्यति। अयुयूषिष्यत्। अयुयूषीत्। अयुयूषिष्टाम्। अयुयूषिषुः। डु पचष् पाके। पक्तुमिच्छति इति विग्रहे। इच्छायां द्वित्वं पूर्वस्य। यः से। चोः कुः। क्षिलात्। कष संयोगे०। स धातुः। पिपक्षति। पिपक्षाञ्चकार। यतः। पिपक्ष्यात्। सिसता०। पिपक्षिता। पिपक्षिष्यति। दिवादावट्। अपिपक्षिष्यत्। लुङ्लकारे द्ताविटौ। सेर्लोपः। अपिपक्षीत्। अपिपक्षिष्टाम्। अपिपक्षिषुः। इत्यादीनि भवन्ति। पा पाने। पातुमिच्छति। इति विग्रहे। इच्छायाम्। अनेन सः प्रत्ययः। धातोर्द्वित्वं च भवति। ह्रस्वः। यः से। पिपासति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। कासादि०। अनेनाम् प्रत्ययो भवति। पिपासाञ्चकार। यतः। पिपास्यात्। सिसता०। पिपासिता। पिपासिष्यति। अपिपासिष्यत्। अपिपासीत्। अपिपासिष्टाम्। अपिपासिषुः। एतेषां साधनं तु पूर्ववत्। ननु देवदत्तः काष्ठेन पिपक्षति। पक्तुमिच्छति। इत्यत्र काष्ठेनेति साधनस्य किं पाकेन सम्बन्धः किं वा इच्छायाम्। इत्याशङ्कायामाह।

## गौणः प्रकृत्यर्थोऽन्यत्र सात्।

**प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थः प्रधानीभूतः। अत्र सप्रत्यये तु वैपरीत्यं, प्रकृत्यर्थः प्रधानीभूतः। तेन काष्ठेन पिपक्षतीत्यत्र तृतीयायाः पाकेन सम्बन्धो न त्विच्छया। मृङ् प्राणत्यागे। मर्तुमिच्छति मुमूर्षति। पोरुर्। पॄ पालनपूरणयोः। पुपूर्षति।**

गौणः प्रकृत्यर्थोऽन्यत्र सात्। सप्रत्ययादन्यत्र स्थाने 'अन्येषु प्रत्ययेषु प्रकृत्यर्थो धात्वर्थो गौणोऽमुख्यः प्रत्ययार्थो मुख्यः। सप्रत्यये तु धातोरर्थो मुख्यः। अतोऽत्र काष्ठेन पिपक्षति इत्यत्र काष्ठेन साधनभूतेन यः पाकलक्षणो धात्वर्थस्तमिच्छति इत्यर्थः। अन्यथा पाकं काष्ठेन इच्छति इति स्यात्। अत्र इषधातोरिच्छार्थस्य गौणत्वम्। अतोऽत्र काष्ठस्य इच्छां प्रति साधनत्वाभावः। किन्तु पाकलक्षणं प्रकृत्यर्थं प्रति साधनत्वम्। मृङ् प्राणत्यागे। मर्तुमिच्छति। इच्छायाम्। पोरुर्। ततो द्वित्वम्। पूर्वस्य। य्वोर्विहसे। मुमूर्षति। मुमूर्षाञ्चकार। यतः। मुमूर्ष्यात्। सिसता०। मुमूर्षिता। मुमूर्षिष्यति। अमुमूर्षिष्यत्। लुङ्लकारे। द्ताविटौ। सेर्लोपो भवति। अमुमूर्षीत्। अमुमूर्षिष्टाम्। अमुमूर्षिषुः। पॄ पालनपूरणयोः। पूरितुमिच्छति इति विग्रहे। इच्छायाम्। पोरुर्। य्वोर्विहसे।

षत्वम्। विभक्तिकार्यं प्राग्वत्। पुपूर्षति। पुपूर्षांचकार। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे। अपुपूर्षीत्। अपुपूर्षिष्टाम्। अपुपूर्षिषुः। इत्यादीनि। वृङ् वरणे। वरितुमिच्छति। इच्छायाम्।

## वृङ् इत्यस्य उर्वाच्यः।

### वृङ् वरणे। वरितुमिच्छति वुवूर्षति।

वृङ्। वृङो धातोः सप्रत्यये परे उर् वाच्यः। षष्ठी। अन्यत् साधनं पूर्ववद्बोध्यम्। वुवूर्षति। वुवूर्षांचकार। लुङ्लकारे। अवुवूर्षीत्। अवुवूर्षिष्टाम्। अवुवूर्षिषुः। रुदिर् अश्रुविमोचने। इच्छायाम्।

## रुदविदमुषग्रहिस्वपिप्रच्छः सः किद्वाच्यः।

### रुदिर् अश्रुविमोचने। रुरुदिषति। विद ज्ञाने। विविदिषति। मुष स्तेये। मुमुषिषति। ग्रह उपादाने। हो ढः। आदिजबानाम्। षढोः कः से। षत्वम्। चः। गृहीतुमिच्छति जिघृक्षति। सुषुप्सति। प्रच्छ ज्ञीप्सायाम्।

रुद०। रुद विद मुष ग्रहि स्वपि प्रच्छ एभ्यो धातुभ्यः सः कित् वाच्यः। द्वित्वम्। सिसता०। षत्वम्। रुदितुमिच्छति। रुरुदिषति। लिट्लकारे। कास्यादि०। रुरुदिषाचकार। यतः। रुरुदिष्यात्। सिसता०। रुरुदिषिता। रुरुदिषिष्यति। अरुरुदिषिष्यत्। लुङ्लकारे। द्वाविटौ। सेर्लोपः। अरुरुदिषीत्। अरुरुदिषिष्टाम्। अरुरुदिषिषुः। इत्यादीनि। विद ज्ञाने। विदितुमिच्छति। इच्छायाम् सः प्रत्ययः। द्वित्वम्। सिसता०। षत्वम्। विविदिषति। विविदिषाञ्चकार। लुङ्लकारे। अविविदिषीत्। मुष स्तेये। मुषितुमिच्छति। इच्छायां साधनं पूर्ववत्। मुमुषिषति। मुमुषिषाञ्चकार। अमुमुषिषीत्। अन्यानि सुगमानि। ग्रह उपादाने। गृहीतुमिच्छति। इच्छायाम् अनेन सः प्रत्ययः। ततः। ग्रहां क्ङिति च। ततो द्वित्वम्। रः। कुहोश्चुः। अपानाम्। यः से। होढः। आदिजबानाम् षढोः कः से। षत्वम्। कष संयोगे०। जिघृक्षति। जिघृक्षाञ्चकार। लुङ्लकारे। अजिघृक्षीत्। अजिघृक्षिष्टाम्। ञिष्वप् शये इच्छायाम्। सम्प्रसारणम्। ततो द्वित्वम्। षत्वम्। स्वप्तुमिच्छति सुषुप्सति। लिट्लकारे। सुषुप्साञ्चकार। लुङ्लकारे। असुषुप्सीत्। असुषुप्सिष्टाम्। असुषुप्सिषुः। प्रच्छ ज्ञीप्सायाम्। इच्छायाम्।

## कॄगॄधृदृप्रच्छस्मिङञ्जूशूङ्तीनां सस्येड् वक्तव्यः।

पिपृच्छिषति। करितुमिच्छति चिकरिषति। जिगरिषति, जिगलिषति, दिदरिषति, दिधरिषति, सिस्मयिषति। स्वरादेः परः। अञ्जिजिषति, अशिशिषते, अरिरिषति। अद भक्षणे। सिसयोः इति घसादेशः। सन्नोऽनपि। अत्तुमिच्छति जिघत्सति।

कॄगॄधृदृप्रच्छस्मिङ अञ्जूअशूङ्तीनां धातूनां सप्रत्ययस्य इड् वक्तव्यः। संप्रसारणम्। यः से। षत्वम्। पिपृच्छिषति। लिट्लकारे। पिपृच्छिषाञ्चकार। लुङ्लकारे। द्वाविटौ। सेर्लोपः। अपिपृच्छिषीत्। अन्यानि सुगमानि। कॄ विक्षेपे। करितुमिच्छति। इच्छायाम्। रः। गुणः। इट्। षत्वम्। कुहोश्चुः। यः से। चिकरिषति। चिकरिषाञ्चकार। अचिकरिषीत्। गॄ निगरणे। गरितुमिच्छति। इच्छायाम्। द्वित्वम्। रः। कुहोश्चुः। यः से। इट् गुणः। षत्वम्। जिगरिषति। जिगरिषाञ्चकार। यतः। जिगरिष्यात्। सिसता० जिगरिषिता। अजिगरिषिष्यत्। लुङ्लकारे द्वाविटौ। सेर्लोपः। अजिगरिषीत्। अजिगरिषिष्टाम्। अजिगरिषिषुः। गिरतेः। अनेन रस्य लः। जिगलिषति। दृ विदारणे। दरितुमिच्छति। इच्छायाम्। सः प्रत्ययः। धातोर्द्वित्वम्। रः। यः से। गुणः। इट्। षत्वम्। दिदरिषति। दिदरिषाञ्चकार। यतः। दिदरिष्यात्। सिसता०। दिदरिषिता। लुङ्लकारे। साधनं पूर्ववत्। अदिदरिषीत्। अन्यानि सुगमानि। धृ धारणे। धर्तुमिच्छति। इच्छायाम्। अन्यत् सर्वं पूर्ववत्। झपानां अनेन धस्य दः। दिधरिषति। दिधरिषाञ्चकार। लुङ्लकारे। अदिधरिषीत्। स्मिङ्ईषद्धसने। स्मयितुमिच्छति। सः। द्वित्वम्। पूर्वस्य। गुणः। सिस्मयिषति। सिस्मयिषाञ्चकार। लुङ्लकारे। द्वाविटौ। सेर्लोपः। दिवादावट्। असिस्मयिषीत्। असिस्मयिषिष्टाम्। असिस्मयिषिषुः। इत्यादीनि। अञ्जू व्यक्तिमर्षणकान्तिगतिषु। अजितुमिच्छति। इच्छायाम्। कॄ गॄ अनेनेट्। पश्चात्। स्वरादेः परः। जस्य द्वित्वम्। षत्वम्। अञ्जिजिषति। चतुर्णां सुगमानि। कासादि०। अञ्जिजिषाञ्चकार। यतः। अञ्जिजिष्यात्। सिसता०। अञ्जिजिषिता। लुङ्लकारे। द्वाविटौ। सेर्लोपः। अन्यत् सुगमम्। स्वरादेः। अनेन द्वितीयोऽडागमो भवति। सवर्णे। आञ्जिजिषीत्। अन्यानि सुगमानि। अशूङ् व्याप्तौ। अशितुमिच्छति। इच्छायाम्। स्वरादेः परः।

अशिशिषति । कासादि० । अनेनाम् । अशिशिषाञ्चकार । यत: । अशिशिष्यात् । सिसता० । अशिशिषिता । अशिशिषिष्यति । स्वरादे: । अशिशिषिष्यत । लुङ्लकारे । द्वाविटौ । सेर्लोप: । अशिशिषीत् । अद भक्षणे । अत्तुमिच्छति । इच्छायाम् अनेनास्य स: प्रत्यय: । मिसयो: । अनेन घसादेश: । ततो द्वित्वम् । कुहोश्चु: । झपानाम् । य: से । सस्तोऽनपि । अनेन सकारस्य तकार: । जिघत्सति । लिट्लकारे । जिघत्साञ्चकार । यत: । जिघत्स्यात् । सिसता० । जिघत्सिता । जिघत्सिष्यति । अजिघत्सिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोप: । अजिघत्सीत । अजिघत्सिष्टाम् । अजिघत्सिषु: । हन् हिंसागत्यो: ।

## हन्नीङो: सो णित् ।

**हन्नीङोर्धात्वो: सो णिद्भवति । हन् हिंसागत्यो: । द्वित्वम् । पूर्वस्य । हसादि: शेष: । कुहोश्चु: । झपानां जबचपा: । य: से । हनो घ्न । अत उपधाया: । नश्चाप-दान्ते झसे । स धातु: । अप् । अदे । हन्तुमिच्छति जिघांसति ।**

हन्नीङो: । सो णित । हन्नीङो: ( ष० द्वि० ) स: ( प्र० ए० ) णित् ( प्र० ए० ) हन्नीङोर्धात्वो: स: प्रत्ययो णित् भवति । णित्वात् वृद्धि: । अन्यत् साधनं सूत्रे लिखितम् । हन्तुमिच्छति । जिघांसति । लिट्लकारे । जिघांसाञ्चकार । लुङ्लकारे । द्वाविटौ । सेर्लोप: । अजिघांसीत् । इत्या-दीनि । इङ् अध्ययने । अध्येतुमिच्छति । इच्छायाम् ।

## इङ: से गम् वाच्य: ।

**अध्येतुमिच्छति अधिजिगांसते ।**

इङ: । इङो धातो: सप्रत्यये परे गम् वाच्य: । अन्यत्साधनं तु पूर्ववत् । अधिजिगांसते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । कासादि० । अधिजिगांसाञ्चक्रे । सिसता० । अधिजिगांसिषीष्ट । अधिजिगांसिता । अधि-जिगांसिष्यते । दिवादावट् । अध्यजिगांसिष्यत । लुङ्लकारे । अध्यजिगां-सिष्ट । इत्यादीनि । गम्लृ । गन्तुमिच्छति । इच्छायाम् ।

## गमे: से इङ्वाच्य: ।

**गन्तुमिच्छति जिगमिषति।**

गमेः। गमेर्धातोः सप्रत्यये इड् वाच्यः। अनेनाखेट्। हित्वादिकं तु पूर्ववत् कार्य्यम्। षत्वम्। जिगमिषति। लिट्लकारे। कासादि०। जिगमिषाञ्चकार। यतः। जिगमिष्यात्। सिसता०। जिगमिषिता। जिगमिषिष्यति। अजिगमिषिष्यत्। लुङ्लकारे। द्वाविटौ। सेर्लोपः। अजिगमिषीत्। इत्यादीनि भवन्ति। दादाने। दातुमिच्छति। इच्छायाम्। अनेन सः प्रत्ययः। धातोर्द्वित्वं च।

## इस्से।

**अपिद्दाधारभ्लभ्शक्पद्पत्-मिमीमामाङ्मेङ्हिंसार्थराधां स्वरस्य से परे इसादेशो भवति पूर्वस्य च लोपः। दित्सति। धित्सति। स्कोराद्योश्च। खसे चपा०। रिप्सति, लिप्सति, शिक्षते, पित्सते।**

इस्से। इस् (प्र० ए०) से (स० ए०) अपित् दा धा रभ् लभ् शक् पद् पत् मि मी मा माङ् मेङ् हिंसार्थराधां धातूनां स्वरस्य सप्रत्यये परे इसादेशो भवति। पूर्वस्य च लोपो भवति। अनेनेस्, पूर्वस्य लोपः। सस्तोनपि। अनेन सस्य तः। दित्सति। चतुर्णां सुगमानि। लिट्लकारे। कासादि०। दित्साञ्चकार। यतः। दित्स्यात्। सिसता०। दित्सिता। दित्सिष्यति। अदित्सिष्यत्। अदित्सीत्। इत्यादीनि। डुधाञ् धारणपोषणयोः। धातुमिच्छतीति इच्छायाम्। इस्से। धित्सति। धित्साञ्चकार। लुङ्लकारे। अधित्सीत्, अधित्सिष्टाम्।' अधित्सिषुः। रभ् राभस्ये। रब्धुमिच्छति। इच्छायाम्। इस्से। खसे। स्कोराद्योश्च। रिप्सति। रिप्साञ्चकार। लुङ्। अरिप्सीत्। डुलभष् प्राप्तौ। लब्धुमिच्छति। इच्छायाम्। द्वित्वम्। इस्से। स्कोराद्योश्च। खसे०। लिप्सति। लिट्लकारे। कासादि०। लिप्साञ्चकार। यतः। लिप्स्यात्। सिसता०। लिप्सिता। लुङ्लकारे। द्वाविटौ। अलिप्सीत्। अलिप्सिष्टाम्। अलिप्सिषुः। इत्यादीनि। शक्ल शक्तौ। शक्तुमिच्छति। इच्छायाम्। इस्से। षत्वम्। कषसंयोगे क्षः। शिक्षते। लिट्लकारे। शिक्षाञ्चकार। यतः। शिक्ष्यात्। सिसता०। शिक्षिता। लुङ्लकारे। साधनं सुगमम्। अशिक्षीत्। इत्यादीनि। पतॢ पतने। पतितुमिच्छति। इच्छायाम्। इस्से। पित्सति। पित्साञ्चकार। लुङ्लकारे। अपित्सीत्।

## पतो वेट् ।

पित्सति, पिपतिषति। इट्पक्षे इस्पूर्वलोपौ न भवतः। मीञ् हिंसायाम्। डुमिञ् प्रक्षेपे। मित्सति। माङ् माने। मेङ् शोधने। मित्सते। राध् संसिद्धौ। रित्सति।

पतः। पतॢ पतने इत्यस्य धातोर्वा इट् भवति। यः से अनेन पूर्वस्याकारस्येकारः। इट्पक्षे इस्पूर्वलोपौ न भवतः। पिपतिषति। लिट्लकारे। पिपतिषाञ्चकार लुङ्लकारे। साधनं पूर्ववत्। अपिपतिषीत्। पट् गतौ। पट्टुमिच्छति। इच्छायाम्। इस्से। पित्सते। पित्साञ्चक्रे। लुङ्लकारे। अपित्सिष्ट। इत्यादीनि। मीञ् हिंसायाम्। डुमिञ्। प्रक्षेपे। अनयोर्धात्वोः सप्रत्यये क्रते। इस्से। सस्तीनति अनेन सकारस्य तकारः। मित्सति। लिट्लकारे। मित्साञ्चकार। लुङ्लकारे। साधनं सुगमम्। अमित्सीत्। अमित्सिष्टाम्। माङ् माने। मेङ् शोधने। अनयोर्धात्वोः सप्रत्यये क्रते। इस्से। मित्सते। मित्साञ्चक्रे। सिसता। अनेनेट्। मित्सिषीष्ट। लुङ्लकारे। अमित्सिष्ट। इत्यादीनि। राध् संसिद्धौ। राद्धुमिच्छति। इच्छायाम्। इस्से। अनेनेस्पूर्वलोपौ भवतः। खसोरादश्च। खसे। रित्सति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। कासादि०। अनेनाम्। रित्साञ्चकार। लुङ्लकारे। दिबादावट्। अरित्सीत्। इत्यादीनि। आप्ॢ व्याप्तौ। आप्तुमिच्छति। इच्छायाम्। स्वरादेः।

## आप्नोतेरीः।

आप्नोतेराकारस्येकारो भवति से परे पूर्वस्य च लोपः। आप्ॢ व्याप्तौ। ईप्सते।

आप्नोतेरीः। आप्नोतेः (ष० ए०) ईः। (प्र० ए०) आप्नोतेर्धातोराकारस्य ईकारो भवति सप्रत्यये परे। पूर्वस्य च लोपो भवति। ईप्सते। लिट्लकारे। कासादि०। ईप्साञ्चक्रे। लुङ्लकारे दिबादावट्। स्वरादेः परः। अइए। एऐऐ। ऐप्सिष्ट। ऐप्सिषाताम्। ऐप्सिषत। अश् भोजने। अशितुमिच्छति। इच्छायाम्।

## अशेरनायो वा।

**अशेरिच्छायां सस्थाने वा अनायप्रत्ययो भवति। अशनायति। अशिशिषति।**

अशेरनायो वा। अशेः (ष० ए०) अनायः (प्र० ए०) वा (प्र० ए०) अशेर्धातोरिच्छायां सकारस्य स्थाने वा अनायः प्रत्ययो भवति। तदा धातोर्द्वित्वं न भवति। अशनायति। अशनायाञ्चकार। लुङ्। अशनायीत्। इत्यादीनि। यदा आनायः प्रत्ययो न भवति तदा इट्। स्वरादिः परः। षत्वम्। अशिशिषति। लिट्लकारे। अशिशिषाञ्चकार। लुङ्लकारे। स्वरादिः। अशिशिषीत्। इत्यादीनि। तनु विस्तारे। तनितुमिच्छति। इच्छायाम्। अनेन सः प्रत्ययो धातोर्द्वित्वं च। सिसता०। यः से। षत्वम्। तितनिषति। तितनिषाञ्चकार। अतितनिषीत्।

## पततनदरिद्राभ्यः से वा इड्वाच्यः।

**तितनिषति तितंसति।**

पततनदरिद्राभ्यः। पत तन दरिद्रा एभ्यो धातुभ्यः सप्रत्यये वा इड् वाच्यः। तदा। नश्चापदान्ते। तितंसति। लिट्लकारे। तितंसाञ्चकार। यतः। तितंस्यात्। सिसता०। तितंसिता। लुङ्लकारे। अतितंसीत्।

## तनेः से वा दीर्घः।

**तितांसति, दिदरिद्रिषति, दिदरिद्रासति।**

तनेः। तनोतेर्धातोः सप्रत्यये वा दीर्घो भवति। अनेन दीर्घः। तितांसति। तितांसाञ्चकार। यतः। तितांस्यात्। लुङ्लकारे। अतितांसीत्। इत्यादीनि। दरिद्रा दुर्गतौ। दरिद्रातुमिच्छति। इच्छायात्। द्वित्वम्। यः से। सिसता०। थप्। अनेनाकारस्य लोपः। षत्वम्। दिदरिद्रिषति। पत० अनेनाखेड्विकल्पः। दिदरिद्रासति। लिट्लकारे। कासादि०। दिदरिद्रासाञ्चकार। यतः। दिदरिद्रास्यात्। सिसता०। दिदरिद्रासिता। लुङ्लकारे। अदिदरिद्रासीत्। इत्यादीनि। दम्भ दम्भने। आत्मनो दम्भितुमिच्छति।

## वेडिस्से दीर्घता च।

**दम्भिश्रय्योर्धात्वोर्वा इट् भवति सप्रत्यये परे। यदा**

नेट् तदा किम्। अनयोर्दम्भिज्ञप्योर्धात्वोः सानुस्वारस्य स्वरस्य इस् भवति। इकारस्य दीर्घता। दम्भेरिकारस्य वा दीर्घता। चकारात् पूर्वस्य लोपः। दम्भ दम्भने। आत्मनः दम्भितुमिच्छति दिदम्भिषति। द्वित्वम्। इस्। आदिजबानाम्। खसे चपा झसानाम्। स्कोराद्योश्च। वा दीर्घता। धीप्सति-धिप्सति। ज्ञाऽवबोधने। इच्छायामात्मनः सः। द्विश्च। ह्रस्वः। पूर्वस्य हसादिः शेषः। यस्से। वा इट् गुणः। णश्चय्। स्वरहीनम्। षत्वम्। स धातुः। तिप्। अप्। अदे। आत्मनः ज्ञापयितुमिच्छतीति जिज्ञापयिषति। पक्षे। जिज्ञापि स इति स्थिते। सस्य इस् तस्य दीर्घता। पूर्वस्य लोपः। जेः। स्कोराद्योश्च। ज्ञीप्सति। ज्ञप ज्ञानज्ञापनयोः। जिज्ञापयिषति। मितां ह्रस्वः। जिज्ञपयिषति। ज्ञीप्सति। इति सप्रक्रिया।

वेडिस्से दीर्घता च। वा (प्र० ए०) इट् (प्र० ए०) इस् (प्र० ए०) से (स० ए०) दीर्घता (प्र० ए०) च (प्र० ए०) अस्य सूत्रस्य व्याख्यानं मूल एव कृतम्। साधने यानि सूत्राणि तानि मूले उक्तानि। दीर्घता वा भवति। धीप्सति। धिप्सति। यदा इट् तदा दिदम्भिषति। अस्य साधनं तु सुगमम्। लिट्लकारे। दिदम्भिषाञ्चकार। धीप्साञ्चकार। धिप्साञ्चकार। लुङ् अदिदम्भिषीत्। अधीप्सीत्। अधिप्सीत्। इत्यादीनि रूपाणि सुगमानि। ज्ञा अवबोधने। आत्मनः ज्ञापयितुमिच्छति। अस्य अन्तात् सः। सूत्राणि मूले लिखितानि। जिज्ञापयिषति। लिट्लकारे। कासादि०। जिज्ञापयिषाञ्चकार। लुङ्लकारे। अजिज्ञापयिषीत्। यदा इड् न भवति। तदापि अस्य साधनं मूले उक्तम्। ज्ञीप्सति। लिट्लकारे ज्ञीप्साञ्चकार सिसता०। ज्ञीप्सिता। लुङ्। अज्ञीप्सीत्। ज्ञप ज्ञानज्ञापनयोः। इच्छायात्। अन्तानाम्। अन्यत् साधनं तु मूलतो ज्ञेयम्। जिज्ञपयिषति। लिट्लकारे। जिज्ञपयिषाञ्चकार। लुङ्। अजिज्ञपयिषीत्। यदा इड् न भवति तदा ज्ञीप्सति। लिट्लकारे। कासादि०। ज्ञीप्साञ्चकार। लुङ् अज्ञीप्सीत्। अज्ञीप्सिष्टाम्। अज्ञीप्सिषुः। इत्यादीनि रूपाणि भवन्ति। सुगमत्वात् सर्वाणि न लिखितानि। इति सप्रक्रिया समाप्ता।

# अथ यङ्प्रक्रिया निरूप्यते ।

अथ यङ्प्रक्रिया कथ्यते ।

## अतिशये हसादेर्यङ् द्विश्च ।

हसादेरेकस्वराद्धातोरतिशयेऽर्थे यङ् प्रत्ययो भवति तस्मिन् सति धातोर्द्वित्वम् ।

अतिशये हसादेर्यङ् द्विश्च । अतिशये ( स० ए० ) हसादे ( पं० ए० ) हस् प्रत्याहार आदिर्यस्य सः । हसादिः । तस्मात् । हसादेः यङ् । (प्र० ए०) च अव्ययम् । द्विः ( प्र० ए० ) हसप्रत्याहारादेर्धातोरतिशयेऽर्थे यङ्प्रत्ययो भवति । क्वचिदेकस्वराद्धातोरपि दृश्यते । तेन जागृ चकास्‌ इत्यादिभ्यो नैक-स्वरेभ्यो यङ्प्रत्ययो न भवति । अतिशयेन भवति इति विग्रहे अत्र भूधातोरेक-स्वरत्वात् हसादित्वात् यङ्प्रत्ययो भवति । ततो द्वित्वम् । ङकार आत्मने-पदार्थः । भू भू य इति जाते ।

## यङि ।

यङि सति लुकि च पूर्वस्य नामिनो गुणो भवति । सधातुः । ङित्त्वादात्मनेपदम् । अप् । अतिशयेन भवतीति बोभूयते, बोभूयेत, बोभूयताम्, अबोभूयत, बोभूयाञ्चक्रे, बोभूयिषीष्ट, बोभूयिता, बोभूयिष्यते, अबोभूयिष्यत, अबो-भूयिष्ट, बोभुज्यते ।

यङि । यङि (स० ए०) यङि सति लुकि च सति पूर्वस्य द्विरुक्तसम्बन्धिनो नामिनो गुणो भवति । अनेन गुणः । अपानाम् । स धातुः अनेनास्मिन् प्रकरणे सर्वत्र धातुसंज्ञा कार्या । धातुत्वात् त आदयः प्रत्यया भवन्ति । अप् कर्त्तरि । अदे । बोभूयते । बोभूयेते । बोभूयन्ते । इत्यादीनि । बोभूयेत । बोभूयेयाताम् । बोभूयेरन् । लोट् । बोभूयताम् । बोभूयेताम् । बोभूयन्ताम् । अबोभूयत । अबोभूयेताम् । अबोभूयन्त । लिट् । कासादि० अनेन सूत्रेण सर्वत्राम्प्रत्ययो भवति । अन्यत् साधनं सुगमम् । बोभूयाञ्चक्रे । बोभूयाञ्चक्राते । बोभूयाञ्चक्रिरे । सिसता० । यतः । षत्वम् । बोभूयिषीष्ट । बोभूयिता ।

बोभूयिष्यते। दिबादावट्। अबोभूयिष्यत। लुङ्लकारे। भूते सिः। इट्। षत्वम्। ष्टुत्वम्। अबोभूयिष्ट। अबोभूयिषाताम्। अबोभूयिषत। इत्यादीनि। भुज् पालनाभ्यवहारयोः। अतिशयेन भुनक्ति इति विग्रहे। यङ्। द्वित्वम्। अपानाम्। यङि अनेनास्य पूर्वस्य गुणः। बोभुज्यते। बोभुज्येत। बोभुज्यताम्। गुणः। अबोभुज्यत। रूपाणि सुगमानि। लिट्लकारे। कासादि० अनेनाम् प्रत्ययः।

## अनपि च ह्सात्।

### ह्सादुत्तरस्य यङो लुग्भवति अनपि विषये।

अनपि च ह्सात्। अनपि (स० ए०) च (प्र० ए०) ह्सात् (पं० ए०) ह्सादुत्तरस्य यङ्प्रत्ययस्य लुग् भवति। अनपि विषये। अनेन यङो लुक्। अत्र गुणे प्राप्ते।

## धात्वंशलोपनिमित्ते आर्द्धधातुके परे तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये।

### बोभुजाञ्चक्रे। मुह वैचित्ये। मोमुह्यते। लिह आस्वादने। लेलिह्यते। हु दानादनयोः। जोहूयते। विद ज्ञाने। वेविद्यते।

धात्वंशलोपनिमित्ते आर्द्धधातुके परे सति तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये। अनेन गुणाभावः। बोभुजाञ्चक्रे। सिसता०। षत्वम्। बोभुजिषीष्ट। बोभुजिता। बोभुजिष्यते। दिबादावट्। अबोभुजिष्यत। लुङ्लकारे। भूते सिः। इट्। षत्वम्। ष्टुत्वम्। अबोभुजिष्ट। अबोभुजिषाताम्। अबोभुजिषत। इत्यादीनि। मुह वैचित्ये। अतिशये द्वित्वम्। गुणः। स धातुः। मोमुह्यते। चतुर्णां सुगमानि। लिट्लकारे कासादि०। अनेनाम्। अनपि च ह्सात्। अनेन यङो लोपः। मोमुहाञ्चक्रे। सिसता०। मोमुहिषीष्ट। मोमुहिता। मोमुहिष्यते। अमोमुहिष्यत। अमोमुहिष्ट। रूपाणि सुगमानि। लिह आस्वादने। अतिशये अनेन यङ्। अतिशयेन लेढि। लेलिह्यते। लिट्। अनपि च ह्सात्। लेलिहाञ्चक्रे। सिसता०। लेलिहिषीष्ट। लुङ्। अलेलिहिष्ट। रूपाणि सुगमानि। हु दानादनयोः। अतिशयेन। जुहोति। यङ्। द्वित्वम्। कुहोश्चुः। गुणः। जोहूयते। लिट्। जोहूयाञ्चक्रे। सिसता०। जोहूयिषीष्ट।

लुङ्। अजोहूयिष्ट। रूपाणि सुगमानि। विद ज्ञाने। अतिशयेन वेत्तीति। अतिशये अनेन यङ्। अन्यत् साधनं तु पूर्ववत्। वेविद्यते। लिट्। वेविदाञ्चक्रे। लुङ्। अवेविदिष्ट। पचष् पचने। पठ व्यक्तायां वाचि। अनयोर्यङ्।

## आतः।

यङि लुकि च सति पूर्वस्य अकारस्य आकारो भवति अकिति। पापच्यते। पठ व्यक्तायां वाचि। पापठ्यते।

आतः। आ (प्र० ए०) अतः (ष० ए०) यङि लुकि च पूर्वस्य अकारस्य आकारो भवति। अयकि। पापच्यते। अपापचिष्ट। पापठ्यते। अपापठिष्ट। रूपाणि सुगमानि।

## सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः।

सोसूच्यते, सोसूत्र्यते, मोमूत्र्यते। गत्यर्थात्कौटिल्य एव यङ्। स्वरादेः परः। अट गतौ। यङ्सहितस्य द्वित्वम्। अट्य ट्य इति स्थिते। पूर्वस्य हसादिः शेषः। आतः। इति पूर्वस्यात्वम्। कुटिलं अटतीति अटाट्यते, अटाटाञ्चक्रे, अटाटिषीष्ट। व्रज गतौ। कुटिलं व्रजतीति वाव्रज्यते। अश् भोजने अशाश्यते। ऊर्णुञ् आच्छादने। ऊर्णोनूयते। नदराः संयोगादयो द्विर्न। गुणोर्तिसंयोगाद्योः।

सूचि०। सूचि सूत्रि मूत्रि अटि अर्त्ति अश् ऊर्णोति एभ्यो धातुभ्यो यङ्प्रत्ययो वाच्यः। एषामप्राप्तत्वात् सूत्रमिदम्। साधनं तु सुगमम्। सोसूच्यते। लिट्। सोसूचाञ्चक्रे। लुङ्। असोसूचिष्ट। सोसूत्र्यते। लिट्। सोसूत्राञ्चक्रे। लुङ्। असोसूत्रिष्ट। मोमूत्र्यते। लिट्। कासादि०। अनपि च हसात्। मोमूत्राञ्चक्रे। लुङ्। अमोमूत्रिष्ट। अट गतौ। गत्यर्थाद्धातोः कौटिल्येऽर्थे यङ्। स्वरादेः परः। यङ्सहितस्य द्वित्वम्। अट्य ट्य इति स्थिते। पूर्वस्य। आतः। कुटिलं अटति। अटाट्यते। लिट्। अटाटाञ्चक्रे। लुङ्। अटाटिष्ट। कोपि व्रजति। यङ्। आतः। साधनं सुगमम्। वाव्रज्यते। लिट्। वाव्रजाञ्चक्रे। लुङ्। अवाव्रजिष्ट। अश भोजने। अतिशयेन अश्नातीति। यङ्। द्वित्वम्। आतः। अशाश्यते। लुङ्। अशाशिष्ट। ऊर्णुञ् आच्छा-

दने। अतिशयेन ऊर्णोतीति। यङ्। स्वरादेः। नदराः। गुणः। यि ऊर्णोनूयते। लिट्। ऊर्णोनूयाञ्चक्रे। लुङ्। और्णोनूयिष्ट। अत्र स्वरादेः। अनेन द्वितीयोऽडागमः। ऋ गतौ। अतिशयेन इयर्ति। यङ् गुणोऽर्ति० अनेन गुणः।

## यकारपरस्य रेफस्य द्वित्वं वाच्यम्।

अरार्य्यते।

यकारसहितरेफस्य द्वित्वम्०। पूर्वस्य। आतः। अरार्यते। लिट्। अराराञ्चक्रे। लुङ्। स्वरादेः। अरारिष्ट।

## लुपसदचरजपजभदहदशगृभ्यो धात्वर्थगर्हायामेव यङ्।

गर्हितं लुम्पतीति लोलुप्यते। सासद्यते।

लुप्। लुप् सद चर जप जभ दह दश गृ एभ्यो धात्वर्थगर्हायामेव यङ्-प्रत्ययो भवति। गर्हितं लुम्पति लोलुप्यते। साधनं सुगमम्। लिट्। लोलुपाञ्चक्रे। लुङ्। अलोलुपिष्ट। षद्लृ विशरणगत्यवसादनेषु। सत्वम्। आतः। सासद्यते। लिट्। सासदाञ्चक्रे। लुङ्। असासदिष्ट।

## जमजपां नुक्।

जमान्तस्य जपादीनां च पूर्वस्य नुगागमो यङि लुकि च सति। जप् जभ् दह् दश् भञ्ज् पश् एते जपादयः। जञ्जप्यते बम्भज्यते। अञ्झसेऽप्यनुस्वारः। आदेशिना आदेशो निर्दिश्यते। यंयम्यते। कण शब्दे। चङ्कण्यते तन्तन्यते। जप मानसे च। जपतीति जञ्जप्यते। जभ गात्रविनामे। जभतीति जञ्जभ्यते। दह भस्मीकरणे। दन्दह्यते। नो लोपः। दन्दश्यते। बम्भज्यते। पश्यतीति पम्पश्यते। पश् बाधनग्रन्थनयोः।

जमजपां नुक्। जमजपाम् (ष० ब०) नुक् (प्र० ए०) जमान्तस्य

धातोश्च जपादीनां धातूनां पूर्वस्य नुगागमो भवति यङि लुकि च सति। अनेन नुक्। उकार उच्चारणार्थः। ककारः कित्कार्यार्थः। कुहोश्चुः। नश्चापदान्ते। जङ्गम्यते। अभ्यासेऽपि अनुस्वारो भवति। नकारस्य आदेशिना अनुस्वारादेशवता नुगागमेन नकारेण आदेशो निर्दिश्यते। जङ्गमाञ्चक्रे। अजङ्गमिष्ट। भ्रमु चलने। अतिशयेन। भ्राम्यति। यङ्प्रत्ययः। द्वित्वम्। पूर्वस्य। भषानाम्। जमजपाम्। बम्भ्रम्यते। लिट्। बम्भ्रमाञ्चक्रे। लुङ्। अबम्भ्रमिष्ट। यम उपरमे। अतिशयेन यच्छतीति। यङ्। द्वित्वम्। पूर्वस्य। जमजपाम्। अभ्यासेऽप्यनुस्वारः। आदेशिना आदेशो निर्दिश्यते। अस्य व्याख्यानं पूर्वं कृतम्। अनेन अभ्यासेऽपि नकारस्य अनुस्वारः। यंयम्यते। यंयमाञ्चक्रे। अयंयमिष्ट। कण शब्दे। अतिशयेन कणतीति यङ्। द्वित्वम्। पूर्वस्य। कुहोश्चुः। जमजपाम्। नश्चा०। चङ्कण्यते। चङ्कणाञ्चक्रे। अचङ्कणिष्ट। तनु विस्तारे। अतिशयेन तनोति। साधनं तु पूर्ववत्। तन्तन्यते। तन्तनाञ्चक्रे। अतन्तनिष्ट। जप मानसे। गर्हितं जपति। साधनं पूर्ववत्। जञ्जप्यते। जञ्जपाञ्चक्रे। अजञ्जपिष्ट। जभ गात्रविनामे। गर्हितं जभति। द्वित्वादिकं पूर्ववत् कार्य्यम्। जञ्जभ्यते। जञ्जभाञ्चक्रे। अजञ्जभिष्ट। दह भस्मीकरणे। गर्हितं दहति। यङ्। द्वित्वादिकम्। दन्दह्यते। दन्दहाञ्चक्रे। अदन्दहिष्ट। दंश दशने। गर्हितं दशति। यङ्। नोलोपः। द्वित्वम्। जमजपां नुक्। दन्दश्यते। दन्दशाञ्चक्रे। भञ्जो आमर्दने। अतिशयेन भनक्ति। यङ्। नोलोपः। द्वित्वम्। जमजपाम्। भषानाम्। बम्भज्यते। बम्भजाञ्चक्रे। अबम्भजिष्ट। अतिशयेन पशति। यङ्। द्वित्वम्। जमजपाम्। पश बाधनग्रन्थनयोः। पम्पश्यते। पम्पशाञ्चक्रे। अपम्पशिष्ट। चर गतिभक्षणयोः। गर्हितं चरति। यङ्। द्वित्वम्।

## चरफलोरुच्चास्य।

**अनयोर्यङि लुकि च सति पूर्वस्य नुगागमो भवति पूर्वात्परस्य अकारस्य उकारः। चञ्चूर्य्यते। फल निष्पत्तौ। पम्फुल्यते।**

चरफलोरुच्चास्य। चरफलोः (ष० द्वि०) उत् (प्र० ए०) च (प्र० ए०) अस्य (ष० ए०) अनयोर्धात्वोर्यङि लुकि च पूर्वस्य नुगागमो भवति। पूर्वात् परस्य अकारस्य उकारः। अनेन नुक्। पूर्वात्परस्य अकारस्य उकारः। नश्चापदान्ते। य्वोर्विंहसे। चञ्चूर्य्यते। चञ्चूराञ्चक्रे। अचञ्चूरिष्ट। फल निष्पत्तौ।

अतिशयेन फलति । यङ् । द्वित्वम् । चरफलोः । अपानाम्० । पम्फुल्यते । पम्फुलाञ्चक्रे । अपम्फुलिष्ट ।

## वलयान्तस्य वा नुक् ।

मव स्थौल्ये । मम्मव्यते मामव्यते । चल कम्पने । चञ्चल्यते चाचल्यते । दयङ् दाने । दन्दय्यते दादय्यते ।

वलयान्तस्य० । वलयान्तस्य धातोर्वा नुग् भवति । तत्पक्षे । आतः । मव स्थौल्ये । यङ् । द्वित्वादिकम् । मम्मव्यते मम्मवाञ्चक्रे । अमम्मविष्ट । नुगभावे । मामव्यते । मामवाञ्चक्रे । अमामविष्ट । चल कम्पने । अतिशयेन चलति । यङ् । द्वित्वादिकम् । अमजपाम् । चञ्चल्यते । चञ्चलाञ्चक्रे । अचञ्चलिष्ट । नुगभावे आतः । चाचल्यते । चाचलाञ्चक्रे । अचाचलिष्ट । दयङ्दाने । यङ् । द्वित्वादिकम् । अमजपाम् । दन्दय्यते । दन्दयाञ्चक्रे । अदन्दयिष्ट । नुगभावे । दादय्यते । दादयाञ्चक्रे । अदादयिष्ट । नृती गात्रविक्षेपे । अतिशयेन नृत्यति । यङ् द्वित्वम् । रः ।

## रीगृदुपधस्य ।

ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति । कित्त्वादाकाराभावः । नृती गात्रविक्षेपे । अतिशयेन नृत्यति नरीनृत्यते नटः । अत्र णत्वाभावो वाच्यः । वृतुङ् वर्त्तने । वरीवृत्यते । ग्रह उपादाने । जरीगृह्यते ।

रीगृदुपधस्य । रीक् ( प्र० ए० ) ऋदुपधस्य ( ष० ए० ) ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति । कित्त्वादाकाराभावः । नरीनृत्यते । अत्र णत्वाभावो वाच्यः । नरीनृताञ्चक्रे । अनरीनृतिष्ट । वृतुङ् वर्त्तने । अतिशयेन वर्त्तते । यङ् । द्वित्वादिकम् । रः । रीगृदुपधस्य । वरीवृत्यते । वरीवृताञ्चक्रे । अवरीवृतिष्ट । ग्रह उपादाने । यङ् । सम्प्रसारणम् । द्वित्वादिकम् । रीगृदुपधस्य । जरीगृह्यते । जरीगृहाञ्चक्रे । अजारीगृहिष्ट । ओव्रश्चू छेदने । अतिशयेन वृश्चति । यङ् । सम्प्रसारणम् ।

## ऋत्वतो रीग्वाच्यः ।

ओव्रश्चू छेदने । वरीवृश्च्यते । प्रच्छ ज्ञीप्सायाम् । परी-

पृच्छ्यते। क्लृपू सामर्थ्ये। क्लृपो रो लः। ऋदृत्। चरीक्लृप्यते।

ऋत्वतो रीग् वाच्यः। ऋत्वतो धातोरीगागमो वाच्यः। अनेनास्य रीक्। वरीवृश्च्यते। वरीवृश्चाञ्चक्रे। अवरीवृश्चिष्ट। प्रच्छ ज्ञीप्सायाम्। यङ्। सम्प्रसारणम्। ततो द्वित्वम्। रः। रीक्। परीपृच्छ्यते। परीपृच्छाञ्चक्रे। अपरीपृच्छिष्ट। क्लृप् सामर्थ्ये। अतिशयेन कल्पति। यङ् द्वित्वम्। रः। कुहोश्चुः। रीक्। क्लृपो रो लः। चरीक्लृप्यते। चरीक्लृपाञ्चक्रे। अचरीक्लृपिष्ट। वश् कान्तौ। कान्तिरिच्छा। यङ्।

## वशेर्यङि न सम्प्रसारणम्।

वावश्यते।

वशे। वशेर्धातोर्यङि सम्प्रसारणं न भवति। द्वित्वम्। पूर्वस्य। आतः। वावश्यते। वावशाञ्चक्रे। अवावशिष्ट।

## पदस्रंसुध्वंसुभ्रंसुदंशुकस्वञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नीगागमो वाच्यः।

पनीपद्यते। नो लोपः। स्रंसु ध्वंसु अधःपतने। सनीस्रस्यते। दनीध्वस्यते। बनीभ्रस्यते। वञ्चु वञ्चने। वनीवच्यते, दनीदस्यते, चनीकस्यते, पनीपत्यते, चनीस्कद्यते।

पद०। अनेन नुगागमः अतिशयेन पद्यते। यङ्। द्वित्वम्। नीगागमः। कित्वादाकाराभावः। पनीपद्यते। पनीपदाञ्चक्रे। अपनीपदिष्ट। स्रंसु ध्वंसु अधः पतने। यङ्। नोलोपः। द्वित्वम्। पूर्वस्य नीगागमः। सनीस्रस्यते। सनीस्रसाञ्चक्रे। असनीस्रसिष्ट। झपानाम्। अनेन धस्य दः। अन्यत्तु पूर्ववत्। दनीध्वस्यते। दनीध्वसाञ्चक्रे। अदनीध्वसिष्ट। भ्रंसुधातोर्यङ्। द्वित्वम्। पूर्वस्य। झपानाम्। पद० अनेन नीगागमः। नोलोपः। बनीभ्रस्यते। चतुर्णां सुगमानि। लिट्। कासादि०। अनपि च हसात्। बनीभ्रसाञ्चक्रे। सिसता०। बनीभ्रसिषीष्ट। बनीभ्रसिता। लुङ्लकारे। भूते सिः। इट्। षत्वम्। ष्टुत्वम्। अबनीभ्रसिष्ट। वञ्चु वञ्चने। अतिशयेन वञ्चति। यङ्। द्वित्वम्। पूर्वस्य नीगागमः। वनीवच्यते। अनेन नोलोपः। इति सूत्रेण नकारलोपः। लिट्लकारे। कासादि०। वनीवचाञ्चक्रे। लुङ्लकारे साधनं तु पूर्ववत्। अवनी-

दंशिष्ट । इत्यादीनि भवन्ति । दंश दशने । अतिशयेन दशति । यङ् । अन्यत् साधनं पूर्ववत् । नीगागमः । नीलोपः । दनीदश्यते । लिट् । कासादि० । दनीदशाञ्चक्रे । लुङ् । अदनीदशिष्ट । स्कन्दिर् गतिशोषणयोः । अतिशयेन स्कन्दति । अतिशये नीगागमः । नीलोपः । कुहोश्चुः । चनीस्कद्यते । लिट् । चनीस्कदाञ्चक्रे । लुङ् । अचनीस्कदिष्ट । कस गतौ । अतिशयेन कसति । यङ् । द्वित्वादिकम् । नीगागमः । कुहोश्चुः । चनीकस्यते । लिट्लकारे । कासादि० अनेनाम् । अनपि च । चनीकसाञ्चक्रे । लुङ् । अचनीकसिष्ट । पत्लृ । पतने । अतिशयेन पतति । यङ् । अन्यत् सुगमम् । नीगागमः । पनीपत्यते । लिट् । कासादि० । पनीपताञ्चकार । लुङ्लकारे । अपनीपतिष्ट । डुकृञ् करणे । अतिशयेन करोति । अतिशये० अनेन यङ् ।

## ऋतो रिः ।

ऋकारस्य रिरादेशो भवति यङि सति । ततो द्वित्वम् ये । चेक्रीयते, चेक्रीयाञ्चक्रे, जेह्रीयते ।

ऋतो रिः । ऋतः ( ष० ए० ) । रिः ( प्र० ए० ) । ऋकारान्तस्य धातोः रि इत्यादेशो भवति यङि सति । ये अनेन दीर्घः । ततो द्वित्वम् । ह्रस्वः । पूर्वस्य कुहोश्चुः । यङि अनेन गुणः । चेक्रीयते । चतुर्णां सुगमानि । लिट् । कासादि० । चेक्रीयाञ्चक्रे । लुङ्लकारे । अचेक्रीयिष्ट । इत्यादीनि । हृञ् हरणे । अतिशयेन हरति । यङ् । द्वित्वादिकम् । पूर्वम् ऋतो रिः । अन्यत् सुगमम् । जेह्रीयते । लिट्लकारे । कासादि० । जेह्रीयाञ्चक्रे । लुङ्लकारे अजेह्रीयिष्ट । इत्यादीनि । दा दाने । अतिशयेन ददाति । अतिशये अनेन यङ् ।

## दादेरिः ।

अपिदाधामाङोहाक्पिबसोस्थानामिकारो भवति किति ङिति हसे परे । देदीयते, देदीयाञ्चक्रे । ये । देधीयते, मेमीयते, जेगीयते, जेहीयते, पेपीयते, सेषीयते, तेष्ठीयते ।

दादेरिः । दादेः ( ष० ए० ) । रिः ( प्र० ए० ) । अपिदा धा मा गा हाक् पिब सो स्थानाम् । एतेषां धातूनां इकारो भवति किति ङिति हसे परे । षष्ठी० अनेन अन्तस्य भवति । ततो ये अनेन दीर्घः । ततो द्वित्वम् । ह्रस्वः । गुणः । अन्यत् साधनं सुगमम् । देदीयते । लिट् । कासादि० । देदीया-

चक्रे। लुङ्लकारे। अदेदीयिष्ट। इत्यादीनि भवन्ति। डुधाञ् धारणपोषणयोः। अतिशयेन दधाति। यङ्। दादेरिः। अन्यत् सुगमम्। देधीयते। लिट्लकारे। कासादि०। देधीयाञ्चक्रे। लुङ्लकारे। अदेधीयिष्ट। इत्यादीनि। मा माने। अतिशयेन माति। यङ्। दादेरिः। मेमीयते। लिट्। मेमीयाञ्चक्रे। लुङ्। अमेमीयिष्ट। इत्यादीनि। गाङ् गतौ। अतिशयेन गाते। यङ्। दादेरिः। अन्यत् सुगमम्। जेगीयते। लिट्। जेगीयाञ्चक्रे। लुङ्। अजेगीयिष्ट। इत्यादीनि। पा पाने। अतिशयेन पिबति। अतिशये। यङ्। दादेरिः। अन्यत् सुगमम्। पेपीयते। लिट्लकारे। कासादि०। पेपीयाञ्चक्रे। लुङ्। अपेपीयिष्ट। इत्यादीनि। षो अन्तकर्मणि। आदेः षः सः। अतिशयेन स्यति। यङ्। दादेरिः। षत्वम्। सेषीयते। लिट्। कासादि०। सेषीयाञ्चक्रे। लुङ्लकारे। असेषीयिष्ट। इत्यादीनि। ष्ठा गतिनिवृत्तौ। आदेः षः सः। अतिशयेन तिष्ठति। अतिशये। यङ्। दादेरिः। गुणः। षत्वम्। तेष्ठीयते। चतुर्णां सुगमानि। लिट्लकारे। कासादि०। अनेनाम् तेष्ठीयाञ्चक्रे। लुङ्लकारे। अतेष्ठयिष्ट। इत्यादीनि। घ्रा गन्धोपादाने। अतिशयेन जिघ्रति। यङ्।

## घ्राध्मोरी:।

### अनयोरीकारो भवति यङि सति। जेघ्रीयते, देध्मीयते।

घ्राध्मोरिः। घ्राध्मोः (ष० द्वि०)। ई: (प्र० ए०)। घ्रा ध्मा अनयोर्धात्वोरीकारो भवति। यङि सति। षष्ठी० अनेनान्त्यस्य। ततो द्वित्वम्। पूर्वस्य रूपानाम्। अन्यत् सुगमम्। जेघ्रीयते। लिट्लकारे। कासादि०। जेघ्रीयाञ्चक्रे। लुङ्लकारे। अजेघ्रीयिष्ट। इत्यादीनि। ध्मा शब्दाग्निसंयोगयोः। अतिशयेन धमति। यङ्। घ्राध्मोरिः। अनेनेकारः। द्वित्वम्। पूर्वस्य। अन्यत् सुगमम्। देध्मीयते। देध्मीयाञ्चक्रे। अदेध्मीयिष्ट। इत्यादीनि। हन् हिंसागत्योः। अतिशयेन हन्ति। यङ्।

## हन्तेर्हिंसायां घ्नी वा वाच्यः।

### जेघ्नीयते। जमजपां नुक्। हिंसत्वस्य हन्तेः कुत्वं वाच्यम्। जङ्घन्यते।

हन्तेः। हन्तेर्धातोर्हिंसायां वा घ्नी वाच्यः। ततो द्वित्वादिकम्। अन्यत् साधनं सुगमम्। जेघ्नीयते। जेघ्नीयाञ्चक्रे। अजेघ्नीयिष्ट। इत्यादीनि भवन्ति।

हिंसाभावे तु। विरक्तस्य अनेन कुलम् अमजपां० अनेन लुक्। नश्चापदान्ते। जङ्गन्यते। लिट् जङ्गनाञ्चक्रे। लुङ्लकारे। अजङ्गनिष्ट। इत्यादीनि। चायृ सन्तानपालनयोः।

## चायो यङि की वाच्यः।

### चायृ सन्तानपालनयोः। चेकीयते।

चायः। चायो धातोः की वाच्यः यङि परे। अनेन कीः। कुहोश्चुः। गुणः। चेकीयते। लिट्लकारे कासादि०। चेकीयाञ्चक्रे। सिसता० चेकीयिषीष्ट। चेकीयिता। चेकीयिष्यते। अचेकीयिष्यत। लुङ्लकारे। अचेकीयिष्ट। इत्यादीनि। कु शब्दे। अतिशयेन कवति। यङ्। द्वित्वम्।

## कवतेर्यङि चुत्वाभावो वाच्यः।

### कु शब्दे। कोकूयते।

कवतेः। कवतेर्धातोर्यङि चुत्वाभावो वाच्यः। अनेन चुत्वनिषेधः। ये। गुणः। कोकूयते। लिट्। कासादि०। कोकूयाञ्चक्रे। लुङ्लकारे। अकोकूयिष्ट। इत्यादीनि। शीङ् स्वप्ने। अतिशयेन शेते। अतिशये अनेन यङ्।

## शीङोऽयङ् क्ङिति ये वक्तव्यः।

### शाशय्यते। ढौकृ गतौ। डोढौक्यते। त्रौकृ गतौ। तोत्रौक्यते। इति यङ्प्रक्रिया।

शीङः। शीङो धातोरयङ् क्ङिति यप्रत्यये परे वक्तव्यः। ङिदन्तस्य। पश्चात् द्वित्वम्। आतः। यतः। शाशय्यते। लिट्लकारे। शाशय्याञ्चक्रे। अशाशयिष्ट। इत्यादीनि भवन्ति। ढौकृ गतौ। अतिशयेन ढौकति। यङ्। द्वित्वम्। ह्रस्वः। गुणः। झपानाम् डोढौक्यते। लिट्लकारे। डोढौकाञ्चक्रे। लुङ्लकारे। अडोढौकिष्ट। इत्यादीनि। त्रौकृ गतौ। अतिशयेन त्रौकति। यङ्। द्वित्वम्। पूर्वस्य। ह्रस्वः। गुणः। तोत्रौक्यते। लिट्लकारे। तोत्रौकाञ्चक्रे। लुङ्लकारे। अतोत्रौकिष्ट। अतोत्रौकिषाताम्। अतोत्रौकिषत। इत्यादीनि भवन्ति। इति यङ्प्रक्रिया समाप्ता।

## अथ यङ्लुक्प्रक्रिया निरूप्यते।

अथ यङ्लुक्प्रक्रिया कथ्यते ।

## वान्यत्र लुगनुवर्त्तते ।

### अन्यत्रेत्यच्प्रत्ययसंयोगं विनापि वा यङो लुग्भवति ।

वान्यत्र । द्विपदं सूत्रम् । लुक् एतत् पदम् पूर्वसूत्रादनुवर्त्तते । अनुवृत्ति-क्रमस्तु । सूत्रपाठाद् ज्ञातव्यः । अन्यच अच्प्रत्ययसंयोगं विनापि वातिशयार्थे विहितस्य यङ्प्रत्ययस्य लुग् भवति । चन्द्रकीर्त्यां तु, उक्प्रत्यये परे यङो लुग् भवति । अन्यत्रापि उकप्रत्ययाभावेऽपि यङो लुग् भवतीति व्याख्यातम् । वाग्रहणात् क्वचित् । यङो लोपो न भवति । अनेन यङो लोपः । भू सत्ता-याम् । अस्य धातोरतिशयार्थे विहितस्य यङो लोपः । यङ्लुगन्तं धातुरूपं परस्मैपदे प्रयोज्यम् । तच्च ह्वादिवत् साध्यम् । ह्वादित्वात् । ह्वार्दद्विश्च । अनेनाम् । 'कर्त्तरि' अनेन सूत्रेण विहितस्यापी लुग् भवति । लुकि कृते सति धातोर्द्विलं च भवति । अनेन व्याख्यानेनापी लुक् धातोर्द्वित्वम् । यङि अनेन गुणः । 'झपानां' अनेन भस्य व. ।

## लुकि सति पितित्स्मिवा ईकारो वक्तव्यः ।

बोभवीति बोभोति बोभूतः बोभुवति । यङ्लुगन्तं परस्मै-पदं ह्वादिवच्च द्रष्टव्यम् । ह्वादित्वादपो लुक् द्वित्वमपि ज्ञातव्यम् । बोभूयात् । बोभवीतु बोभोतु बोभूतात् बोभूताम् बोभुवतु । अबोभवीत् । अबोभोत् अबोभूताम् अबोभवुः । बोभवाञ्चकार, बोभूयात्, बोभविता, बोभविष्यति, अबोभ-विष्यत् । दादेः पे । गुणं बाधित्वा नित्यत्वाद्वुक् । अबो-भूवीत् अबोभोत् अबोभूताम् अबोभुवुः । पापचीति पापक्ति पापक्तः पापचति । पापच्यात् । पापचीतु पापक्तु । झसा-द्धिर्हेः । पापग्धि । अपापचीत्, अपापक्, पापचाञ्चकार, पापच्यात्, पापचिता, पापचिष्यति, अपापचिष्यत्, अपा-पचीत् ।

लुकि०। लुकि कृते पिति, तकारे, सकारे, मकारे च परे वा ईट् वक्तव्यः। अनेन ईट्। गुणः। अनेन गुणो न भवति। भीच्च्। बीभवीति। यदा ईट् न भवति। तदा गुणो भवति। बीभोति। बीभूतः। नुधातोः। अनेनोव्। बीभुवति। बीभवीषि। बीभोषि। बीभूथः। बीभूथ। बीभवीमि। बीभोमि। बीभूवः। बीभूमः। बीभूयात्। बीभूयाताम्। बीभूयुः। बीभवीतु। बीभोतु। बीभूतात्। बीभूतां बीभुवतु। बीभूहि बीभूतात्। बीभूतम्। बीभूत। बीभवानि। बीभवाव। बीभवाम। दिबादावट्। अबीभवीत्। अबीभोत्। अबीभूताम्। अन उस्। उसि परे गुणः। अबीभवुः। अबीभवीः। अबीभोः। अबीभूतम्। अबीभूत। अबीभवम्। अबीभूव। अबीभूम। कासादि०। अनेनाम्। गुणः। बीभवाञ्चकार। बीभवामास। बीभवाम्बभूव। बीभूयात्। सिसता०। अनेनेट्। गुणः। बीभविता। बीभविष्यति। अबीभविष्यत्। लुङ्लकारे। दादेः पे। अनेन सेर्लोपः। गुणं बाधित्वा नित्यत्वाद्वुक्। अबीभूवीत्। इडभावे गुणः। अबीभोत्। अबीभूताम्। अन उस्। गुणः। अबीभवुः। अबीभवीः। अबीभोः। अबीभूतम्। अबीभूत। अबीभूवम्। अबीभूव। अबीभूम। पच् धातोर्यङो लुकि कृते। साधनं तु पूर्ववत्। 'आतः' अनेन सूत्रेण पूर्वस्याकारस्याकारः लुकि सति। अनेन वा ईट्। पापचीति। ईडभावे। चोः कुः। पापक्ति। पापक्तः। पापचति। अन्यानि सुगमानि। पापच्यात्। पापचीतु। पापक्तु। पापक्तात्। पापक्ताम्। पापचतु। हौ परे। झसाद्धिर्हिः। चोः कुः। झबे जबाः। पापग्धि। अन्यानि सुगमानि। अपापचीत्। ईडभावे। चोः कुः। दिस्योर्हसात्। अपापक्। अपापक्ताम्। अपापचुः। अन्यानि सुगमानि। लिट्। कासादि०। पापचाञ्चकार। पापच्यात्। अनपि धातुः प्रत्ययान्तः सन् सेड् भवति। पापचिता। पापचिष्यति। अपापचिष्यत्। लुङ्। दाविटौ। सेर्लोपः। अपापचीत्। अपापचिष्टाम्। अपापचिषुः। इत्यादीनि। भुज् पालनाभ्यवहारयोः। यङो लुकि कृते सति। अन्यत् साधनं तु पूर्ववत्। 'उपधाया लघोः' अनेन गुणे प्राप्ते।

## द्वेः।

**द्विरुक्तस्य पिति सार्वधातुके स्वरेऽपि नोपधाया गुणः। बोभुजीति-बोभोक्ति। अबोभुजीत्-अबोभोक्। वावदीति वावत्ति। जाघटीति-जाघट्टि।**

द्वेः। द्वेः (ष० ए०)। 'द्विरुक्तस्य धातोः पिति सार्वधातुके स्वरे परेऽपि

उपधाया गुणो न भवति। अनेन गुणनिषेधः। बीभुजति। ईडभावे। चोः कुः। खसे०। उपधाया लघोः। बीभीक्ति। बीभुक्तः। बीभुजति। हि:। अनेनात्र अन्त अत्। अन्यानि सुगमानि। बीभुज्यात्। बीभुजीतु। बीभीक्तु। ह्रौ परे। झसाद्धिर्ढः। चोः कुः। झबेजबाः। बीभुग्धि। अन्यानि सुगमानि। अबीभुजीत्। ईडभावे। चोः कुः। दिस्योरीट्सात्। वावसाने। अबीभीक्। अबीभुक्ताम्। अबीभुजुः। इत्यादीनि। लिट्। कासादि०। बीभीजाञ्चकार। इत्यादीनि। बीभुज्यात्। सिसता०। बीभीजिता। बीभीजिष्यति। अबीभीजिष्यत्। लुङ्। अबीभीजीत्। वद व्यक्तायां वाचि। यङो लुक्। आतः। अनेन पूर्वस्याकारः। लुकि सति अनेन ईट्। वावदीति। ईडभावे। खसे०। वावत्ति। वावत्तः। वावदति। इत्यादीनि। वावद्यात्। वावदीतु। वावत्तु। ह्रौपरे। झसाद्धिर्ढः। वावद्धि। अवावदीत्। ईमभावे अवावत्। अवावत्ताम्। अवावदुः। इत्यादीनि। लिट्। कासादि०। वावदाञ्चकार। वावद्यात्। सिसता०। वावदिता। वावदिष्यति। अवावदिष्यत्। लुङ्। ह्राविटौ। सेर्लोपः। अवावदीत्। अवावदिष्टाम्। अवावदिषुः। घट चेष्टायाम्। यङो लुक्। द्विलम्। कुहोश्चुः। आतः। लुकि सति। अनेन ईट्। जाघटीति। ईडभावे। ष्टभिः ष्टुः। जाघट्टि। जाघट्टः। जाघटति। जाघट्यात्। जाघटीतु। जाघट्टु। ह्रौ परे। झसाद्धिर्ढः। ष्टुलम्। जाघड्ढि। अजाघटीत्। ईडभावे। अजाघट्। लिट्। कासादि०। जाघटाञ्चकार। जाघट्यात्। जाघटिता। जाघटिष्यति। अजाघटीत्। डुकृञ् करणे। यङ्लुकि सति। द्विलम्। रः। कुहोश्चुः।

## ऋकारान्तानामृदुपधानां च यङ्लुकि सति पूर्वस्य रुक्रिक्रीक् आगमा वक्तव्याः।

रः। डुकृञ् करणे। चर्करीति-चरिकरीति-चरीकरीति। चर्कर्त्ति-चरिकर्त्ति चरीकर्त्ति-चर्कृतः-चरिकृतः-चरीकृतः चर्क्रति-चरिक्रति चरीक्रति। अचर्कारीत्। अचरिकारीत् अचरीकारीत्। वर्वृतीति वरिवृतीति वरीवृतीति। वर्वर्त्ति वरिवर्त्ति वरीवर्त्ति। अवर्वृतीत् अवरिवृतीत् अवरीवृतीत्।

ऋकारान्तानाम् । कित्त्वादन्ते । रुक् इत्यत्र उकार उच्चारणार्थः । ककारः कित्कार्यार्थः । अतीर इत्यागमः । रिक्रीकौ तु यथास्थितौ । तत्र ककारः कित्कार्यार्थः । लुकि सति । अनेन पित्यडागमौ वा भवति । रुगागमे कृते ईडागमे कृते । चर्करीति । अत्र गुणो भवति । रिगागमे कृते । चरिकरीति । रीगागमे कृते । चरीकरीति । ईडभावेऽपि त एवागमा भवन्ति । चर्कर्त्ति । चरिकर्त्ति । चरीकर्त्ति । द्विवबहुलयोस्तु रुक्रिक्रीगागमेषु कृतेषु सत्सु प्रत्येकं त्रीणि रूपाणि भवन्ति । चर्कृतः । चरिकृतः । चरीकृतः । अन्त अत् । ऋरम् । पूर्वोक्ता आगमा भवन्ति । चर्कृति । चरिकृति । चरीकृति । एवं प्रथमपुरुषे द्वादशरूपाणि भवन्ति । मध्यमपुरुषेऽपि द्वादशरूपाणि भवन्ति । चर्करीषि । अत्र षत्वं च भवति । चरिकरीषि । चरीकरीषि । ईडभावे । चर्कर्षि । चरिकर्षि । चरीकर्षि । चर्कृथः । चरिकृथः । चरीकृथः । चर्कृथ । चरिकृथ । चरीकृथ उत्तमपुरुषेऽपि द्वादश । ईड् वा भवति । चर्करीमि । चरिकरीमि । चरीकरीमि । चर्कृवः । चरिकृवः । चरीकृवः । चर्कृमः । चरिकृमः । चरीकृमः । एवं षट्त्रिंशद्रूपाणि वर्त्तमाने स्युः । विधिसम्भावनयोः । एते आगमा भवन्ति । चर्कृयात् । चरिकृयात् । चरीकृयात् । चर्कृयाताम् । चरिकृयाताम् । चरीकृयाताम् । चर्कृयुः । चरिकृयुः । चरीकृयुः । चर्कृयाः । चरिकृयाः । चरीकृयाः । चर्कृयातम् । चरिकृयातम् । चरीकृयातम् । चर्कृयात । चरिकृयात । चरीकृयात । चर्कृयाम् । चरिकृयाम् । चरीकृयाम् । चर्कृयाव । चरिकृयाव । चरीकृयाव । चर्कृयाम । चरिकृयाम । चरीकृयाम । लोट्लकारे ईडागमे त्रीणि रूपाणि । तदभावे त्रीणि रूपाणि भवन्ति । अन्यत्र यथासम्भवम् । चर्करीतु । चरिकरीतु । चरीकरीतु । ईडभावे । चर्कर्त्तु । चरिकर्त्तु । चरीकर्त्तु । तातङादेशे कृते । चर्कृतात् । चरिकृतात् । चरीकृतात् । एवं तुपि नव रूपाणि । द्विवचनेऽपि त्रीणि रूपाणि । चर्कृताम् । चरिकृताम् । चरीकृताम् । बहुवचने त्रीणि रूपाणि । झेः अनेन अन्त अत् । ऋरम् । चर्क्रतु । चरिक्रतु । चरीक्रतु । मध्यमपुरुषे । चर्कृहि । चरिकृहि । चरीकृहि । तातङादेशे । चर्कृतात् । चरिकृतात् । चरीकृतात् । चर्कृतम् । चरिकृतम् । चरीकृतम् । चर्कृत । चरिकृत । चरीकृत । उत्तमपुरुषे । पित्त्वात् गुणः । णलम् । चर्कराणि । चरिकराणि । चरीकराणि । चर्कराव । चरिकराव । चरीकराव । चर्कराम । चरिकराम । चरीकराम । एवमाशीःप्रेरणयोः षट्त्रिंशद्रूपाणि । लङ् । त्रिष्विमागमः । दिबादावट् । अचर्करीत् । अचरिकरीत् । अचरीकरीत् । ईडभावे । दिस्योर्हसात् । सोर्विसर्गः । अचर्कः । अचरिकः । अचरीकः । अचर्कृताम् । अचरिकृताम् । अचरीकृताम् । अन उस् । गुणः । अचर्करुः ।

अचरिकरुः। अचरीकरु। अचर्करीः। अचरिकरीः। अचरीकरीः। ईड-भावे। दिस्योर्हसात्। खोर्विसर्गः। अचरिकाः। अचरीकाः। अचर्कृतम्। अचरिकृतम्। अचरीकृतम्। अचर्कृत। अचरिकृत। अचरीकृत। अचर्करम्। अचरिकरम्। अचरीकरम्। अचर्कृव। अचरिकृव। अचरीकृव। अचर्कृम। अचरिकृम। अचरीकृम। लिट्। कास्यादि०। चर्कराञ्चकार। चरिकराञ्च-कार। चरीकराञ्चकार। इत्यादीनि। चर्करामास। चरिकरामास। चरी-करामास। चर्कराम्बभूव। चरिकराम्बभूव। चरीकराम्बभूव। इत्यादीनि रूपाणि भवन्ति। चर्क्रियात्। चरिक्रियात्। चरीक्रियात्। सिसता० अनेन इट्। चर्करिता। चरिकरिता। चरीकरिता। इत्यादीनि। चर्करिष्यति। चरिकरिष्यति। चरीकरिष्यति। अचर्करिष्यत्। अचरिकरिष्यत्। अचरी-करिष्यत्। लुङ्। दाविटौ। सेर्लोपः। अचर्कारीत्। अचरिकारीत्। इत्या-दीनि। वृतुङ् वर्त्तने। यङ्लुकि कृते साधनं तु पूर्ववत्। अयं धातुर्ऋदु-पधोऽस्ति तस्मात् पूर्वोक्ता आगमा भवन्ति लुकि सति। अनेन ईडागमः। वर्वृतीति। वरिवृतीति। वरीवृतीति। ईडभावे। वर्वर्त्ति। वरिवर्त्ति। वरी-वर्त्ति। इत्यादीनि। लिङ्। वर्वृत्यात्। वरिवृत्यात्। वरीवृत्यात्। इत्यादीनि। लोट्। वर्वृतीतु। वरिवृतीतु। वरीवृतीतु। तातङादेशः। वर्वृतात्। वरि-वृतात्। वरीवृतात्। इत्यादीनि। लुङ्। 'हिः' अनेन गुणनिषेधः। अव-र्वृतीत्। अवरिवृतीत्। अवरीवृतीत्। ईडभावे। 'संयोगान्तस्य' अनेन सकारस्य लोपे प्राप्ते।

## रात्सस्य।

**रेफादुत्तरस्य सस्यैव लोपो नान्यस्य। अवर्वत्। अवरी-वत् अवरिवत्। अवर्वृताम् अवरिवृताम् अवरीवृताम्। वर्वर्त्ताञ्चकार-वरिवर्त्ताञ्चकार-वरीवर्त्ताञ्चकार। वनीवञ्चीति वनीवङ्क्ति। नो लोपः। वनीवक्तः। वनीवचति। जङ्गमीति जङ्गन्ति। लोपस्त्वनुदात्ततनाम्। जङ्गतः। गमां स्वरे। जंग्मति। धातुग्रहणोक्तं यङ्लुकि वेति केचित्। जङ्गमति, जङ्गमीमि।**

रात्सस्य। अनेन तन्निषेधः। अवर्वर्त्। अत्र दिस्यो० अनेन लोपः। अवरिवत्। अवरीवत्। अवर्वृताम्। अवरिवृताम्। अवरीवृताम्। इत्या-

दीनि । लिट् । कासादि० । वर्वर्त्ताञ्चकार । वरिवर्त्ताञ्चकार । वरीवर्त्ताञ्चकार । वर्वर्त्तामास । वरिवर्त्तामास । वरीवर्त्तामास । वर्वर्त्ताम्बभूव । वरिवर्त्ताम्बभूव । वरीवर्त्ताम्बभूव । वर्वृत्यात् । वरिवृत्यात् । वरीवृत्यात् । सिसता० । वर्वर्त्तिता । वरिवर्त्तिता । वरीवर्त्तिता । वर्वर्त्तिष्यति । वरिवर्त्तिष्यति । वरीवर्त्तिष्यति । अवर्वर्त्तिष्यत् । अवरिवर्त्तिष्यत् । अवरीवर्त्तिष्यत् । लुङ् । अवर्वर्त्तीत् । अवरिवर्त्तीत् । अवरीवर्त्तीत् । वञ्चु वञ्चने । यङ्लुकि कृते । पूर्ववत् साधनम् । नीगागमः । लुकि सति । अनेन ईट् । वनीवञ्चीति । ईडभावे । चोः कुः । वनीवङ्क्ति । नो लोपः । वनीवक्तः । हेः । वनीवचति । इत्यादीनि । वनीवच्यात् । वनीवञ्चीतु । वनीवङ्क्तु । अवनीवञ्चीत् । अवनीवक् । इत्यादीनि । लिट् । वनीवञ्चाञ्चकार । वनीवञ्चामास । वनीवञ्चाम्बभूव । नो लोपः । वनीवच्यात् । सिसता० । वनीवञ्चिता । वनीवञ्चिष्यति । अवनीवञ्चिष्यत । अवनीवञ्चीत् । अवनीवञ्चिष्टाम् । अवनीवञ्चिषुः । गाङ् गतौ । यङ्लुकि कृते । द्वित्वादिकं कार्य्यम् । कुहोश्चुः । अनेन गस्य जः । जपजभ० अनेन पूर्वस्य मुक् । नश्चा० । लुकि सति अनेन वेट् । जङ्गमीति । ईडभावे । नश्चा० । जङ्गन्ति । लोपस्त्वनुदात्ततनां० अनेन नकारस्य लोपः । जङ्गत । गमां स्वरे । अनेनोपधालोपः । जङ्ग्मति । इत्यादीनि । धातुग्रहणोक्तं यङ्लुकि वा भवति । इति केचिदाचार्य्या वदन्ति । तेन वा नोपधालोपः । जङ्गमति । अन्यानि सूक्तौ ज्ञेयानि । जङ्गम्यात् । जङ्गमीतु । जङ्गन्तु । अजङ्गमीत् । इडभावे । दिस्योः ।

## म्वो नो धातोः ।

धातोर्मकारस्य नकारो भवति झसे पदान्ते वमयोश्च । जङ्गन्मि जङ्गन्वः जङ्गन्मः ।

म्वो नो धातोः । अजङ्गन् । इत्यादीनि रूपाणि सुगमानि । अनेनैव प्रकारेण साध्यानि । लिट्लकारे । कासादि० अनेनाम् । जङ्गमाञ्चकार । जङ्गमामास । जङ्गमाम्बभूव । इत्यादीनि । जङ्गम्यात् । सिसता० । जङ्गमिता । जङ्गमिष्यति । अजङ्गमिष्यत् । लुङ्लकारे । अजङ्गमीत् । अजङ्गमिष्टाम् । अजङ्गमिषुः । हन् हिंसागत्योः । यङ्लुकि कृते । द्वित्वादिकं सर्वं भवति । कुहोश्चुः । भपानाम् ।

## द्विरुक्तस्य हन्तेः कुत्वं वाच्यम् ।

जङ्घनीति-जङ्घन्ति जङ्घतः जङ्घति जङ्घति । जाहेति-जाहाति जाहीतः जाहति । एवं दाधेत्यादि । दादेति-दादाति दत्तः दादति । दादेतु, दादेयात्, अदादात् । एवं धेट् । दाधेति-दाधाति दाद्धः दाधति । दाधेयात्, अदाधासीत्, अदाधात्, अदाधत् । धाञ् । दाधाति धत्तः । पितोस्तु । दादेति दादीतः । दादीहि, दादायात्, अदादासीत् । जहातेः पूर्वस्य दीर्घो वेति केचित् । जहाति । इति यङ्लुक्प्रक्रिया ।

विवक्षस्य । अभजपाम् । नया० । लुकि सति । जङ्घनीति । ईडभावे । नया० जङ्घति । लोपश्चलु० । गमांस्वरे । जंघ्नति । जङ्घन्यात् । जङ्घनीतु । जङ्घन्तु । इत्यादीनि । अजङ्घनीत् । ईडभावे । अजङ्घत् । अजङ्घताम् । अजंघ्नुः । जङ्घनाञ्चकार । जङ्घनामास । जङ्घनाम्बभूव । वधादेशः । आशिषि । वध्यात् । जङ्घनिता । जङ्घनिष्यति । अजङ्घनिष्यत् । वृद्धिनिषेधः । अवधीत् । इत्यादीनि । ओहाक् त्यागे । यङ्लुकि कृते । द्वित्वादिकम् । कुहोश्चुः । ह्रस्वः । झपानाम् । आतः । लुकि सति । अनेन ईट् । अदए । जाहेति । ईडभावे । जाहाति । ङिसौ अनेनाकारस्य ईकारः । जाहीतः । जाहति । जाहीयात् । जाहेतु । जाहातु । अजाहेत् । अजाहात् । जाहाञ्चकार । जाहायात् । सिसता० । जाहिता । जाहिष्यति । अजाहिष्यत् आदन्तानाम्० । अजासीत् । दा दाने । यङ्लुकि कृते । द्वित्वादिकम् । ह्रस्वः । आतः । लुकि सति । दादेति । दादाति । दादेः । दात्तः । दादति । दाद्यात् । दादेतु । अदादेत् । अदादात् । दादाञ्चकार । दादायात् । दादिता । दादिष्यति । अदादिष्यत् । अदादासीत् । दादेः पि । अदादात् । एवम् । दाधेति । दाधाति । दाद्धः । दधाति । लिट् । दाधाञ्चकार । लुङ् । अदाधासीत् । वा सिलोपः । अदाधात् । डुधाञ् धारणपोषणयोः । अस्यापि रूपाणि पूर्ववत् । दैप् शोधने । दादेति । दादाति । दादीतः । दादति । दादीयात् । दादेतु । दादातु । अदादेत् । अदादात् । दादाञ्चकार । दादायात् । लुङ्लकारे । आदन्तानाम् । अदादासीत् । जहातेर्धातोः पूर्वस्य दीर्घो वा भवति । इति केचिदाचार्या वदन्ति । तन्मते । जहाति । इत्यादीनि रूपाणि भवन्ति । तेषां सुगमत्वात् व्याख्यानं न कृतम् । इति यङ्लुक्प्रक्रिया समाप्ता ।

## अथ नामधातुप्रक्रिया ।

अथ नामधातुप्रक्रिया कथ्यते ।

### नाम्नो य ई चास्य ।

नाम्न इच्छायामर्थे यः प्रत्ययो भवति तत्सन्नियोगेनाकारस्य ईकारः। आत्मनः पुत्रमिच्छतीति पुत्रीयति। पुत्रीयेत्, पुत्रीयति, अपुत्रीयत्। इत्यादि।

अथ नामधातुप्रक्रिया। नाम्नो य ई चास्य। नाम्नः। (प० ए०)। यः (प्र० ए०)। ईः (प्र० ए०)। च (प्र० ए०)। अस्य (ष० ए०) नाम्नःशब्दात् इच्छायां वाच्यायां यः प्रत्ययो भवति। तस्य सन्नियोगे सति अकारस्य ईकारो भवति। आत्मनः पुत्रमिच्छति इति विग्रहे। अनेन यः प्रत्ययो भवति। 'समासप्रत्ययग्रो:' अनेन विभक्तिलोपः। स धातुः। अनेन धातुत्वम्। धातुत्वात् तिबादयः। अप् कर्त्तरि। यतः। पूर्वस्य अकारस्य ईकारः। पुत्रीयति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। कासादि०। पुत्रीयाञ्चकार। पुत्रीय्यात्। सिसता०। पुत्रीयिता। पुत्रीयिष्यति। अपुत्रीयिष्यत्। अपुत्रीयीत्। इत्यादीनि। गामिच्छति। नाम्नो य ई चास्य। अनेन यः प्रत्ययः। अन्यत्तु पूर्ववत् कार्य्यम्।

### यादौ प्रत्यये ओकारौकारयोरवावौ वक्तव्यौ।

गामिच्छतीति। गव्यति। नावमिच्छतीति नाव्यति। त्वद्यति मद्यति। युष्मद्यति। अस्मद्यति। धनीयति। काम्यच्च। पुत्रमिच्छति पुत्रकाम्यति। गव्याञ्चकार।

### यकारस्यानपि वा लोपो वाच्यः।

गवाञ्चकार, गव्यात्, गव्यिता गविता। अगव्यीत् अगवीत् अगव्यिष्टाम् अगविष्टाम् अगव्यिषुः अगविषुः। नाव्यात् नाव्यिता नाविता अनाव्यीत् अनावीत्।

यादौ। यादौ प्रत्यये परे आकारौकारयोः अवावौ वक्तव्यौ। अनेन अव्। गव्यति। लिट्लकारे। कासादि०। गव्याञ्चकार। यकारस्य। हसात्। यकारस्य अनपि विषये वा लोपो वाच्यः। अनेन यकारलोपः। गवाञ्चकार। एवमन्येषामपि। नावमिच्छति। यः प्रत्ययः। आव् च भवति। नाव्यति। नाव्याञ्चकार। नावाञ्चकार। नाव्यात्। नाव्यिता। नाविता। इत्यादीनि। लुङ्लकारे। अनाव्यीत्। अनावीत्। इत्यादीनि भवन्ति। त्वामिच्छति। यः। त्वन्मदे। अनेन त्वत्। त्वद्यति। लिट्। त्वद्याञ्चकार। यकारस्य लोपे सति यानि रूपाणि भवन्ति तानि सुगमानि। लुङ्लकारे। अत्वद्यीत्। मामिच्छति। यः। मत्। मद्यति। मद्याञ्चकार। मदाञ्चकार। लुङ्लकारे। अमद्यीत्। अमदीत्। युष्मान् इच्छति युष्मद्यति। युष्मद्याञ्चकार। युष्मदाञ्चकार। लुङ्लकारे। अयुष्मद्यीत्। अयुष्मदीत्। इत्यादीनि। अस्मान् इच्छति अस्मद्यति। लिट्। अस्मद्याञ्चकार। अस्मदाञ्चकार। स्वरादेः। अनेन द्वितीयोऽडागमः। आस्मद्यीत्। आस्मदीत्। इत्यादीनि। धनमिच्छति इति विग्रहे यः प्रत्ययः। अकारस्य ईकारः। धनीयति। धनीयाञ्चकार। धनीयात्। सिसता०। धनीयिता। लुङ्लकारे। अधनीयीत्। अधनीयिष्टाम्। अधनीयिषुः। इत्यादीनि। गार्ग्यमिच्छति। यः प्रत्ययः।

## हसात्तद्धितस्य लोपो ये।

**गार्गीयति वाच्यति। हसाद्यस्य लोपो वानपि। समिध्यिता, समिधिता।**

हसात्। हसादुत्तरस्य तद्धितस्य यप्रत्यये लोपो भवति। अनेन यकारस्य लोपः। निमित्ताभावे० अनेन अलोपाभावः। अकारस्य ईकारो भवति। गार्गीयति। चतुर्णां सुगमानि। लिट्लकारे। कासादि०। गार्गीयाञ्चकार। गार्गीय्यात्। सिसता०। गार्गीयिता। गार्गीयिष्यति। अगार्गीयिष्यत्। लुङ्लकारे। अगार्गीयीत्। वाचमिच्छति। यः प्रत्ययः। अन्यत् पूर्ववत्। वाच्यति। वाच्याञ्चकार। वा यकारलोपः। वाचाञ्चकार। अन्येषां सुगमानि अनेनैव प्रकारेण साध्यानि। लुङ्लकारे। अवाच्यीत्। अवाचीत्। समिधमिच्छति। समिध्यति। समिध्याञ्चकार। वा यलोपः। समिधाञ्चकार। सिसता०। समिध्यिता। समिधिता। लुङ्लकारे। असमिध्यीत्। असमिधीत्। इत्यादीनि।

## मान्ताव्ययाभ्यां यो न।

किमिच्छति इदमिच्छति स्वरिच्छति।

मान्ताव्ययाभ्याम्०। मान्तशब्दात् अव्ययात् यः प्रत्ययो न भवति। अतो वाक्यमेव भवति। किमिच्छति। इदमिच्छति। स्वरिच्छति। इत्यादीनि।

## करणे च।

नाम्नः करणेऽर्थे यः प्रत्ययो भवति। कण्डूं करोतीति कण्डूयति, नमस्यति, तपस्यति, वरिवस्यति। गुरून् शुश्रूषत इत्यर्थः।

करणे। करणे (स० ए०) नाम्नः करणेऽर्थे यः प्रत्ययो भवति। कण्डू करोति अनेन यः। ये अनेन पूर्वस्य दीर्घः। अन्यत् साधनं तु पूर्ववत्। कण्डूयति। लिट्लकारे। कण्डूयाञ्चकार। लुङ्लकारे। अकण्डूयीत्। नमः करोति। यः प्रत्ययः। नमस्यति। चतुर्णां सुगमानि। नमस्याञ्चकार। नमस्यात्। नमस्यिता। लुङ्लकारे। अनमस्यीत्। इत्यादीनि। तपः करोति। यः प्रत्ययः। तपस्यति। तपस्याञ्चकार। अतपस्यीत्। अतपसीत्। यलोपस्य विकल्पः। वरिवस्शब्दस्य यः प्रत्ययः। अन्यत् साधनं पूर्ववत्। वरिवस्यति। वरिवस्याञ्चकार। वरिवसाञ्चकार। अवरिवस्यीत्। अवरिवसीत्। इत्यादीनि भवन्ति। गुरून् शुश्रूषते इत्यर्थः।

## क्षीरलवणयोस्तृष्णायां यः सुट् च।

क्षीरस्यति, लवणस्यति।

क्षीरलवणयोः। क्षीरलवणयोः शब्दयोस्तृष्णायामिच्छायां यः प्रत्ययो भवति। सुट् च भवति प्रत्ययस्य। क्षीरमिच्छति। यः सुट्। अन्यत्तु पूर्ववत्। क्षीरस्यति। क्षीरस्याञ्चकार। क्षीरसाञ्चकार। लुङ्लकारे। अक्षीरस्यीत्। अक्षीरसीत्। लवणमिच्छति। यः। सुट्। लवणस्यति। लवणस्याञ्चकार। लवणसाञ्चकार। लवणस्यात्। सिसता०। लवणस्यिता। लवणसिता। लुङ्लकारे। अलवणस्यीत्। अलवणसीत्। इत्यादीनि।

## शब्दादिभ्यो यङ्।

ये। शब्दायते, वैरायते, कलहायते, अभ्रायते, मेघायते, कष्टायते।

शब्दादिभ्यः। शब्दादिभ्यः शब्देभ्यो यङ्प्रत्ययो भवति। ङकार आत्मनेपदार्थः। अयमपि प्रत्ययः करोत्यर्थे। शब्दं करोति। यङ्प्रत्ययः। ङकारो ङित्कार्य्यार्थः। ये अनेन पूर्वस्य दीर्घः। शब्दायते। लिट्लकारे। शब्दायाञ्चकार। लुङ्लकारे। अशब्दायिष्ट। इत्यादीनि। कलहं करोति। यङ्। ये कलहायते। कलहायाञ्चक्रे। लुङ्लकारे। अकलहिष्ट। वैरं करोति। यङ्। ये। वैरायते। वैरायाञ्चक्रे। वैराय्यात्। सिसता०। वैरायिता। वैरायिष्यते। अवैरायिष्यत। अवैरायिष्ट। इत्यादीनि। अभ्रं करोति। यङ्। ये। अभ्रायते। अभ्रायाञ्चक्रे। स्वरादेः। आभ्रयिष्ट। मेघं करोति। यङ्। ये। मेघायते। मेघायाञ्चक्रे। अमेघायिष्ट। कष्टं करोति। यङ्। ये। कष्टायते। कष्टायाञ्चक्रे। अकष्टायिष्ट। इत्यादीनि।

## ऊष्मबाष्पाभ्यामुद्वमने यङ् वाच्यः।

ऊष्माणमुद्वमति ऊष्मायते, बाष्पायते।

ऊष्मबाष्पाभ्याम्०। ऊष्मबाष्पाभ्यां शब्दाभ्यामुद्वमनेऽर्थे यङ्प्रत्ययो भवति। ऊष्माणमुद्वमति। यङ्। नकारलोपः। ये। ऊष्मायते। ऊष्मायाञ्चकार। स्वरादेः। औष्मायिष्ट। बाष्पमुद्वमति। यङ्। ये। बाष्पायते। बाष्पायाञ्चक्रे। अबाष्पायिष्ट। इत्यादीनि भवन्ति। सुगमत्वात् सर्वाणि न लिखितानि।

## ञिर्डित्करणे।

नाम्नो ञिः प्रत्ययो भवति करणेऽर्थे स च। डित् ञकार उभयपदार्थः। घटं करोतीति घटयति। अग्लोपिनो नाङ्कार्य्यम्। अजघटत्। महान्तं करोतीति महयति, अममहत्।

ञिर्डित्करणे। ञिः (प्र० ए०) डित् (प्र० ए०) करणे (स० ए०) नाम्नो ञिः प्रत्ययो भवति करणेऽर्थे स प्रत्ययो डित् भवति च। ञकार उभयपदार्थः। डित्त्वाट्टिलोपः। घटं करोति। इति विग्रहे। अनेन ञिः प्रत्ययः। टिलोपः। अन्यत् पूर्ववत्। घटयति। घटयते। घटयाञ्चकार। लुङ्लकारे।

णेरङ् द्विश्च । 'अग्लोपिनो नाङ्कार्यं इति उक्तत्वात् । अङि लघौ । लघोर्दीर्घः । द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । णेः । ऋपानाम् । अजघटत् । महान्तं करोति । ञि: प्रत्ययः । टिलोपः । महयति । महयाञ्चकार । लुङ्लकारे । अममहत् ।

## आविष्ठवत्कार्य्यम् ।

ञौ । ञिप्रत्यये परे इष्ठवत् कार्य्यं भवति । द्वितीयम् ।

## पृथ्वादेरः ।

पृथ्वादेर्ऋकारस्य रो भवति ञौ परे । पृथुं करोति, प्रथयति, म्रदयति, द्रढयति । स्थूलं करोति स्थावयति । अङि लघौ ह्रस्व उपधायाः । अतिस्थवत् । दवयति, अदीदवत् । प्रियं करोति प्रापयति । गुरुं करोति गरयति । स्थिरं करोति स्थापयति । ऊढिं करोतीति ऊढयति । णेरङ् द्विश्च । णेः । स्वरादेः परः । अङि पूर्वस्य ढस्य वा जः । औढिढत्, औजिढत्, ऊढं करोतीति ऊढयति ।

**वहः क्तान्तक्तौ कृतसम्प्रसारे ह्वो ढस्तयोर्द्वः ऋभिना ढि ढस्य ।**
**ऊढिश्च ञिडित्कारणे स धातुर्णेरङ् स्वरादेर्द्वंज औजढच्च ॥ १ ॥**
**औजढत् ।**

पृथ्वादेरः । पृथ्वादेः ( ष० ए० ) रः ( प्र० ए० ) पृथ्वादेर्ऋकारस्य रकारो भवति । पृथुं करोति । ञिः । टेर्लोपः । रः । प्रथयति । प्रथयाञ्चकार । लुङ् । णेरङ् द्विश्च । अपप्रथत् । मृदुं करोति । ञिः । टिलोपः । रः । म्रदयति । म्रदयाञ्चकार । लुङ् । अमम्रदत् । स्थूलं करोति । ञिः । स्थूलस्य स्थव् । स्थवयति । स्थवयाञ्चकार । लुङ् । णेरङ् । ग्रसात् । अङि लघौ । अतिस्थवत् । दूरं करोति । ञिः । दूरस्य दव । दवयति । दवयाञ्चकार । लुङ् । सर्वं कार्य्यं भवति । अदीदवत् । प्रियं करोति । ञिः । प्रियस्य प्रादेशः । रातो ञौ पुक् च । प्रापयति । प्रापयाञ्चकार । लुङ् । अपिप्रपत् । अपिप्रपताम् । अपिप्रपन् । 'गुरुं करोति । ञिः । गुरोर्गरादेशः । गरयति ।

जरयाञ्चकार। अजगरत्। अलोप्ययं धातुः। स्थिरं करोति। णिः। स्थिरस्य स्थादेशः। पुक्। स्थापयति। स्थापयाञ्चकार। लुङ्लकारे। अतिस्थपत्। ऊढिं करोति। णिः। टिलोपः। ऊढयति ऊढयाञ्चकार। लुङ्। णेरङ्। स्वरादेः परः। णेः। स्वरादेः। औढिढत्। अङि पूर्वस्य ढस्य वाजः। औजिढत्। ऊढं करोति। णिः। टेर्लोपः। ऊढयति। ऊढयाञ्चकार। लुङ्लकारे। श्लोकक्रमेण साधनं कार्य्यम्। औजढत्। औजढताम्। औजढन्। इत्यादीनि।

## कर्त्तुर्यङ्।

**कर्त्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति। श्येन इव आचरतीति श्येनायते काकः। पण्डितायते मूर्खः।**

कर्त्तुर्यङ्। कर्त्तुः ( पं० ए० ) यङ् ( प्र० ए० ) कर्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। श्येन इव आचरति। इति विग्रहे। अनेन सूत्रेण यङ्। ये। अन्यत् पूर्ववत्। श्येनायते। श्येनायाञ्चक्रे। लुङ्लकारे। अश्येनायिष्ट। काकः श्येनायते। पण्डित इव आचरति। यङ्। ये। पण्डितायते। पण्डितायाञ्चक्रे। लुङ्। अपण्डितायिष्ट। अप्सरा इव आचरति। यङ्।

## यङि सलोपो वाच्यः।

**पयसस्तु विभाषया। अप्सरायते ओजायते पयायते पयस्यते सुमनायते।**

यङि। यङि परे सकारस्य लोपो वाच्यः। द्वितीयं पयस्शब्दस्य विकल्पेन भवति। ये। अप्सरायते। अप्सरायाञ्चक्रे। स्वरादेः। आप्सरायिष्ट। ओज इव आचरति। यङ् सकारलोपः। ये। पयायते। वा ग्रहणात्। पयस्यते। पयायाञ्चक्रे। पयस्याञ्चक्रे। यलोपो वा। पयसां चक्रे। अपयायिष्ट। अपयस्यिष्ट। अपयसिष्ट। इत्यादीनि। सुमना इव आचरति। यङ्। सलोपः। ये। अन्यत् पूर्ववत्। सुमनायते। लिट्। कासादि०। सुमनायाञ्चक्रे। लुङ्। असुमनायिष्ट।

## नाम्न आचारे क्विप् वाच्यः।

**कृष्ण इव आचरति कृष्णति। क्विपो लोपः।**

नाम्नः । नाम्नः पदात् आचारेऽर्थे क्विप्प्रत्ययो वाच्यः । कृष्ण इव आचरतीति । क्विप् प्रत्ययः । क्विपो लोपः । क्विप्प्रत्ययस्य लोपो भवति । स धातुः । पश्चात् । लोपः कार्य्यः । अप्कर्त्तरि । कृष्णति । लिट् । कासादि० । कृष्णाञ्चकार । कृष्णयात् । सिसता० । कृष्णिता । लुङ् । अकृष्णीत् ।

## आचार उपमानात् ।

**कर्माधारयोरुपमानात् यः प्रत्ययो भवति आचारेऽर्थे । आकारस्येकारः । पुत्रीयति शिष्यमुपाध्यायः । प्रसादीयति कुड्याम् ।**

आचारे उपमानात् । आचारे ( स० ए० ) उपमानात् ( पं० ए० ) कर्माधारयोरुपमानात् आचारेऽर्थे यप्रत्ययो भवति । अकारस्य ईकारः । पुत्र इव आचरति । अनेन यः प्रत्ययः अकारस्य ईकारः । अन्यत् साधनं तु पूर्ववत् । पुत्रीयति शिष्यमुपाध्यायः । प्रासाद इव आचरतीति यः प्रत्ययः । अकारस्य ईकारः । प्रासादीयति कुड्यं भिक्षुः । लिट् । प्रासादीयाञ्चकार । लुङ् । अप्रासादीयीत् ।

## भृशादिभ्योऽभूततद्भावे यङ् वाच्यः ।

**अभृशो भृशो भवतीति भृशायते । श्यामायते इत्यादि ।**

भृशादिभ्यः । भृशादिभ्यः शब्देभ्योऽभूततद्भावे यङ्प्रत्ययो वाच्यः । अभृशो भृशो भवतीति यङ् । ये । भृशायते । लिट् । भृशायाञ्चक्रे । लुङ् । अभृशायिष्ट । अश्यामः श्यामो भवतीति यङ् । ये । श्यामायते । लिट् । श्यामायाञ्चक्रे । लुङ् । अश्यामायिष्ट ।

## अश्ववृषयोर्मैथुनेच्छायां यः प्रत्ययः सुगागमश्च ।

**अश्वस्यति वडवा । वृषस्यति गौः ।**

अश्ववृषयोः । अश्ववृषयोः शब्दयोर्मैथुनेच्छायां यः प्रत्ययो भवति । सुगागमश्च भवति । अश्व इव आचरतीति । यः । सुगागमः । अश्वस्यति । अश्वस्याञ्चकार । आश्वसीत् । वृष इव आचरतीति । यः । सुक् । वृषस्यति गौः । पुरुष इव आचरतीति । यः । सुक् । पुरुषस्यति कामातुरा ।

## सुखादिभ्यो ज्ञापनायां यङ्।

**सुखं ज्ञापयति सुखायते। इति नामधातुप्रक्रिया।**

सुखादिभ्यः। सुखादिभ्यः शब्देभ्यो ज्ञापनायां यङ्प्रत्ययो भवति। सुखं ज्ञापयतीति। यङ्। ये। सुखायते। सुखायाञ्चक्रे। असुखायिष्ट। इत्यादीनि। इति नामधातुप्रक्रिया समाप्ता।

## अथात्मनेपदव्यवस्था।

अथ आत्मनेपदव्यवस्था कथ्यते।

## निविशादेः।

**नीत्याद्युपसर्गपूर्वकाद्विशादेर्धातोरात्मनेपदं भवति। निविशते।**

निविशादेः। निपूर्वो विश् आदिर्यस्य स निविशादिः। तस्य निविशादेः (पं० ए०)। निपूर्वस्य विशादेर्धातोः परस्मैपदिनोऽपि आत्मनेपदं भवति। विश् प्रवेशने। निपूर्वः। अनेन सूत्रेण आत्मनेपदं भवति। ते इत्यादयः प्रत्यया भवन्ति। निविशते। तुदादेरः। अनेनाच अः प्रत्ययो भवति।

## विपराभ्यां जेः।

**विजयते पराजयते।**

विपराभ्याम्। विपराभ्यामुपसर्गाभ्यां परस्य जयतेर्धातोरात्मनेपदं भवति। विजयते। पराजयते। इत्युदाहरणम्।

## समो गमादिभ्यः।

**सङ्गच्छते।**

समः। समुपसर्गात् गमादिभ्यो धातुभ्य आत्मनेपदं भवति। सङ्गच्छते।

## गमः परौ सिस्यौ आत्मनेपदे वा कितौ वाच्यौ।

**लोपस्त्वनुदात्ततनाम्। सङ्गंसीष्ट। लोपो झस्वाज्झसे।**

समगत, समगंस्त। ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु। समृच्छते, संपृच्छते। स्वृ शब्दोपतापयोः। संस्वरते, संस्वृषीष्ट, संस्वरिषीष्ट। समियृते, संशृणुते, संवित्ते, संविदाते। वित्तेरन्तो वा रुद् आति। संविद्रते, संविदते, संपश्यते, गम ऋच्छ प्रच्छ स्वृ ऋ श्रु विद दृश एते गमादयः।

गमः। गम्धातोः परौ सिचौ वा कितौ वाच्यौ आत्मनेपदे। तस्मादाशिषि नकारस्य लोपो वा भवति। सङ्गंसीष्ट। सङ्गसीष्ट। लुङ्। लोपो ह्रस्वाज्भसे। अनेन सकारस्य वा लोपः। समगत। समगंस्त। इत्यादीनि रूपाणि। आदिशब्दात्। समृच्छते। सम्पृच्छते। संशृणुते। समियृते। इत्यादीनि। स्वृ शब्दोपतापयोः। संस्वरते। असेिड्विकल्पः। उः अनेन गुणनिषेधः। संस्वृषीष्ट। संस्वरिषीष्ट। संवित्ते। अन्तो वा रुद् आत्मनेपदे। संविद्रते। संविदते। गमादयो मूले उक्ताः।

## आङो दोऽनास्यविहरणे।

आङ्पूर्वाद्ददातेरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे। आदत्ते। मुखं व्याददाति। अत्र न।

आङोदोनास्य विहरणे। आङः (पं० ए०) दः (ष० ए०) अनास्यविहरणे (स० ए०) आस्यस्य मुखस्य विहरणं प्रसारणं आस्यविहरणम्। न आस्यविहरणमनास्यविहरणं तस्मिन् अनास्यविहरणे। आङ्पूर्वात् ददातेर्धातोरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे। आदत्ते। मुखप्रसारणे तु। मुखं व्याददाति। अत्र आत्मनेपदं न भवति।

## क्रीडोऽनुसंपरिभ्यश्च।

अनुसंपरिभ्यः क्रीडतेरात्मनेपदं स्यात्। क्रीड विहारे शब्दे च। अनुक्रीडते संक्रीडते परिक्रीडते। शब्दे तु न। संक्रीडति चक्रम्।

क्रीडोऽनुसम्परिभ्यश्च। क्रीडः (ष० ए०)। अनुसंपरिभ्यः (पं० ब०)

च ( प्र० ए० ) अव्ययम्। अनुसम्परिभ्य उपसर्गेभ्यः क्रीड विहारे इत्यस्य धातोरात्मनेपदं भवति। क्रीड विहारे शब्दे च। अनुक्रीडते। संक्रीडते। परिक्रीडते। इत्युदाहरणानि। शब्दे तु नात्मनेपदं भवति। संक्रीडति चक्रम्। अत्र न भवति।

## समवप्रोपविभ्यः स्थः।

एभ्यस्तिष्ठतेरात्मनेपदं भवति। सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, उपतिष्ठते, वितिष्ठते।

समवप्रोपविभ्यः स्थः। समवप्रोपविभ्यः ( पं० ब० ) स्थः ( ष० ए० )। सम् अव् प्र उप वि एभ्य उपसर्गेभ्यः ष्ठा गतिनिवृत्तौ इत्यस्य धातोरात्मनेपदं भवति। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। उपतिष्ठते। वितिष्ठते। इत्युदाहरणानि।

## आङो यमहनः।

आङ्पूर्वयोर्यमहनोरात्मनेपदं भवति। आयच्छते, आहते।

आङो यमहनः। आङः ( ष० ए० ) यमहनः ( ष० ए० ) आङ्पूर्वयोर्यमहनोर्धातोरात्मनेपदं भवति। आयच्छते। आहते।

## अकर्मकयोरात्माङ्गकर्मकयोर्वा।

आयच्छते पाणिम्। आहते शिरः। अन्यथा परशिर आयच्छति शत्रुमाहन्ति।

अकर्मकयोः। अकर्मकयोरात्माङ्गकर्मयोर्यमहनोर्वा आत्मनेपदं भवति। आयच्छते रूपाणि। आहते स्वशिरः। अन्यथा परशिर आयच्छति। शत्रुमाहन्ति।

## हन्तेरात्मनेपदे सिः किद्वाच्यः।

नो लोपः। आहत। लोपस्त्वनुदात्ततनाम्। हन्तेः स्याशीर्यादाद्योर्वधादेश आति वा। अवधिष्ट।

हन्ते०। हन्तेर्धातोरात्मनेपदे सिः किद्वाच्यः। लोपः। अनेन नकार-

चीपः । आहत । इन्तेः स्वाशीर्व्यादाद्योर्वधादेश आत्मनेपदं वा भवति । अव-धिष्ट इत्यादीनि ।

## उद्विभ्यां तपः ।

उद्विभ्यां परस्याकर्मकस्यात्माङ्गकर्मकस्य वा तपतेरात्मने-पदं भवति। उत्तपते वितपते पाणिम्। अन्यथा महीं वितपत्यर्कः ।

उद्विभ्यां तपः । उद्विभ्यां ( पं० द्वि० ) तपः ( ष० ए० ) उत् वि एताभ्या-मुपसर्गाभ्यां तपतेरकर्मकस्य आत्माङ्गकर्मकस्य च आत्मनेपदं भवति। उत्तपते वितपते स्वपाणिम् । अन्यथा महीं वितपत्यर्कः । अत्र न भवति ।

## उदश्चरस्त्यागे ।

उत्पूर्वाच्चरतेस्त्यागेऽर्थे आत्मनेपदं भवति। धर्ममुच्चरते। त्यजतीत्यर्थः। त्यागे किम् मन्त्रमुच्चरति ।

उदश्चरस्त्यागे। उदः ( पं० ए० ) चरः ( ष० ए० ) त्यागे ( स० ए० ) उदुपसर्गपूर्वस्य चरतेर्धातोस्त्यागेऽर्थे आत्मनेपदं भवति। धर्ममुच्चरते त्यजति इत्यर्थः । त्यागाभावे मन्त्रमुच्चरति ।

## समस्तृतीयायुक्ताच्च ।

संपूर्वाच्चरतेस्तृतीयान्तेन पदेन युक्तादात्मनेपदं भवति। अश्वेन सञ्चरते ।

समस्तृतीयायुक्तात्। समः ( पं० ए० ) तृतीयायुक्तात् ( पं० ए० ) संपूर्वाच्चरधातोस्तृतीयान्तोपपदयुक्तात् आत्मनेपदं भवति। चर गतिभक्षणयोः । संपूर्वस्यास्य आत्मनेपदम् । सञ्चरते अश्वेन। अश्वेन इति तृतीयान्तमुपपदम् । अन्यथा सञ्चरति अश्वः अत्र न भवति ।

## व्यवपरिभ्यः क्रीञः ।

एभ्यः क्रीणातेरात्मनेपदं भवति। विक्रीणीते, अव-क्रीणीते, परिक्रीणीते ।

व्यवपरिभ्यः। ( पं० ब० ) क्रीञः ( ष० ए० ) वि अव परि एभ्य उप-सर्गेभ्यः डुक्रीञ्धातोरात्मनेपदं भवति। उदाहरणानि। विक्रीणीते। अव-क्रीणीते। परिक्रीणीते। शप उपालम्भे। आक्रोशे च।

## शप उपालम्भे।

उपालम्भेऽर्थे शपतेरात्मनेपदं भवति। वाचा शरीर-स्पर्शनमुपालम्भः। विप्राय शपते। विप्रशरीरं स्पृशति, शपथं करोतीत्यर्थः। उपालम्भे किम्। दुष्टं शपति। शापं ददातीत्यर्थः।

उपालम्भेऽर्थे शपथकरणेऽर्थे शपधातोरात्मनेपदं भवति। वाचा शरीर-स्पर्शनमुपालम्भः। विप्रो: शपते। शपथं करोति इत्यर्थः। सत्यमेतदिति कथ-यति। उपालम्भे किम्। दुष्टं शपति। शापं ददाति। अत्रात्मने पदं न भवति। शत्रुं शपति। आक्रोशति इत्यर्थः।

## ज्ञाश्रुस्मृदृशां सन्तानामात्।

सप्रत्ययान्तानामेषामात्मनेपदं भवति। यः से। जिज्ञा-सते, शुश्रूषते, सुस्मूर्षते, दिदृक्षते।

ज्ञाश्रुस्मृदृशां सान्तानामात्। सप्रत्ययान्तानामेतेषां धातूनां आत्मनेपदं भवति। तेषां साधनं तु पूर्वं कृतम्। सः प्रत्ययः। यः से। इत्यादि। जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते। इत्यादीन्युदाहरणानि।

## अनुपसर्गाज्ज्ञानातेरात्मगामिनि फले आत्मने-पदं वाच्यम्।

गां जानीते।

अनुपसर्गात्। जानातेर्धातोरात्मगामिनि। क्रियाफले सति आत्मनेपदं वाच्यम्। अनेनात्मनेपदम्। गां जानीते इत्युदाहरणम्।

## कर्मव्यतिहारेऽन्यत्र हिंसादेरात्।

कर्मव्यतिहारेऽर्थे वाच्ये हिंसार्थान् गत्यर्थान् पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावे सर्वेभ्यो धातुभ्य आत्मनेपदं भवति। परस्परमेकक्रियाकरणं कर्मव्यतिहारः। श्रद्धा आस्तिक्यबुद्धिः। श्रद्धा व्यतिभवते। परस्परं भवतीत्यर्थः। व्यतिस्ते। विवदन्ते वादिनः। अन्यत्रेति किम्। व्यतिघ्नन्ति, व्यतिगच्छन्ति, व्यतिपठन्ति, व्यतिजल्पन्ति, व्यतिहसन्ति। इतरेतरं परस्परम् अन्योन्यं वा व्यतिलुनन्ति।

कर्मव्यतिहारेऽन्यत्र हिंसादेरात्। कर्मव्यतिहारे (स० ए०) कर्मणो व्यतिहारः। विनिमयः। पराभवती वा कर्मव्यतिहारः। तस्मिन् कर्मव्यतिहारे। अन्यत्र हिंसादेः। आत् कर्मव्यतिहारेऽर्थे वाच्यमाने सति हिंसार्थान् गत्यर्थान् धातून् पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावेऽपि सर्वेभ्यो धातुभ्य आत्मनेपदं भवति। परस्परमेकक्रियाकरणं कर्मव्यतिहारः। श्रद्धा आस्तिक्यबुद्धिः। श्रद्धा व्यतिभवते परस्परं भवति इत्यर्थः। अस् भुवि। व्यतिस्ते। विवदन्ते वादिनः। इत्युदाहरणानि ज्ञातव्यानि। अन्यत्रेति किम्। व्यतिघ्नन्ति। व्यतिगच्छन्ति। व्यतिपठन्ति। व्यतिजल्पन्ति। व्यतिहसन्ति। एतेषु आत्मनेपदं न भवति। सूत्रेनिषेधात्। इतरेतरम् अन्योन्यं परस्परं व्यतिलुनन्ति। इत्यत्रापि आत्मनेपदं न भवति।

## भुजो भोजने आत्मनेपदं वाच्यम्।

भुङ्क्ते ओदनम्। भुनक्ति महीं नृपः। इत्यात्मनेपदव्यवस्थाप्रक्रिया।

भुजो भोजने। भुज पालनाभ्यवहारयोः। अस्य भोजनेऽर्थे आत्मनेपदं भवति। उदाहरणम्। देवदत्त ओदनं भुङ्क्ते। भोजनाभावे तु भुनक्ति महीं नृपः। अत्रात्मनेपदं न भवति। इत्यात्मनेपदव्यवस्थाप्रक्रिया समाप्ता।

## अथ भावकर्मणोर्यकि प्रक्रिया

अथ भावकर्मणोर्यकि प्रक्रिया कथ्यते। भावश्च कर्म च भावकर्मणी तयोः भावकर्मणोः। बालबोधनार्थमिदं समाससूत्रम्।

## यक् चतुर्षु ।

धातोर्भावे कर्मणि च यक् प्रत्ययो भवति चतुर्षु पूर्वोक्तेषु परत: । ककारो गुणप्रतिषेधार्थ: ।

यक् चतुर्षु । यक् ( प्र० ए० ) चतुर्षु ( स० ब० ) धातोर्भावे कर्मणि च चतुर्षु पूर्वोक्तेषु तिबादिषु परेषु यक्प्रत्ययो भवति । ककारो गुणप्रतिषेधार्थ: । अयकि इति सूत्रविशेषणार्थ: । अनेन धातोर्यक् । यकि सति पदनियममाह ।

## आद् भुवि कर्मणि ।

अकर्मकेभ्यो भुवि भावे सकर्मकेभ्यश्च कर्मण्यात्मनेपदं भवति । ये कर्मनिरपेक्षां क्रियामाहुस्ते अकर्मका: । भूएध्-आस्शीङ्प्रभृतय: । तदुक्तम् ।

आद् भुवि कर्मणि । आत् ( प्र० ए० ) भुवि ( स० ए० ) कर्मणि ( स० ए० ) । अकर्मकेभ्यो न विद्यते कर्म येषां ते अकर्मका: तेभ्य: अकर्मकेभ्यो धातुभ्यो भुवि भावोक्तौ ।

लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीड़ारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहु: ॥

भावस्यैकत्वादेकवचनमेव भवति प्रथम-पुरुषस्य ।

भूयते, भविता, भूयेत, भूयताम्, अभूयत, बभूवे ।

अकर्मका लज्जासत्ताद्यर्थवाचका: । तथा सकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति । अयं भाव: भावोक्तौ तृतीयान्त: कर्त्ता । अकर्मकधातो: आत्मनेपदं भवति । दशानामपि विभक्तीनां प्रथमपुरुषैकवचनम् । कर्मोक्तौ च तृतीयान्त: कर्त्ता, प्रथमान्तं कर्म । क्रियायाश्चात्मनेपदं भवति । विभक्तिचतुष्टयेऽपि यक्-प्रत्ययान्तमेव । कर्मण एकवचने सति क्रियाया एकवचनम् । कर्मणो द्विवचने सति क्रियाया द्विवचनम् । कर्मणो बहुवचने सति क्रियाया बहुवचनं भवति । इति ज्ञातव्यम् ।

कर्त्तरि प्रथमा यत्र द्वितीया तत्र कर्मणि ।
धातोरुभे पदे स्यातामेतत् कर्त्तृक्तिलक्षणम् ॥

कर्त्तरि तृतीया यत्र प्रथमा तत्र कर्मणि।
यक्प्रत्ययान्तं विज्ञेयं धातोश्चात्रात्मनेपदम्॥
भावे कर्त्ता तृतीयान्तः कर्म चात्र भवेन्न हि।
क्रियायाश्चैकवचनं भवेद्यक्यात्मनेपदम्॥

अथाकर्मकान् धातूनाह। ये कर्मेति। ये धातवः कर्मनाकाङ्क्षारहितां क्रियां कथयन्ति। ते अकर्मकाः। ते धातवो लज्जासत्ता०। अनेन श्लोकेन कथिताः। ततोऽन्येऽपि ज्ञातव्याः। भावस्तु एक एव भावलक्षणमाह। धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते। ततो भावस्यैकत्वात् प्रथमपुरुषस्य एकवचनमेव भवति। भवति। भू सत्तायाम्। ते आदयः प्रत्यया भवन्ति। यक् चतुर्षु अनेन यक्-प्रत्ययो भवति। भूयते। भूयेते। भूयन्ते। इत्यादीनि रूपाणि भवन्ति। भूयेत। भूयेयाताम्। भूयेरन्। भूयताम्। भूयेताम्। भूयन्ताम्। दिबादावट्। अभूयत। अभूयेताम्। अभूयन्त। भवता भूयते। इत्युदाहरणम्। लिट्लकारे तु पूर्ववत् साधनं कार्य्यम्। बभूवे इत्यादीनि रूपाणि भवन्ति।

**स्वरान्तानां हन्ग्रहदृशां च भावकर्मणोः सिसतासीस्यपामिट् वा इण्वद्वक्तव्यः।**

**वाशब्दात् सेटां धातूनां नित्यमिट् स विकल्पेन णित्। अनिटां धातूनां विकल्पेन इट् स नित्यं णित्। एवं च हन्दृशोरनिटोर्वा इट् स च नित्यं णित्। ग्रहधातुस्तु सेट्। ततः परो नित्यमिट् स च वा णित्। णित्त्वादृद्धिः। भाविषीष्ट। णित्त्वाभावे भविषीष्ट। भाविता भविता, भाविष्यते भविष्यते, अभाविष्यत अभविष्यत।**

स्वरान्तानाम्। स्वरान्तानां धातूनां हन्ग्रहदृशां च धातूनां भावकर्मणोः सिसतासीस्यपामिड् वा इण्वद्वक्तव्यः। वाग्रहणात् सेटां धातूनां नित्यमिट् स विकल्पेन णित्। अनिटां धातूनां विकल्पेन इड् भवति स नित्यं णिद् भवति। अन्यद् व्याख्यानं मूले कृतम्। तत् सुगममेव। सिङ्। अनेन इट्। स णित् वा भवति। णित्त्वाद् वृद्धिः 'धातोर्नामिनः' अनेन सूत्रेण। भाविषीष्ट। णिद्-भावपक्षे। गुणः। ओअव्। भविषीष्ट। इत्यादीनि भवन्ति। भाविता। भावितारौ। भावितारः। णित्त्वाभावपक्षे। गुणः। भविता। भवितारौ। भवितारः। भाविष्यते। भाविष्येते। भाविष्यन्ते। इत्यादीनि। दिबादावट। अभाविष्यत।

अभाविष्येताम्। अभाविष्यन्त। अभविष्यत। अभविष्येताम्। अभविष्यन्त। लुङ्लकारे।

## इण् तन्यकर्त्तरि।

धातोस्तनि परे भावे कर्मणि च इण् प्रत्ययो भवति। सेरपवादः। णो वृद्ध्यर्थः। लोपः।

इण् तन्यकर्त्तरि। इण् ( प्र० ए० ) तनि ( स० ए० ) अकर्त्तरि (स० ए०) धातोस्तनि परे। अकर्त्तरि भावे लोपः कर्मणि च। इण्प्रत्ययो भवति। भूते सिः। अस्यापवादोऽयम्। णित्त्वाद् वृद्धिः। धातोर्नामिनः। अनेन सूत्रेण। णकारस्तु वृद्ध्यर्थः।

## इण्संयोगे तनो लोपो भवति।

अभावि। अकर्मकोऽपि कदाचित् सकर्मकतामनुभवति। उक्तं च।

इण्संयोगे। इणः संयोगे सति तनः प्रत्ययस्य लोपो भवति। अनेन तनो लोपः। दिबादावट्। अभावि। अभाविषाताम्। अभविषाताम्। अभाविषत। अभविषत। इत्यादीनि रूपाणि भवन्ति। तानि सुगमान्येव अनेनैव प्रकारेण साध्यानि। विकल्पेन णित्त्वाद् वृद्धिविकल्पः। अकर्मकोऽपि धातुः कदाचिदुपसर्गबलात् सकर्मकतामनुभवति। उक्तञ्च।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
विहाराहारसंहारप्रतिहारप्रहारवत्॥
धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते।
विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा॥

सुखमनुभूयते स्वामिना। अन्वभावि भवो भवता। अन्वभाविषाताम् अन्वभविषाताम् अन्वभाविषत अन्वभविषत।

उपसर्गेणेति। उपसर्गेण धातोरर्थोऽन्यत्र नीयते। अन्यस्मिन्नर्थे प्राप्यते

इत्यर्थः । उदाहरणानि उत्तरार्द्धे सन्ति । अन्योऽपि श्लोकोऽस्ति । कश्चिदुपसर्गो धातोरर्थं बाधते । कश्चिदुपसर्गो धातोरर्थमनुवर्त्तते । कश्चिदुपसर्गस्तमेवार्थं विशिनष्टि । अनया रीत्योपसर्गाणां त्रिधा गतिरस्ति । भूसत्तायां अयंधातुर्यद्यपि अकर्मकः तथापि यदानुपूर्वः तदा सकर्मकः । उदाहरणम् । सुखमनुभूयते स्वामिना । अन्वभावि भवी भवता । इदमप्युदाहरणम् । शीङ् स्वप्ने । यक् चतुर्षु । अनेनास्य यक्प्रत्ययः । शीयते । इति स्थिते ।

## शीङो यङ् क्ङिति ये वक्तव्यः ।

शय्यते, शिश्ये, शायिषीष्ट, शयिषीष्ट, अशायि । अन्वशायि अन्वशायिषाताम् अन्वशयिषाताम् अन्वशायिशत अन्वशयिषत । ये कर्मसापेक्षां क्रियामाहुस्ते सकर्मकाः । अयकि । घटः क्रियते देवदत्तेन । त्वं दुःखी क्रियसे रागैः । विरागैः सुख्यहं क्रिये । चक्रे, कारिषीष्ट कृषीष्ट, कारिता कर्त्ता, कारिष्यते, करिष्यते, अकारिष्यत अकरिष्यत । अकारि अकारिषाताम् अकृषाताम् अकारिषत अकृषत । चिञ् चयने । चीयते, चिच्ये, चायिषीष्ट चेषीष्ट, चायिता चेता, चायिष्यते चेष्यते, अचायिष्यत अचेष्यत । अचायि अचायिषाताम् अचेषाताम् । दादेरिः । दीयते । ददे ददाते ददिरे ।

शीङो यङ् । शीङः ( ष० ए० ) अयङ् ( प्र० ए० ) शीङ्धातोः यकि परे सति अयङादेशो भवति । ङकारोऽन्त्यादेशार्थः । तेनेकारस्य भवति । अकार उच्चारणार्थः । शय्यते शूद्रेण । केचिदाचार्य्याः इदं सूत्रं न पठन्ति । किन्तु । शीङः सर्वत्र गुणो भवति । अनेन क्ङित्यपि गुणः । क्वचित् स्वरवद् यकारः अनेन यकारस्य स्वरत्वात् यत्रप् । शय्यते । शय्येते । शय्यन्ते । शय्येत । शय्येयाताम् । शय्येरन् । शय्यताम् । शय्येताम् । शय्यन्ताम् । दिवादावट् । अशय्यत । अशय्येताम् । अशय्यन्त । इत्यादीनि रूपाणि भवन्ति । लिट्लकारे । द्विश्च । शुधातोः । ह्रस्वः । अनेन पूर्वस्य ह्रस्वो भवति । शिश्ये । शिश्याते । शिश्यिरे । इत्यादीनि । स्वरान्ता० अनेनेट् । इटो वा णित्त्वम् । धातोर्नामिनः । अनेन वृद्धिः । ऐ आय् । शायिषीष्ट । णित्त्वाभावपक्षे गुणः । ए अय् । शयिषीष्ट ।

एवं सर्वत्र वा णित्त्वं ज्ञेयमस्य धातोः। शायिता। शयिता। शायिष्यते। शयिष्यते। दिबादावट्। अशायिष्यत। अशयिष्यत। लुङ्लकारे। इण्तन्यकर्त्तरि अनेन इण्। वृद्धिः। अशायि। अशायिषाताम्। अशयिषाताम्। अशायिषत। अशयिषत। यदा। अनुपूर्वोऽयं तदा। अन्वशायि। इत्यादीनि भवन्ति। सकर्मकधातुलक्षणमाह। ये कर्मसापेक्षाम्०। ये धातवः कर्मसापेक्षां क्रियामाहुस्ते धातवः सकर्मका ज्ञेयाः करोत्यादयः। डुकृञ् करणे अस्य धातोः यक् चतुर्षु अनेन यक्। अयकि। अनेन ऋकारस्य रिः। क्रियते। क्रियेत। क्रियताम्। अक्रियत। लिट्लकारे। द्वित्व। रः। कुहोश्चुः। ऋरम्। चक्रे। चक्राते। चक्रिरे। इत्यादीनि। स्वरान्ता अनेन इट्। अयं धातुरनिट्। तस्माद् विकल्पेन इट्। नित्यं णित्। ईटो णित्त्वात् धातोर्नामिनः अनेन वृद्धिः। कारिषीष्ट। इडभावे। नुः अनेन गुणनिषेधः। षत्वम्। कृषीष्ट। कारिता। कारितारौ। कारितारः। इडभावे। गुणः। कर्त्ता। कर्त्तारौ। कर्त्तारः। कारिष्यते। कारिष्येते। कारिष्यन्ते। णित्वाभावपक्षे। हनृतः स्यपः। अनेन इट्। गुणः। करिष्यते। करिष्येते। करिष्यन्ते। अकारिष्यत। अकारिष्येताम्। अकारिष्यन्त। णित्त्वाभावपक्षे। अकरिष्यत। अकरिष्येताम्। अकरिष्यन्त। इत्यादीनि रूपाणि भवन्ति। लुङ्लकारे। इण् तन्यकर्त्तरि। धातोर्नामिनः। लोपः। अनेन तनो लोपः। अकारि। अकारिषाताम्। अकृषाताम्। अकारिषत। अकृषत। इत्यादीनि। देवदत्तेन त्वं सुखी क्रियसे। रोगैस्त्वं दुःखी क्रियसे। विरागैः सुख्यहं क्रिये। चिञ् चयने। यक् चतुर्षु अनेन यक्प्रत्ययः। ये अनेन दीर्घः। चीयते। चीयेते। चीयन्ते। चीयेत। चीयेयाताम्। चीयेरन्। चीयताम्। चीयेताम्। चीयन्ताम्। दिबादावट्। अचीयत। अचीयेताम्। अचीयन्त। लिट्। द्वित्व। कुधातोः। चिच्ये। चिच्याते। चिच्यिरे। स्वरान्तानां० अनेन इट्। णित्त्वात् वृद्धिः। धातोर्नामिनः। अनेन। ऐ आय्। चायिषीष्ट। इडभावपक्षे। गुणः। चेषीष्ट। चायिता। चेता। चायिष्यते। चायिष्येते। चायिष्यन्ते। इडभावपक्षे। चेष्यते। चेष्येते। चेष्यन्ते। दिबादावट्। अचायिष्यत। अचायिष्येताम्। अचायिष्यन्त। इडभावपक्षे। अचेष्यन्त। लुङ्लकारे। इण्। वृद्धिः। तनो लोपः। दिबादावट्। अचायिषाताम्। इडभावपक्षे। अचेषाताम्। अचायिषत। अचेषत। इत्यादीनि। दा दाने। यक् चतुर्षु। अनेन यक्। दादेरिः अनेन इकारः। ये। अनेन दीर्घः। दीयते। दीयेते। दीयन्ते। दीयेत। दीयेयाताम्। दीयेरन्। दीयताम्। दीयेताम्। दीयन्ताम्। दिबादावट्। अदीयत। अदीयेताम्। अदीयन्त। लिट्। द्वित्व। ह्रस्वः। आतोऽनपि। ददे।

ददाते। ददिरे। दासीष्ट। इति स्थिते। स्वरान्तानां० अनेन इट्। इटो णित्त्वम्।

## आतो युक्।

आकारान्ताद्धातोर्युगागमो भवति ञिति च परे। दायिषीष्ट दासीष्ट, दायिता दाता, दायिष्यते दास्यते। अदायि अदायिषाताम्। दाधाख्यामित्वम्। अदिषाताम्। धीयते, अधायि, अधायिषाताम्। अधिषाताम्। स्थीयते, अस्थायि। स्तूयते, तुष्टुवे, अस्तावि अस्ताविषाताम् अस्तोषातां हरिहरौ भक्तेन। हन्यते। हनो घ्ने। जघ्ने, घानिषीष्ट, हंसीष्ट।

आतो युक्। आतः (पं० ए०) युक् (प्र० ए०) आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे। अनेन युक्। उकार उच्चारणार्थः। ककारः कित्कार्यार्थः। दायिषीष्ट। इडभावपक्षे। दासीष्ट। दायिता। दायितारौ। दायितारः। इडभावपक्षे। दाता। दातारौ। दातारः। दायिष्यते। दास्यते। दिवादावट्। अदायिष्यत। अदायिष्येताम्। अदायिष्यन्त। इडभावपक्षे। अदास्यत। अदास्येताम्। अदास्यन्त। लुङ्। इण्। युक्। तनो लोपः। अदायि। अदायिषाताम्। दाधाख्याम्। अनेन इडभावपक्षे इकारः। अदिषाताम्। अदायिषत। अदिषत। इत्यादीनि। डुधाञ् धारणपोषणयोः। यक् चतुर्षु। अनेन यक्। दादेरिः अनेनाकारस्य इकारः। ये। अनेन पूर्वस्य दीर्घः। धीयते। धीयेत। धीयताम्। अधीयत। इत्यादीनि भवन्ति। लिट्लकारे। द्वित्वं। ह्रस्वः। झपानाम्। आतोऽनपि। अनेनाकारलोपः। दधे। दधाते। दधिरे। स्वरान्तानाम्। इटो णित्त्वम्। आतो युक्। षत्वम्। धायिषीष्ट। इडभावे। धासीष्ट। धायिता। धाता। धायिष्यते। धास्यते। दिवादावट्। अधायिष्यत। अधास्यत। लुङ्लकारे। इण्। युक्। तनो लोपः। अधायि। अधायिषाताम्। इडभावपक्षे। दाधाख्याम्। अधिषाताम्। अधायिषत। अधिषत। इत्यादीनि। ष्ठा गतिनिवृत्तौ। षत्वम्। यक्। दादेरिः। ये। स्थीयते। स्थीयेत। स्थीयताम्। अस्थीयत। लिट्लकारे तु साधनं पूर्ववत्। तस्थौ। तस्थतुः। तस्थुः।

स्वरान्तानाम् । आतो युक् । स्थायिषीष्ट । इडभावे । स्थासीष्ट । स्थायिता । स्थाता । स्थायिष्यते । स्थास्यते । अस्थायिष्यत । अस्थास्यत । लुङ्लकारे । इण् । युक् । तनो लोपः । अस्थायि । अस्थायिषाताम् । इडभावे । दाधास्थाम् । अनेनेत्वम् । अस्थिषाताम् । इत्यादीनि । ष्टुञ् स्तुतौ । सत्वम् । यक् । ये । स्तूयते । स्तूयेत । स्तूयताम् । अस्तूयत । इत्यादीनि । लिट्लकारे । द्वित्वादिकम् । अन्यत् साधनं पूर्ववत् । तुष्टुवे । तुष्टुवाते । तुष्टुविरे । स्वरान्तानाम्० । अनेनेट् । इटो णित्त्वम् । वृद्धिः । स्ताविषीष्ट । इडभावपक्षे गुणः । षत्वम् । स्तोषीष्ट । स्ताविष्यते । स्तोष्यते । अस्ताविष्यत । अस्तोष्यत । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । अस्तावि । अस्ताविषाताम् । इडभावपक्षे । अस्तोषाताम् । इत्यादीनि । हन् हिंसागत्योः । यक् । हन्यते । हन्येत । हन्यताम् । अहन्यत । लिट्लकारे । द्वित्वम् । कुहोश्चुः । गमां स्वरे । हनो घ्नि । जघ्ने । जघ्नाते । जघ्निरे । इत्यादीनि । स्वरान्तानाम् । हनो घ्नि । घानिषीष्ट । इडभावपक्षे । नश्चा० । हंसीष्ट ।

## हन्तेः स्याशीर्याद्योर्वधादेशो वक्तव्यः आति वा ।

वधिषीष्ट, घनिता हन्ता, घानिष्यते हनिष्यते, अघानिष्यत अहनिष्यत, अघानि अघानिषाताम् ।

हन्तेः । हन्तेर्धातोः स्याशीर्याद्योर्वधादेशो वक्तव्यः । आत्मनेपदे वा भवति । जनिवध्योः । अनेन वृद्धिनिषेधः । वधिषीष्ट । घानिता । नश्चा० । हन्ता । घानिष्यते । ह्नृतः । हनिष्यते । अघानिष्यत । अहनिष्यत । लुङ्लकारे । इण् । हनोघ्नि । अत उपधायाः । अघानि । अच हनो घत् । अनेन घदादेशो न भवति । तत्र सूत्रे इणिनिषेधः । अघानिषाताम् ।

## हन आत्मनेपदे सिः किद्वाच्यः ।

लोपस्त्वनुदात्ततनाम् । अहसाताम् अघानिषत अहसत । अवधि अवधिषाताम् । ग्रहां क्ङिति च । गृह्यते, जगृहे, ग्राहिषीष्ट । ईटो ग्रहाम् । ग्रहीषीष्ट, ग्राहिता ग्रहीता ग्राहिष्यते ग्रहीष्यते, अग्राहिष्यत, अग्राहि अग्राहि-

षाताम् अग्रहीषाताम्। दृश्यते, ददृशे, दर्शिषीष्ट दृक्षीष्ट, दर्शिता द्रष्टा, दर्शिष्यते द्रक्ष्यते, अदर्शि अदर्शिषाताम् अदृक्षाताम्। डुपचष् पाके। पच्यते, पेचे, पक्षीष्ट, पक्ता, पक्ष्यते, अपक्ष्यत, अपाचि अपक्षाताम्।

हनः। हनो धातोरात्मनेपदे सिः प्रत्ययः किद्वाच्यः। लोपः। अनेनैकारलोपः। अहसाताम्। अघानिषत। अहमत। इत्यादीनि। हन्तेः। अनेन वा वधादेशः। वृद्धिनिषेधः। अवधि अवधिषाताम्। अवधिषत। अवधिष्ठाः। इत्यादीनि रूपाणि भवन्ति। ग्रह उपादाने। यक् चतुर्षु। अनेन यक्प्रत्ययः। ग्रहां क्ङिति च। अनेन सम्प्रसारणम्। गृह्यते। गृह्येत। गृह्यताम्। दिवादावट्। अगृह्यत। लिट्लकारे। सम्प्रसारणम्। ततो द्वित्वम्। रः। कुहोश्चुः। जगृहे। जगृहाते। जगृहिरे। इत्यादीनि। स्वरान्तानाम्। अनेन इट्। इटो णित्वम्। अत उपधायाः अनेन वृद्धिः। ग्राहिषीष्ट। इटोग्रहाम्। अनेन इट इकारो भवति। ग्राहीषीष्ट। ग्राहिता। अत्र दीर्घो न भवति। अनिष्टत्वात्। ग्रहीता। ग्राहिष्यते। ग्रहीष्यते। दिवादावट्। अग्राहिष्यत। अग्रहीष्यत। इत्यादीनि। लुङ्लकारे। इण्। वृद्धिः। तनोर्लोपः अग्राहि। अग्राहिषाताम्। अग्रहीषाताम्। अग्राहिषत। अग्रहीषत। इत्यादीनि भवन्ति। दृशिर् प्रेक्षणे। यक् चतुर्षु। अनेन यक्। दृश्यते। दृश्येते। दृश्यन्ते। इत्यादीनि। दृश्येत। दृश्यताम्। अदृश्यत। इत्यादीनि। लिटलकारे। द्वित्वं। रः। ददृशे। ददृशाते। ददृशिरे। स्वरान्तानां अनेन इट्। इटो णित्वम्। णित्वाद् वृद्धेरप्राप्तत्वाद् गुणः। दर्शिषीष्ट। इडभावपक्षे। छशष अनेन षत्वम्। षढोः कः सि। षत्वम्। कषसंयोगे। सिस्योः। अनेन गुणनिषेधः। दृक्षीष्ट। अन्यानि सुगमानि। दर्शिता। इडभावे षत्वम्। गुणः रारोर्भसि। द्रष्टा। दर्शिष्यते। द्रक्ष्यते। दिवादावट्। अदर्शिष्यत। अद्रक्ष्यत। इत्यादीनि रूपाणि भवन्ति। लुङ्लकारे इण्। गुणः। तनोर्लोपः। अदर्शि। अदर्शिषाताम्। इडभावपक्षे 'सिस्योः' अनेन गुणनिषेधः। षत्वम्। अदृक्षाताम्। अदर्शिषत। अदृक्षत। इत्यादीनि भवन्ति। डुपचष् पाके। यक् चतुर्षु। अनेन यक्। पच्यते। पच्येत। पच्यताम्। दिवादावट्। अपच्यत। इत्यादीनि रूपाणि भवन्ति, तानि सुगमानीति। लिट्लकारे। द्वित्वं। पूर्वस्य। 'लोपः पचां' अनेनैत्वपूर्वलोपौ भवतः। पेचे। पेचाते। पेचिरे। इत्यादीनि। चोः कुः। षत्वम्। कषसंयोगेक्षः। पक्षीष्ट। चोः कुः। पक्ता। पक्तारौ। पक्तारः। पक्ष्यते। अपक्ष्यत। लुङ्लकारे। इण्। अत उपधायाः। अनेन

वृद्धिः। तनीलोपः। अपाचि। अपच्चाताम्। अपच्चत। इत्यादीनि रूपाणि भवन्ति। तनु विस्तारे। यक् चतुर्षु। अनेन यक्।

## तनोतेर्नो वा।

**तनोतेर्नकारस्य वा आकारो भवति यकि परे। तायते, तन्यते, तेने, अतानि अतानिषाताम् अतनिषाताम्। भञ्जो आमर्दने। नो लोपः। भज्यते। अकित्त्वात् बभञ्जे, भङ्क्षीष्ट, भङ्क्ता, भङ्क्ष्यते।**

तनोतेर्नो वा। तनोतेः (ष० ए०) नः (ष० ए०) वा (प्र० ए०) अव्ययम्। तनोतेर्धातोर्नकारस्य वा आकारो भवति यक्प्रत्यये परे सति। सवर्णे। तायते। तायेत। तायताम्। अतायत। आत्वाभावपक्षे। तन्यते। तन्येत। तन्यताम्। अतन्यत। इत्यादीनि रूपाणि भवन्ति। लिट्लकारे। द्विश्च। पूर्वस्य। लोपः। पचाम्। अनेनैत्वपूर्वलोपौ भवतः। तेने। तेनाते। तेनिरे। इत्यादीनि। स्वरान्तानाम्। अस्य सूत्रस्य व्याख्यानात्। इट्। वा णित्। तानिता। अत उपधायाः। अनेन वृद्धिः। णित्त्वाभावपक्षे। तनिता। तानिष्यते। तनिष्यते। दिबादावट्। अतानिष्यत। अतनिष्यत। इत्यादीनि रूपाणि भवन्ति। लुङ्लकारे। इण्। वृद्धिः। तनी लोपः। दिबादावट्। अतानि। अतानिषाताम्। अतनिषाताम्। अतानिषत। अतनिषत। इत्यादीनि रूपाणि भवन्ति। भञ्जो आमर्द्दने। यक् चतुर्षु। अनेन यक्। नोलोपः। अनेन नकारस्य लोपः। भज्यते। भज्येत। भज्यताम्। दिबादावट्। अभज्यत। लिट्लकारे। अकित्त्वात् नकारस्य लोपो न भवति। द्वित्वादिकं कार्य्यम्। झपानाम्। पूर्वस्य। बभञ्जे। बभञ्जाते। बभञ्जिरे। इत्यादीनि। भञ्जसीष्ट। इति स्थिते। चोः कुः। खसे०। षत्वम्। कषसंयोगे क्षः। भंक्षीष्ट। चोः कुः। खसे०। भंक्ता। भंक्ष्यते। दिबादावट्। अभंक्ष्यत। लुङ्लकारे। इण्तन्य० अनेन इण्।

## भञ्जेरिणि वा नलोपो वाच्यः।

**अभञ्जि अभाजि। शम उपशमे। शम्यते मुनिना। धातोः प्रेरणे। मितां ह्रस्वः। जेः। शम्यते मोहो हरिणा। शमयाञ्चक्रे।**

भञ्जे:। भञ्जेर्धातोरिणि वा नकारस्य लोपो वाच्य:। अनेन वा नकारस्य लोप:। अत उपधाया:। तनो लोप:। अभाजि। नकारलोपाभावपक्षे। अभञ्जि। अभंचातास। अभंचत। इत्यादीनि। शम उपशमे। धातो: प्रेरणे। अनेन ञि:। अत उपधाया:। अनेन वृद्धि:। मितां ह्रस्व:। अनेन ह्रस्व:। यक्चतुर्षु। अनेन यक्। ञे:। अनेन ञिलोप:। शम्यते मोहो हरिणा। शम्येत। शम्यताम्। दिवादावट्। अशम्यत। कासादि०। अनेन आम्। अन्यत् साधनं पूर्ववत्। शमयाञ्चक्रे।

## आन्तानां मितामिणि णिदिटि च वा वृद्धिर्वाच्या णिदिटि ञिलोपश्च।

अशमि अशामि अशामिषाताम् अशमिषाताम्। णिड्दिड्भावपक्षे अशमयिषाताम्। गुणोर्त्तिसंयोगाद्यो:। अर्यते, स्मर्यते। यत्कर्म गुणसंयोगात्कर्तृत्वेन विवक्ष्यते स कर्मकर्त्ता। तदुक्तम्।

क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति।
सुकरै: स्वैर्गुणैर्यस्मात् कर्मकर्त्तेति तद्विदु:॥

तत्राप्येतदेवोदाहरणम्।

आन्तानां मितां धातूनाम्। इणि णिड्दिटि च वा वृद्धिर्वाच्या। णिड्दिटि ञेर्लोपो वाच्य:। अनेन ञेर्लोप:। वा वृद्धि:। शामिषीष्ट। वृद्ध्यभावपक्षे। शमिषीष्ट। शामिता। शमिता। शामिष्यते। शमिष्यते। अशामिष्यत। अशमिष्यत। लुङ्लकारे। इच्तन्य० अनेन इण्। ञेर्लोप:। वा वृद्धि:। अशामि। अशमि। अशामिषाताम्। अशमिषाताम्। अशामिषत। अशमिषत। इत्यादीनि रूपाणि भवन्ति। तानि अनेनैव क्रमेण साध्यानि। ऋ गतौ। यक् चतुर्षु। अनेन यक्प्रत्यय:। गुणोर्त्तिसंयोगाद्यो:। अनेन गुण:। अर्यते। अर्येत अर्यताम्। दिवादावट्। स्वरादे:। अनेन द्वितीयोऽडागम:। सवर्णे। आर्यत। इत्यादीनि रूपाणि भवन्ति। लिट्लकारे। साधनं पूर्ववत्। आर। आरतु:। आरु:। इत्यादीनि। आरिषीष्ट। ऋषीष्ट। आरिता। अर्त्ता। आरिष्यते। आरिष्यत। लुङ्लकारे। आरि। आरिषाताम्। इत्यादीनि। एवं स्मृ स्मरणे। यक्। गुणोर्त्ति० अनेन गुण:। स्मर्यते। स्मर्येत। स्मर्यताम्। अस्मर्यत। लिट्लकारे।

स्मरे। स्मारिषीष्ट। स्मृषीष्ट। स्मारिता। स्मर्त्ता। इत्यादीनि। लुङ्लकारे। अस्मारि। अस्मारिषाताम्। अस्मृषाताम्। इत्यादीनि। अथ कर्मोक्ताधिकारे कर्मकर्तृलक्षणम्। तस्योदाहरणं चाह। यत्कर्मेति। यत्कर्मापि गुणयोगात् वस्तुमध्यस्थितसुकरादिमार्द्दवादिगुणस्य संयोगात्। उपचारात् कर्तृत्वेन विवक्ष्यते सः कर्मकर्त्तेत्युच्यते। यतः।

> क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति।
> सुकरैः स्वैर्गुणैर्यस्मात् कर्मकर्त्तेति तद्विदुः॥

तत्रापि एतदेव यक्प्रत्ययान्तस्यैवोदाहरणमुच्यते।

## कर्मवत् कर्मणा तुल्यक्रियः।

**कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवति। लूयते केदारः स्वयमेव। लुलुवे, अलावि, अलाविषाताम्। पच्यते ओदनः स्वयमेव। भिदिर् विदारणे। भिद्यते काष्ठं स्वयमेव। अभेदि।**

कर्मवत्कर्मणा तुल्यक्रियः। कर्मवत् ( प्र० ए० ) कर्मणा ( तृ० ए० ) तुल्यक्रियः ( प्र० ए० ) कर्मस्था या क्रिया तया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवति। अनेन कर्तुः कर्मत्वं भवति। लूञ् छेदने। देवदत्तः केदारं लुनाति। स एवं वदति। नाहं लुनामि किन्तु केदारः स्वयमेव लूयते। लूञ्धातोः 'यक्चतुर्षु' अनेन यक्प्रत्ययो भवति। लूयते। लूयेत। लूयताम्। दिबादावट्। अलूयत। लिट्लकारे। द्वित्वं। लुधातोः। लुलुवे। लुलुवाते। लुलुविरे। स्वरान्तानां० अनेन इट्। इटो वा णित्त्वम्। णित्त्वाद् वृद्धिः। लाविषीष्ट। लविषीष्ट। णित्त्वाभावपक्षे। इदं रूपम्। लाविता। लविता। लाविष्यते। लविष्यते। दिबादावट्। अलाविष्यत। अलविष्यत। लुङ्लकारे। इण्। वृद्धिः। तनो लोपः। अलावि। अलाविषाताम्। अलविषाताम्। अलाविषत। अलविषत। इत्यादीनि रूपाणि भवन्ति। डुपचष् पाके। पच् ते। यक्प्रत्ययो भवति। कश्चिद् वक्ति देवदत्त ओदनं पचति। स एवं वदति नाहं पचामि किन्तु ओदनः स्वयमेव पच्यते। अत्र ओदनस्य स्वयमेव पाकसिद्धौ सामर्थ्यं ततः कर्मकर्तृत्वम्। कर्म एव कर्त्ता जातः। न पुनस्तृतीयान्तः कर्त्ता भवति। पच्यते। पच्येत। पच्यताम् अपच्यत। लिट्लकारे। द्वित्वं। पूर्वस्य। लोपः पचाम्। पेचे। पेचाते। पेचिरे। चोः कुः। षत्वम्। कषसंयोगे। पक्षीष्ट। पक्ता। पक्ष्यते। अपक्ष्यत। लुङ्लकारे। इण्। अत उपधायाः। तनोर्लोपः। अपाचि।

अपत्स्याताम् । अपत्स्यत । इत्यादीनि । भिदिर् विदारणे । कश्चिदेवं वक्ति । देवदत्तः काष्ठं भिनत्ति । स एवं वक्ति नाहं भिनद्मि । किन्तु काष्ठं स्वयमेव भिद्यते । यक्चतुर्षु । भिद्यते । भिद्येत । भिद्यताम् । अभिद्यन्त । लिट्लकारे । द्वित्वं । पूर्वस्य । बिभिदे । बिभिदाते । बिभिदिरे । भित्सीष्ट । भेत्ता । भेत्स्यते । अभेत्स्यत । लुङ् । इण् । गुणः । तनीलोपः । अभेदि । अभित्साताम् । अभित्सत ।

## दुहस्नुनमां कर्मकर्त्तरि यगिणौ न ।

दुग्धे स्नुते गौः स्वयमेव । नमते दण्डः स्वयमेव । अदुग्ध, अस्नोष्ट, अस्नाविष्ट, अनंस्त । अथ द्विकर्मकाः ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥
ण्यादयो अन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥
निन्ये विजनमजागरि रजनीमगमि मदमयाचि सम्भोगम् ।
गोपीहास्यमकार्य्यत भावस्तेनामनन्तेन ॥

कर्त्तुरिष्टतमं प्रधानं कर्म । अन्यदप्रधानम् । नगरं नीयते नागरिकैर्वनेचरः । भोजनं याच्यते यजमानो याचकेन । पृच्छ्यते पन्थानं पथिकेन पान्थः । शिष्येणाचार्य्यस्तत्त्वं पृच्छ्यते । कटश्चिकीर्ष्यते देवदत्तेन । यतः । बोभूज्यते । अनपि च हसात् । पापच्यते । तेन पापचिता अपापचि इत्यादि । इति भावकर्मप्रक्रिया ।

दुहस्नुनमाम् । दुह । स्नु । नम् । एतेषां धातून कर्मकर्त्तरि यगिणौ न भवतः । तेषां धातूनां रूपाणि पूर्ववत् ज्ञेयानि । आत्मनेपदे । दुग्धे । दुहाते । दुहते । इत्यादीनि रूपाणि ज्ञेयानि । स्नुधातोः । स्नुते । स्नुवाते । स्नुवते । इत्यादीनि । नमधातोः । नमते । नमेते । नमन्ते । त्रयाणां लुङ्लकारे । अदुग्ध । अधुक्षाताम् । अधुक्षत । अस्नोष्ट । अस्नाविष्ट । अनंस्त । अनंसाताम् । अनंसत । अथ द्विकर्मका धातवः कथ्यन्ते । द्वे कर्मणी यस्य स

द्विकर्मकः। यस्य धातोः कर्मद्वयापेक्षत्वं भवति स द्विकर्मकः। ते धातवः श्लोकेन गणिताः।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥

दुह्। याच्। पच्। दण्ड्। रुधि। प्रच्छि। चि। ब्रू। शास्। जि। मथ्। मुष्। नी। हृ। कृष्। वह् एतेषां धातूनां द्विकर्मकत्वं स्यात्। ण्यादयो आत्मनिष्कर्मगत्यर्था मुख्यकर्मणि। प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि। ण्यादयः। आत्मनिःकर्मगत्यर्थाः धातवः मुख्यकर्मणि प्रत्ययं यान्ति दुह्यादिर्गौणे कर्मणि प्रत्ययं याति। अन्ये तु यथारुचि प्रत्ययं यान्ति। गौणे वा मुख्ये वा। उभयत्रापि वा। तत्र द्विकर्मके कर्मद्वयम्। एकं मुख्यं कर्म। अपरं च गौणं कर्म। यदर्थं क्रिया आरभ्यते। तत् मुख्यं कर्म। अन्यद् गौणम्। ण्यादीनां मुख्ये कर्मणि प्रथमा। याच्यादीनां तु गौणे कर्मणि प्रथमा। प्रच्छादीनां तु मुख्येऽमुख्ये वापि कर्मणि प्रथमा। निन्ये विजनमजागरि रजनीमगमि मदमयाचि सम्भोगम्॥ गोपी हास्यमकार्यत भावश्चेनामनन्तेन। अस्य व्याख्या। अनन्तेन गोपी विजनं निन्ये। अनन्तेन गोपी रजनीमजागरि। गोपीमदमगमि। त्रिषु स्थानेषु गोपी मुख्यं कर्म। गोपी सम्भोगमयाचि। गोपी हास्यमकार्यत। एनां भावोऽकार्यत। अथ दुह्यादीनामुदाहरणानि आह। मूले तु कर्तुरीप्सितमं प्रधानं कर्म। अन्यदप्रधानमिति व्याख्यातम्। तदपि समीचीनम्। नगरं नीयते नागरिकैर्वनेचरः। अत्र वनेचरस्य मुख्यत्वम्। नगरस्य गौणत्वम्। तेन वनेचर इति प्रथमा। यदा मुख्ये कर्मणि प्रथमा तदा गौणे द्वितीया। यदा गौणे प्रथमा तदा मुख्ये द्वितीया भवति। इति विवेकः। यदा मुख्यामुख्ये द्वे अपि प्रत्यये न अभिधीयेते तदोभयत्रापि प्रथमा। भोजनं याच्यते यजमानो याचकेन। अत्र मुख्ये द्वितीया। गौणे प्रथमा। पृच्छ्यते पन्थानं पथिकेन पान्थः। अत्रापि मुख्ये द्वितीया गौणे प्रथमा। शिष्येणाचार्यस्तत्त्वं पृच्छ्यते। अन्यान्यपि उदाहरणानि यथासम्भवं ज्ञेयानि। सप्रत्ययान्तात् कृधातोर्यक्। चिकीर्ष्यते। चिकीर्ष्येत। चिकीर्ष्यताम्। अचिकीर्ष्यत। लिट्लकारे। चिकीर्षाञ्चक्रे। चिकीर्षिषीष्ट। अचिकीर्षि। कटः चिकीर्ष्यते देवदत्तेन। यङन्तात् भूधातोर्यक्। यक्चतुर्षु। अनेन यतः। अनेनाकारलोपः। बोभूयते। बोभूय्येत। बोभूय्यताम्। दिवादावट्। अबोभूय्यत। बोभूयाञ्चक्रे। इत्यादीनि। लुङ्लकारे अबोभूयिषीष्ट। यङन्तात् पचधातोर्यक्। पापच्यते। पापच्येत। पापच्यताम्। अपापच्यत। अनपि च हसात्। अनेन अनपि विषये यङो लोपः। पापचाञ्चक्रे। पापचिषीष्ट। पापचिता। पापचिष्यते। अपाप-

चिष्यत। अपापचि। इत्यादीनि रूपाणि भवन्ति तानि सुगमानि। इति भावकर्मप्रक्रिया समाप्ता।

## अथ लकारार्थप्रक्रिया।

अथ लकारार्थप्रक्रिया कथ्यते।

**हठपौनःपुन्ययोर्लोण्मध्यमपुरुषैकवचनान्तता निपात्यते सर्वकाले सर्वपुरुषविषये अतीते काले।**

**पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः।**
**विगृह्य चक्रे नमुचिद्विषा वशी य इत्थमस्वास्थ्यमहर्निशं दिवः॥**

हठपौनःपुन्ययोः। हठात्कारेऽर्थे। पौनःपुन्यार्थे च धातोर्लोण्मध्यमपुरुषस्य एकवचनं ततो हिः निपात्यते। सर्वकाले। सर्वपुरुषविषये। अतीते काले। अस्योदाहरणानि। पुरीमवस्कन्द अस्मिन् श्लोके उक्तानि ज्ञेयानि। तत्र परोक्षे काले लोण्मध्यमपुरुषस्यैकवचनान्तानि रूपाणि प्रद्रक्ष्यन्ते। श्लोकार्थः सुगमोऽस्ति।

**वर्त्तमानार्थाया अपि विभक्तेः स्मयोगे भूतार्थता वक्तव्या।**

**आह स्म हारीतः। यजति स्म युधिष्ठिरः।**

वर्त्तमानार्थायाः। वर्त्तमानार्थाया अपि त्यादिविभक्तेः स्मइत्यस्य योगे भूतार्थता वक्तव्या। अस्योदाहरणम्। आह स्म हारीतः। अत्र वर्त्तमानेऽपि स्मयोगेन भूतार्थता। द्वितीयमुदाहरणम्। यजति स्म युधिष्ठिरः। अत्रापि वर्त्तमाने स्मयोगेन भूतार्थता भवति।

**वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः।**

**सुप्तोऽहं किल विललाप। नाहं कलिङ्गं जगाम।**

वैचित्त्यापह्नवयोः। वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः। अस्योदाहर-

णम् । वैचित्र्ये । सुप्तोऽहं किल विललाप । अपह्नवे । नाहं कलिङ्गं जगाम । इत्युदाहरणम् ।

## यावत् पुरानिपातयोर्योगे भविष्यदर्थे तिबादयः लट् ।

### पुरा करोति । यावत्करोति । करिष्यतीत्यर्थः ।

यावत्पुरानिपातयोः । यावत् पुरा अनयोर्निपातयोर्योगे भविष्यदर्थे तिबादयः प्रत्यया भवन्ति । लिट्लकारश्च । अस्योदाहरणम् । पुरा करोति । पुरा करिष्यति इत्यर्थः । यावत् करोति । करिष्यति इत्यर्थः ।

## स्मृत्यर्थधातुयोगे भूतेऽर्थे लुट् ।

### स्मरसि मित्र यदुपकरिष्यसि उपकुरुथा इत्यर्थः । इति लकारार्थप्रक्रिया ।

स्मृत्यर्थधातुयोगे । स्मृत्यर्थधातुयोगे सति भूतेऽर्थेऽपि लृट्लकारो भवति । स्मरसि मित्र यदुपकरिष्यसि उपकुरुथाः । इति लकारार्थप्रक्रिया समाप्ता ।

**धातूनामप्यनन्तत्वान्नानार्थत्वाच्च सर्वथा ।**
**अभिधातुमशक्यत्वादाख्यातख्यापनैरलम् ॥**

### इति श्री अनुभूतिस्वरूपाचार्यविरचितायां सारस्वतीप्रक्रियायामाख्यातप्रक्रिया समाप्ता ।

अथ आख्यातोपसंहारमाह धातूनामिति । यतो धातवोऽनन्ता यद्यपि कविकल्पद्रुमादौ चतुःपञ्चाशदधिकसप्तदशशतानि ( १७५४ ) धातुसंख्या प्रतिपादिता । तथापि प्रयोगाणां बहुत्वदर्शनात् धातवोऽनन्ता एव । तथा एकैकस्य धातोः अनेकेऽर्थाः । यथा दिव् क्रीडाविजीगीषाव्यवहारद्युतिस्तुतिमदमोदस्वप्नकान्तिगतिषु । इत्यादि । एवमेकैको धातुरनेकेष्वर्थेषु वर्त्तते । तथा ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्च इत्यनेकार्थत्वम् । तथा उपसर्गयोगादप्यनेकार्थत्वं तत्र उक्तम् । धातूनामनन्तत्वात् नास्ति अन्तो येषां तेऽनन्तास्तेषां भावोऽनन्तत्वं तस्मात् अनन्तत्वात् । तथा प्रत्येकं धातूनां नानार्थत्वात् नानाबहुप्रकारेण अर्थो येषां ते नानार्थास्तेषां भावो नानार्थत्वं तस्माच्चकारात् सर्वथा सर्वप्रकारेण

सम्पूर्णतयाभिधानं कथनं शब्दशास्त्रम् अभिधातुं वक्तुं श्रथयितुं वा अशक्यम्। यदि बृहस्पतिः स्वयं वक्ता। इन्द्रः स्वयं श्रोता तथापि वर्षसहस्रेणापि धातूनामन्तं न गच्छति। लोकाच्छेषस्य सिद्धिरिति सर्वैर्वैयाकरणैरुक्तत्वात् तेषां प्रक्रियाप्रयोगानुसारेण प्रकारान्तरेण वा ज्ञातव्या मया वक्तुं न शक्यते इति कारणात्। आख्यातस्य व्याकरणनवमाधिकारस्य ख्यापनैः कथनैरलं पर्य्याप्त्यैतामिति यावत्।

---

निजजनैर्विधिना निखिलापदो झटिति यो विनिवर्त्तयति स्मृतः।
जलधिजापरिरम्भणलालसो नरहरिः कुरुतां जगतां शिवम् ॥१॥

## अथ कृदन्तप्रक्रिया निरूप्यते।

अथेत्याख्यातकथनानन्तरं कृत्प्रत्यया निरूप्यन्ते। तृतीयवृत्तिस्थप्रत्ययानां 'कृत्' इति संज्ञास्ति ते निरूप्यन्ते प्रकाश्यन्ते। यद्वा कृदन्तप्रक्रिया निरूप्यते। कृत्संज्ञकाः प्रत्यया येषां ते कृदन्ताः शब्दास्तेषां प्रक्रिया निरूप्यते। द्वितीयवृत्तौ धातवः साधितास्ते भवन्त्याद्यन्ताः अत्र तु भ्वादीनां कृत्प्रत्यययोगेन निष्पन्नाः स्याद्यन्ताः शब्दाः साध्यन्ते तत्र चेदमादिसूत्रम्।

### कृत्कर्त्तरि च।

वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्त्तरि च भवन्ति। चकाराद्भावकर्मणोरपि। स्वतन्त्रः कर्त्ता। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात्। शुद्धो धात्वर्थो भावः कर्त्तुरीप्सिततमं कर्म। कर्त्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्। तथायुक्तं चानीप्सितम् ईप्सिततमवदनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। विषं भुङ्क्ते देवदत्तः। अन्नं भुङ्क्ते देवदत्तः।

कृत् कर्त्तरि। कृत् (प्र० ए०) इसे पः। कर्त्तरि (स० ए०) करोतीति कर्त्ता तस्मिन् ङौ इति र् स्वर०। अत्र ये प्रत्यया वक्ष्यन्ते ते कृत्संज्ञकाः कृन्नामानो ज्ञेयाः। अत्र जातान्लिङ्गवचनमिति वचनाद्वक्ष्यमाण इति कथितं स

च कृत्प्रत्ययः प्रायः कर्त्तरि कृत्तुकावेव भवति .चकारात् विशेषविधाने भाव-कर्मणोरपि।

## तृवुणौ।

धातोस्तृवुणौ प्रत्ययौ भवतः। डुपचष् पाके। पच् तृ इति स्थिते। चोः कुः। पक् तृ इति स्थिते। कृत्तद्धितसमासाश्च। प्रातिपदिकसंज्ञा इति केचित्। इति नामत्वम्। नामसंज्ञायां स्यादिर्विभक्तिर्भवति। स्तुरार्। सेरा। पचतीति पक्ता पक्तारौ पक्तारः। पक्तारम्। पुंलिङ्गे पक्ता। ङ्वितः। स्त्रियां पक्त्री। नपुंसके पक्तृ पक्तृणी पक्तॄणि इत्यादि। डुकृञ् करणे। करोतीति कर्त्ता। हृञ् हरणे। हरतीति हर्त्ता। मृङ् प्राणत्यागे। म्रियते इति मर्त्ता। डुभृञ् धारणपोषणयोः। बिभर्त्तीति भर्त्ता।

तृवुणौ। तृश्च वुण्च तृवुणौ (प्र० द्वि०) स्वर०। धातोरग्रे तृवुणौ इत्येतौ द्वौ प्रत्ययौ भवतः कर्त्तरि वुण् इत्यत्र णकारो वृद्ध्यर्थः। उदाहरणम्। डुपचष् पाके पच् तृप्रत्ययः। चोः कुः स्वर० पक्तृ इति जातं कृत्तद्धितसमासाश्चेति नामसंज्ञायाम्। (प्र० ए०) स्तुरार् यदादेशस्तद्वद्भवति इति न्यायात्। सेरा स च डित् डित्वाट्टिलोपः। स्वर०। पक्ता पक्तारौ। स्तुरार् स्वर० पक्तारः। एवं कृ तृप्र० गुणः रात्परो द्विः। कर्त्तृ (प्र० ए०) स्तुरार् सेरा स्वर०। कर्त्ता कर्त्तारौ। एवं सप्तसु विभक्तिषु रूपाणि ज्ञेयानि। एवं हृ हर्त्ता। पचतीति पक्ता। करोतीति कर्त्ता। हरतीति हर्त्ता एवं भर्त्ता भर्त्तारौ भर्त्तारः। भोक्ता दाता पाता स्नाता माता गन्ता वक्ता भंक्ता मंक्ता इत्यादि स्त्रीलिङ्गे पक्त्री हर्त्त्री कर्त्री स्वण् ईप् इतीप् इतरं नपुंसकलिङ्गे पक्तृ पक्तृणी पक्तॄणि इत्यादि।

## क्तः।

सेट्धातोः परस्य क्तप्रत्ययस्य वसादेरिडागमो भवति। क्त इदं सूत्रं सेट्धातुविषयम्। स्वसूतिसूयतिधूञ्रधादीनां इड्वा वक्तव्यः। षूङ् प्राणिप्रसवे। सूते वा सूयतेऽसौ सोता-

सविता। स्वृ शब्दे। गुणः। वा इट्। स्वरतीति स्वरिता स्वर्त्ता। ष्टुञ् स्तुतौ। स्तौतीति स्तोता। एध् वृद्धौ एधतेऽसौ एधिता। यु मिश्रणे। यौतीति यविता। रु शब्दे। रौतीति रविता। णु स्तुतौ। नौतीति नविता। भू सत्तायाम्। भवतीति भविता। गुपू रक्षणे।

क्तः। क्त् (ष० ए०) स्वर० सौ० एकपदं सूत्रम्। सेट्धातोः परस्य वसादेः क्तृप्रत्ययस्य इडागमः स्यात्। वस्प्रत्याहार आदौ यस्य तस्यैव क्तृप्रत्ययस्येडागमः न त्वन्यस्य। उदाहरणम्। भू तृ० प्र० क्त इति इडागमः। गुणः। ओअव्। स्वर०। भवितृ (प्र० ए०) कर्त्तृशब्दवत् साधना। भवतीति भविता। एध्वृद्धौ एधृतृ क्तः एधिता।

## ऊदितो वा।

ऊदितो धातोरिड्वा भवति। गोपायतीति गोपिता गोपायिता गोप्ता। षिधू शास्त्रे माङ्गल्ये च। सेधिता सेद्धा। इषुसहलुभरिषरुषामनपि नस्येड्वा भवति। इषु इच्छायाम्। इच्छतीति एषिता एष्टा। लुभ् विमोहने। लुभ् गार्द्ध्ये। लुभ्यतीति लोभिता। इडभावपक्षे। झबे जबाः। तथोर्धः। लुभ्यतीति लोब्धा। रिष् बन्धने। रेषतीति वा रिष्यतीति रेषिता। रेष्टा। रुष क्रोधे। रोषतीति रोषिता। रोष्टा। षह मर्षणे। आदेः ष्णः स्नः। हो ढः। तथोर्धः। ष्टुभिः ष्टुः। ढि ढो लोपः। सहिवहोरोदवर्णस्य। सहिवहोर्धात्वोरकारस्य ओकारो भवति। सहतेऽसौ सोढा। वह प्रापणे। वहति इति वोढा।

ऊदितो वा। ऊत् ऊकारः इत् यस्य स ऊदित् तस्मात् (पं ए०) सौ० वा (प्र० ए०) अव्य० इवे ऊदिताद्धातोः गुपूरक्षणे षिधू माङ्गल्ये इत्यादेर्वा इडागमः वस्प्रत्याहारादेः क्तृप्रत्ययस्यैव। उदा० गुपू रक्षणे गुपू तृत्रुणौ तृप्र० लघूपधाया लघोर्गुणः ऊदितो वा इति इडागमः स्वर०। उभयत्रापि (प्र० ए०)

स्तुरार् सेरा ङिस्वा० स्वर० गोपिता गोप्ता गोपायतीति गोपिता गोप्ता । षिधू शास्त्रे माङ्गल्ये च । षिधू 'आदेः ष्णः स्नः' सिध् तृप्र० । उपधायाः लघोः । (प्र०ए० ) ऊदितो वेत्येकत्वेडागमः द्वितीये तथोर्धः तृस्थाने धृ ऋवेजबाः स्वर० उभयत्रापि ( प्र० ए० ) सेरा स्तुरार् टिलोपः० स्वर० सेधिता सेद्धा वा शब्दादेव इषु इच्छायामित्यस्य एष्टा एषिता षह्मर्षणे सहने 'आदेः ष्णः स्नः' सहते इति षोढा तृप्रत्ययः ह्रोढः तथोर्धः 'ष्टुभिः ष्टुः' ढि ढो लोपो दीर्घश्च सहिवहोरिति सहिवहोः षह् मर्षणे वह्प्रापणे इत्येतयोः धात्वोः सम्बन्धिनोऽवर्णस्य ओकारो भवति ढकारलोपे सति न । दुःसहं सह्यं भारवाट् इत्यादौ ओकारो न भवति अनेन सा इत्यस्य सो सोढ् ( प्र० ए० ) स्तुरार् सेरा इत्यादि कर्तृशब्दवत् एवं वह्प्रापणे वहतीति वोढा ।

## युवोरनाकौ ।

यु वु इत्येतयोरन अक इत्येतावादेशौ भवतः यथासंख्येन णित्वाद्वृद्धिः । अत उपधायाः । पचति वा पाचयतीति पाचकः पाचकौ पाचकाः । देवशब्दवत् । पठति वा पाठयतीति पाठकः । एवं याचते वा याचयतीति याचकः । भवति वा भावयतीति भावकः । लुनाति वा लावयतीति लावकः । पुनाति वा पावयतीति पावकः । श्रुञ् श्रवणे । शृणोति वा श्रावयतीति श्रावकः । यु मिश्रणे । औ आव् यौति यावयतीति यावकः । बध हिंसायाम् । बधतीति बधकः । हनो घत् । हन्ति वा घातयतीति घातकः । जायते वा जनयतीति जनकः । जनिवध्योर्न वृद्धिः । मितां ह्रस्वः । घटते वा घटयतीति घटकः । आतो युक् । आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे । डुदाञ् दाने । ददाति वा दत्तेऽसौ दायकः । दैप् शोधने । सन्ध्यक्षराणामा० । दायतीति दायकः । वुण्सयुटौ हित्वा दरिद्रातेरनप्यालोपो लुङि वा वक्तव्यः । दरिद्रा दुर्गतौ । दरिद्राति वा दरिद्रायतीति दरिद्रायकः । दरि-

द्रिता। नृतिखनिरञ्जिभ्यो वुर्वक्तव्य:। नृती गात्रविक्षेपे। उपधाया लघो:। राद्यपो द्वि:। नृत्यतीति नर्त्तक:। न दादे:। नर्त्तकी। खनक:, खनकी। रञ्जेर्नलोपो वा। रञ्जक: रजक:, रजकी। युवोरनाकौ इति तद्धितयुप्रत्ययस्य नेति वक्तव्यम्। तेन ऊर्णायु:।

युवोरनाकौ। युश्च वुश्च युवौ तयो: ( ष० द्वि० ) उवं स्वर सो० अनाक। अनश्च अकश्च ( प्र० द्वि० ) ओऔऔ पश्चान्नामिनोर:। स्वर० द्विपदम्। यु वु इत्येतयो: प्रत्यययो: क्रमेण अन अक इत्यादेशौ भवत: यु इत्यस्य अन वु इत्यस्य अक:। उदाहरणम्। पच् ण्वुणौ इति वुण् णकारो वृद्ध्यर्थ: अत उपधाया इति युव्वोरिति वु इत्यस्य अकादेश: स्वर० पचतीति पाचक: ( प्र० ए० ) सो० एवं पठ् पठति पाठयति वा पाठक: डुकृञ् करणे ण्वुण् धातोर्नामिन: कार वु इत्यस्य अक स्वर० करोति कारयति वा कारक.। ( प्र० ए० ) सो० एवं भू वुण् उकारस्य औकारो वृद्धि: औ आव् अक० स्वर० भवतीति भावक:। एवं लूञ् छेदने लुनातीति लावक:। यु मिश्रणे यौतीति यावक:। श्रु श्रवणे शृणोतीति श्रावक:। एतेषां रूपाणि देवशब्दवत्। तद्धितसम्बन्धियुप्रत्ययस्यानादेशो न। तेन उर्णायु:। शयु:।

## नाम्युपधात् क:।

नाम्युपधाद्धातो: क: प्रत्ययो भवति। ककारो गुणाभावार्थ:। क्षिप् प्रेरणे। क्षिपतीति क्षिप:। छिदिर् द्वैधीकरणे। छिनत्तीति छिद:। भिदिर् विदारणे। भिनत्तीति भिद:। दुह प्रपूरणे। द्रवद्रव्यविभागानुकूलो व्यापार: प्रपूरणम्। कामान् दोग्धि सा कामदुघा। दुह: के वा घो वाच्य:। तेन कामदुहा। दुह: दुघ:। तुद व्यथने। तुदतीति तुद:। विद ज्ञाने। वेत्तीति विद:। द्विष् अप्रीतौ। द्वेष्टीति द्विष:। षुर ऐश्वर्यदीप्त्यो:। सुरतीति सुर:। शुभ् शोभायाम्। शोभते तत् शुभं कल्याणम्।

नाम्युपधात् कः। नामी उपधा यस्य स नाम्युपधस्तस्मात् (पं० ए०) ङसि-वत्। सवर्णो० क (प्र० ए०) सौ० नामी अवर्णवर्जाः। स्वर० इकारादिः स उपधा यस्य तस्माद्धातोः कप्रत्ययो भवति ककारो गुणप्रतिषेधार्थः। क्षिप् प्रेरणे क्षिप् अत्र नाम्युपधात् कप्रत्ययः। स्वर० सौ० क्षिपः क्षिपते प्रेरयतीति क्षिपः। एवं भिदिर् विदारणे भिनत्तीति भिदः छिदिर् द्वैधीकरणे छिनत्तीति छिदः।

## जानातेश्च।

जानातेर्धातोरपि कः प्रत्ययो भवति। जानातेश्चेति चकारात् कॄ गॄ दॄ धृ प्री ब्रुवामपि कः प्रत्ययो भवति। कॄ विक्षेपे।

जानातेश्चेति ज्ञा अवबोधने इत्येतस्यापि धातोः कप्रत्ययो भवति ज्ञा अकित्त्वादातोऽनपीत्याकारलोपः। स्वर० (प्र० ए०) सौ० ज्ञः जानातीति ज्ञः। चकारात् क्वत् प्रत्ययोरपि कप्रत्ययः किर।

## ॠत इर्।

दीर्घॠकारान्तस्येर् नान्यस्य। किरतीति किरः। धृञ् धारणे। धरतीति ध्रः। प्रीञ् तर्पणे। प्रीणाति वा प्रीणी-तेऽसौ प्रियः। नु धातोः। गॄ निगरणे। गिरतीति गिरः स्वरे परे गिरस्य लत्वं वा वाच्यम्। गिले परेऽगिलस्य। गिलशब्दं विहाय पूर्वस्य मुम् वक्तव्यः। तिमिं गिलतीति तिमिङ्गिलः। अगिलस्येति किम्। गिलगिलः। ब्रूञ् व्यक्तायां वाचि। नु धातोः। ब्रवीतीति ब्रुवः। अपिशब्दात् कर्त्तरि ग्रहेरपि कः प्रत्ययो भवति। गृह्णातीति गृहम्। तात्-स्थात् गृह्णन्ति ते गृहा दाराः।

ॠतइर्। प्रियः प्रीञ् कप्र० नुधातोरिति इय्।

## पचिनन्दिग्रहादेरयुणिनि।

पचादेर्नन्द्यादेर्ग्रहादेश्च अयुणिनि इत्येते प्रत्यया भवन्ति

यथासंख्येन। पचतीति पचः। वक्तीति वचः। वेत्तीति वेदः। वपतीति वपः। चरिचलिपतिहनिवदीनां वा द्वित्वं पूर्वस्याऽऽगागमश्च अप्रत्यये परे। हसादेशेषाभावः। चर गतिभक्षणयोः। चरतीति चराचरः चरः। चल चलने। चलतीति चलाचलः चलः। पत्लृ पतने। पततीति पतापतः पतः। वदतीति वदावदः वदः। हन्तेर्घनश्च। हन्तीति घनाघनः हनः। चकाराद्घन शब्दे। घनतीति घनाघनः घनः इत्यादि। णद अव्यक्ते शब्दे। नदतीति नदः। प्लुङ् गतौ। प्लवतेऽसौ प्लवः। चरतेऽसौ चरः। क्षमूष् सहने। क्षमतेऽसौ क्षमः। पचादिषु देवट् नदट् इति टकारानुबन्धत्वादीप्। दीव्यतीति देवी। षिवु तन्तुसन्ताने। षेवृ सेवने। सेवतेऽसौ सेवः। सीव्यतीति सेवः। व्रण क्षते। व्रण रुजि। व्रण शब्दे। व्रणतीति व्रणः। अन प्राणने। प्राणितीति प्राणः। दृशिर् प्रेक्षणे। पश्यतीति दर्शः। सृप्लृ गतौ। सर्पतीति सर्पः। भृञ् भरणे। भरते वा भरतीति भरः। डुभृञ् धारणपोषणयोः। बिभर्त्ति वा बिभृतेऽसौ भरः। सहतेऽसौ सहः। पचादिराकृतिगणः पचादेरप्रत्ययो निरुपपदस्यैव ज्ञातव्यः। इति पचादिः।

पचिनन्दिग्रहादेरयुणिनि। पचिश्च नन्दिश्च ग्रहश्च पचिनन्दिग्रहं तदादिर्यस्य स पचनन्दिग्रहादिस्तस्मात् (पं० ए०) ङिति ङस्येत्यलोपः। सौ० अयुणिनि अश्च युश्च णिनिश्च अयुणिनि (प्र० ए०) नपुंसकात् स्यमोर्लुक् पश्चात् नामिनोरः स्वर० वृत्तिः कण्ठ्या। पचादेः अप्रत्ययः नन्द्यादेर्युः प्रत्य० ग्रहादेर्णिनिः प्र० णकारौ वृद्ध्यर्थः इकार उच्चारणार्थः उदा० पच् अप्र० स्वर० सौ० पचः। एवं वदतीति वदः। दिव क्रीडा० दिव् दीव्यतीति देवः अप्र० उपधाया लघोः स्वर० (प्र० ए०) सौ०। एवं षिव् सेवायां 'आदेः ष्णः स्नः' सिव् सेवः सेवते इति सेवः। पच् वद् देव् सेव् चप् नन्द् भष् प्लव् चर् जर् मद् क्षर् वेद् सेध् क्रोध् कोप् नर्त् व्रण् सर्प् भृङ् स्वप इत्यादि पचादयः।

## अथ नन्द्यादिर्निरूप्यते।

टुणदि समृद्धौ। इदितो नुम्। नन्दति वा नन्दयतीति नन्दनः। नन्दतीति नन्दकः। रमु क्रीड़ायाम्। रमतेऽसौ रमणः। वाम क्रम संहर्षे। वामतीति वामनः। क्रामतीति क्रमणः। वास्त। शब्दे। वासयतीति वासनः। मितां ह्रस्वः। मदि हर्षे। माद्यतीति मदनः। दुष वैकृत्ये दुषेर्णौ कृति च दीर्घो वक्तव्यः। दूषयतीति दूषणः। राध् साध् संसिद्धौ। राध्यतीति वा राधयतीति राधनः, साधनः। वृधुङ् वृद्धौ। वर्द्धयतीति वर्द्धनः। रु शब्दे। रौर्युण्। रु शब्द इत्येतस्माद्धातोर्युच् प्रत्ययो भवति। रौति वा रावयतीति रावणः। रुशब्दात् युरपि वक्तव्यः। तेन रवणः। ऋकारान्ताच्च। युणप्रत्ययो भवति। करोतीति वा कारयतीति कारणः, कारकः। शुभ् शोभने रोचने च। शोभयतीति शोभनः। रुच् दीप्तौ। रोचयतीति रोचनः। विभीषयतीति विभीषणः। णश् अदर्शने। चित्तं विनाशयतीति चित्तविनाशनः। युध्यते इति योधनः। एते अग्रन्ताः। सहतेऽसौ सहनः। तपतीति तपनः। ज्वल दीप्तौ। ज्वलतीति ज्वलनः। शम् दम् उपशमे। शाम्यतीति शमनः। दाम्यतीति दमनः। जल्पतीति जल्पनः। तृप् प्रीणने। तृप्यतीति तर्पणः। रमणः। दृप् सन्दर्पे। दृप्यतीति दर्पणः। क्रन्द आक्रन्दने। क्रदि आह्वाने रोदने च। संपूर्वः। संक्रन्दति वा संक्रन्दयतीति संक्रन्दनः। कृष् निष्कर्षे। कृष् आमर्षणे। सङ्कर्षतीति सङ्कर्षणः। अर्द मर्द अर्दने। अर्द गतौ याचने च। जनान् अर्दयतीति जनार्दनः। मर्दयतीति मर्दनः। घृष् सङ्घर्षणे। सङ्घर्षतीति सङ्घर्षणः। पुना-

तीति पवनः। पवतेऽसौ पवनः। षूद भक्षणे। षूद निवर्हणे। सूदो हिंसायाम्। मधुं सूदयतीति मधुसूदनः। लुनातीति लवणः। अत्र णत्वं निपात्यते। शत्रून् दाम्यतीति वा दामयतीति शत्रुदमनः। इति नन्द्यादिः।

टुणदि समृद्धौ। णद् 'आदेः ष्णः स्नः' नदृपचनन्दीति युप्र०। इदित इति नुमागमः। नश्वा० युवोरनाकौ। अन स्वर० नन्दयति वर्द्धयति कुलमिति नन्दनः (प्र० ए० सौ० रम् यु युवो स्वर० षृ नोंणो० रमते इति रमणः नन्दनः रमणः वासनः वसनः मदनः दूषणः साधनः शोभनः रोचनः तपनः जल्पनः दर्पणः हर्षणः अर्द्दनः यवनः लवणः मधुसूदनः विचक्षणः इत्यादि नन्द्यादयः। रोर्युण् रु शब्दे इत्यस्य धातोर्युण् प्रत्ययो भवति णकारो वृद्ध्यर्थः। रु युणित्वाद्वातोर्नामिनः। रौ युवो० अन औआव् स्वर० षृ नोंणो० (प्र० ए०) सौ० रौति रावयति वा रवणः। युरपि। तेन रवणः।

## अथ ग्रहादिर्निरूप्यते।

ग्रह उपादाने। इनां शौ सौ। हसे पः सेर्लोपः। णिनिप्रत्ययान्ताः सर्वे दण्डिवत्। गृह्णातीति ग्राही उत्साही। आस् उपवेशने। उदास्तेऽसौ उदासी। दास्ट दाने। उत्पूर्वः उद्दासी। भास्ट दीप्तौ। उद्भासतेऽसौ उद्भासी। आतो युक्। छो छेदने। छ्यतीति छायी। तिष्ठतीति स्थायी। मन्त्रि गुप्तभाषणे। मन्त्रि अवधारणे। मन्त्रयतीति मन्त्री। मृद मर्दने। मर्द आमर्दने। मृदु आर्जवे। सम्मर्दति वा सम्मर्दयतीति सम्मर्दी। निस्रौतीति निस्रावी। निश्शृणोतीति निश्रावी। रक्ष् पालने। निरक्षतीति निरक्षी। वस् निवासे। निवसतीति निवासी। टुवप् बीजसन्ताने। निवपतीति निवापी। शो तनूकरणे। निश्यतीति निशायी। नञ्पूर्वेभ्यः कृञ्गीयाचृवदिभ्यो णिनिश्च। न करोति वा कुरुतेऽसौ अकारी। इनां शौ सौ।.. न हरतीत्यहारी। णीञ् प्रापणे।

न नयतीत्यनायी । न याचतेऽसौ अयाची । न वदतीत्यवादी । रध हिंसायाम् । णिनिश्चेति चकारादपावपरिविभ्यो णिनिः । अपराध्यतीत्यपराधी । रुधिरावरणे । अवरुणद्धीत्यवरोधी । परिभवतीति परिभावी । विपूर्वः । विचरतीति विचारी । विशेषेण रौतीति विरावी । इति ग्रहादयः ।

ग्रह उपादाने गृह्णातीति ग्राही । ग्रहादित्वात् णिनि प्र० इन् उपधाया स्वर० । इनां शौ सौ । दीर्घः । हसे पः । नाम्नो० । रु शब्दे । रु विपूर्वः । विशेषेण रौतीति विरावी । णिन् प्र० इन् णित्वाद्धातोर्ना० औ आव् स्वर० ( प्र० ए० ) दण्डिन् शब्दवत् । उदासी उद्भासी स्थायी यायी संमर्द्दी वादी परिभावी निःश्रावी निवासी इत्यादि ग्रहादयः ।

## अथ दृशादिर्निरूप्यते ।

दृशादेः शः । दृश् हन् धेट् ध्मा घ्रा पा दा धा विद् एभ्यः शः प्रत्ययो भवति । शकारः शिति चतुर्वत्कार्य्यार्थः ।

दृशादेः शः । दृश्आदिर्यस्य स दृशादिः तस्मात् ( पं० ए० ) ङिति ङस्येत्यलोपः । सो० श् ( प्र० ए० ) सो० दृश् धेट् पा ध्मा हन् इत्यादेर्धातोः शप्रत्ययो भवति । शकारः शित्कार्य्यार्थः । शित्प्रयोजनमाह ।

## शिति चतुर्वत् ।

शिति प्रत्यये परे तिवादिषु परेषु यत्कार्य्यमुक्तं तद्भवति । दृशादेः पश्यादिः । अप् अदे । पश्यतीति पश्यः । उत्पूर्वः । उत् ऊर्ध्वं पश्यतीति उत्पश्यः । हन् हिंसागत्योः । अप् । अदे । अदादित्वादपो लुक् । अपित्तादिर्ङित् । गमां स्वरे । हनो घ्न । गां हन्तीति गोघ्नः । पापघ्नः । धेट् पाने । अप् । अदे । धयतीति धयः । ध्मा, धमादेशः । धमतीति धमः । उद्धमतीति उद्धमः । घ्रा, जिघ्रादेशः । जिघ्रतीति जिघ्रः । पा पाने । पिबादेशः । पिबतीति पिबः । अप् । अदे ।

ह्वादेर्हिश्च। दादेः। इत्याकारलोपः। ददाति वा दत्तेऽसौ ददः। दधाति वा धत्तेऽसौ दधः। मुचादेर्मुम्। तुदादेरः। विद्लृ लाभे। गां विन्दतीति गोविन्दः।

शिति चतुर्वत्। श् शकार इत् यस्य स शित् तस्मिन् (स० ए०) स्वर० चतुर्भिस्तुल्यं चतुर्वत् (प्र० ए०) अव्य० वृत्तिः सुकरा नवरम्। शिति प्रत्यये परे तिबादिः वर्त्तमाना १ विधिसम्भावना २ आशीः प्रेरणा ३ अनद्यतनाख्य ४ विभक्ति चतुष्टयस्य यत्कार्यं दृशादेः पश्यादिः अप् कर्त्तरीत्यादि। तद्भवतीति। उदा० दृश् पश्यतीति पश्यः शप्र० चतुर्वत्त्वात् अप्कर्त्तरि। दृशादेः पश्यादिरिति पश्यादेशः। स्वर० अदे० स्वर० (प्र० ए०) सि सो० धेट् पाने। धे धयतीति धयः शप्र० अप्कर्त्तरि एअय् स्वर० अदे० स्वर० एवं स्तनन्धयः। एवं पिबः। ध्मा शब्दाग्निसंयोगयोः। धमादेशः उत्पूर्वः। उत् प्राबल्येन धमतीति उद्धमः। शप्र० अप्कर्त्तरि अदे० स्वर०। उद्धमः (प्र० ए०) सो०। हन् हिंसागत्योः हन्। गोपूर्वः। गां हन्तीति गोघ्नः। शप्र० अ अप्कर्त्तरि अदादेर्लुक् पश्चात् हनोघ्नि हस्य घः पूर्वं गमां स्वरे स्वर० सो० एवं क्षतघ्नः।

## ज्वलादेर्णः।

ज्वलादेर्गणात् णः प्रत्ययो भवति। ज्वलादेर्णो वेति केचित्। पक्षे पचादित्वादः। ज्वल् दीप्तौ। ज्वालः ज्वलः। तपतीति तापः तपः। पथि गतौ। चुरादिः। इदित् पान्थयतीति वा पन्थतीति पान्थः पथः। अत्र वृद्ध्यनन्तरं नुमागमः। ज्वलादिगणपाठसामर्थ्यात्। पत्लृ गत्यैश्वर्ययोः। पततीति पातः पतः। क्वथ् पचने। क्वथतीति क्वाथः क्वथः। पथ् गत्याम्। पथतीति पाथः पथः। मथ् गाढे। मथतीति माथः मथः। सहतेऽसौ साहः सहः। इति ज्वलादिः। अथाऽण्।

ज्वलादेर्णः। ज्वल आदिर्यस्य स ज्वलादिस्तस्मात् (पं० ए०) ङिति ङसेत्यलोपः सो० नामिनो रः रात्यपो हिः जलतुं० ज्वलादेः ज्वल् तप् पथि पद इत्यादेर्धातोः णप्रत्ययो भवति। णकारो वृद्ध्यर्थः ज्वल् दीप्तौ ज्वल् णप्र० अ

स्वर० अत उपधायाः ( प्र० ए० ) स्रो० एवं तप् सन्तापे तापः । पद गतौ पदः । पथि गतौ पथ् अप्र० वृद्धिः स्वर० पन्थति गच्छतीति पाथः। लक्ष्यसुद्दिश्य लक्षणस्य प्रवृत्तिरिति प्रथमवृद्धिस्तत इदित इति नुगागमः नश्चापदाम्० ।

## कार्य्येऽण् ।

**धातोः कर्मणि प्रयुज्यमाने अण् प्रत्ययो भवति कुम्भकारः । ग्रन्थकारः ।**

कार्य्येऽण्। कार्य्ये ( स० ए० ) अइए अण् ( प्र० ए० ) स्रो पः यत् क्रियते तत् कर्म तस्मिन् कर्मणि पूर्वे प्रयुज्यमाने धातोः अण्प्रत्ययो भवति। कृ कुम्भपूर्वः कुम्भं करोतीति कुम्भकारः। अण्प्र० धातो० इति वृद्धिः। कार स्वर० (प्र० ए०) स्रो०। एवं ग्रन्थपूर्वः ग्रन्थं करोतीति ग्रन्थकारः। एवं शास्त्रकारः। एवं तन्तुवायः।

## आतो डः ।

**आकारान्ताद्धातोः कर्मणि प्रयुज्यमाने डप्रत्ययो भवति । गोदः । धनदः । जलदः ।**

आतो डः। आत् ( पं० ए० ) स्वर० स्रो० ड ( प्र० ए० ) स्रो० हवे ओओ सिद्धम् आकारोऽन्ते येषां तेषां धातूनां डप्रत्ययो भवति कर्मणि प्रयुज्यमाने डकारष्टिलोपार्थः। डुदाञ् दाने। दा गोपूर्वः। गां ददातीति गोदः डप्र० टिलोपः स्वर०। एवं धनं ददातीति धनदः। एवं जलदः।

## नाम्नि च ।

**नाममात्रे प्रयोक्तव्ये डप्रत्ययो भवति कर्त्तरि भावे च। आखूत्थम्। द्वाभ्यां पिबतीति द्विपः। द्वौ वारौ जायतेऽसौ द्विजः। गृहैर्दारैः सह तिष्ठतीति गृहस्थः। शीङ् स्वप्ने। गिरिशः। पादैः पिबतीति पादपः। द्रु गतौ। शुचं द्रवतीति शूद्रः।**

नाम्नि च। नामन् ( स० ए० ) अल्लोपः स्वरै० स्वर० च ( प्र० ए० )

भव्य० । नाम्नि नाममात्रे कर्मादिनियमरहिते प्रयुज्यमाने डप्रत्ययो भवति कर्त्तरि चकाराड्भावेऽपि । यथा आखूनां मूषकाणाम् उत्थानम् आखूत्थं ष्टा । आदेः षः सः । स्था उत्पूर्वः उदः स्थादेरिति सलोपः । खसेचपाः । आखुपूर्वः सवर्णे० डप्र० टिलोपः स्वर० ( प्र० ए० ) तौश्रमृइत्यादौ उदा० पा पाने वा द्विपूर्वः द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपः डप्र० श्च टिलोपः स्वर० ( प्र० ए० ) सो० एवं द्विवारं द्वाभ्यां वा जन्मसंस्काराभ्याम् एकं जन्मतो द्वितीयं दीक्षासंस्काराच्च जायते उत्पद्यते इति द्विजः जनी प्रादुर्भावे जनेर्जा आदेशः डप्र० टिलोपः स्वर० ष्ठा गति ष्ठा० आदेः षः सः । स्था षस्य स निमित्ताभावे इति ष्ठस्य थः । गृह-पूर्वः । गृहे तिष्ठतीति गृहस्थः डप्र० टिलोपः स्वर० । द्रु गतौ शुच्पूर्वः शुचं शोकं द्रवति गच्छति प्राप्नोति हीनजातित्वादिति शूद्रः डप्र० श्च टिलोपः ।

## शुचः शूद्रे ।

**शुचः शूरादेशो भवति द्रे परे ।**

शुचः शूद्रे । शुच्शब्दस्य द्रे इति डप्रत्ययान्ते द्रुधातौ परे शू इत्ययमादेशो भवति अनेन शुचः शू । शूद्रः ।

## उरसः सलोपो मुम्वा ।

**उरसः सकारस्य लोपो भवति डप्रत्ययान्ते गमौ मुमागमश्च वा । उरसा गच्छतीत्युरगः, उरङ्गः सर्पः ।**

उरसः० । उरस्शब्दस्य उपपदस्य गमिधातौ परे सकारस्य लोपो भवति वा विकल्पेन मुमागमो भवति । गम् उरस्पूर्वः उरसा हृदयेन गच्छतीति उरगः उरङ्गो वा । नाम्नीति डप्र०श्च टिलोपः स्वर० उरस् इति सलोपः एकत्र मुमागमः नश्चा० एवं विहायसा आकाशेन विहायसि आकाशे वा गच्छतीति विहगः विहङ्गः ।

## विहायसो विहश्च ।

**विहायस्शब्दस्य विहादेशो भवति चकारान्मुम्वा डान्ते गमौ । विहायसि आकाशे गच्छतीति विहगः विहङ्गः । भुजस्य च मुम्वा डप्रत्ययान्ते गमौ । भुजो वक्रार्थे । भुजं**

अङ्गं गच्छतीति भुजगः भुजङ्गः। विहायसो विहश्चेति चकारात् तरस्तुरादेशः। सुम्वेति अनुवर्त्तनीयम्। तरसस्तुरादेशः तुरस्य सुम्वा डान्ते गमौ। तरसा वेगेन गच्छतीति तुरगः तुरङ्गः।

विहायसो विह च। विहायस्शब्दस्य विहादेशः सुमागमश्च वा। क्षप्र० चकारात् भुजं कुटिलं गच्छतीति भुजगः। भुज् कौटिल्ये भुजगः भुजङ्गः, प्लवगः प्लवङ्गः, तुरगः तुरङ्गः इत्याद्यपि।

## अटौ।

नाम्नि कार्य्ये च उपपदे सति अटौ प्रत्ययौ भवतः। अस्थि हरतीति अस्थिहरः कः श्वा। कवचं हरतीति कवचहरः कुमारः। धृञ् धारणे। धनुर्धरतीति धनुर्धरः चत्रियो वा राजा। चर गतौ। कुरुषु देशेषु चरतीति कुरुचरः। ट ईबर्थः। स्थितः। स्त्री चेत् कुरुचरी, मद्दीचरी, सेनाचरी, भिक्षाचरी, दीक्षाचरी। अप्रत्ययः सर्वधातुसाधारणः। टप्रत्ययस्तु चरादेरेव भवति। शोकं करोतीति शोककरी कन्या। यशः करोतीति यशस्करी विद्या। सृ गतौ। पुरः सरतीति पुरःसरः। अग्रे सरतीति अग्रेसरः। पार्श्वे शेतेऽसौ पार्श्वशयः। तथैव पृष्ठे शेतेऽसौ पृष्ठशयः। उदरशयः। उत्तानादिषु कर्त्तृषु। उत्तानः शेतेऽसौ उत्तानशयः। स्तम्बे रमतेऽसौ स्तम्बेरमः हस्ती। जप जल्प व्यक्तायां वाचि। कर्णेजपः। ग्रह उपादाने। शक्तिं गृह्णातीति शक्तिग्रहः। लाङ्गलग्रहः। यष्टिग्रहः। अङ्कुशग्रहः। तोमरग्रहः। घटीग्रहः। धनुर्ग्रहः। सूत्रग्रहः। पुष्पग्रहः। फलग्रहः। कामग्रहः अधुरग्रहः। शम्पूर्वः कृञ्। शं सुखं वा कल्याणं करोतीति

अङ्कुर:। प्रियंवद: भारंवह:। अत्र कर्मणि अणपि वक्तव्य:। भारवाह: श्वेतवाह: इत्यादि।

अटौ। अश्च टश्च अटौ ( प्र० द्वि० ) औऔऔ औ नाम्नि कार्ये च वाच्यमाने अकारटकारौ प्रत्ययौ यथायोग्यं भवत:। टप्रत्यये टकार ईबर्थ:। पचिनन्दीति पचादीनां निरुपपदानाम् अप्रत्यय: उक्त:। अटावित्यत्र तु सोपपदानाम् अप्रत्यय इति न पौनरुक्त्यम्। उदाहरणं हृहरणे अस्थिपूर्व: अप्र० गुण: स्वर० अस्थीनि हरतीति अस्थिहर: श्वा कुक्कुर:। एवं कवचं सन्नाहं हरतीति कवचहर: कुमार: इन्द्र: वा। एवं धृ धनुष्पूर्व: दोषामिति षस्य र: राद्यपोहि: ऋवेजवा: जव० धनुर्द्धरतीति धनुर्द्धर: कुमार: इत्यादय: अप्रत्ययान्ता:। चर् गतिभक्षणयो:। चर् कुरुपूर्व:। कुरुषु देशेषु चरतीति कुरुचर:। स्त्री चेत् कुरुचरी। टप्रत्य० अ स्वर० एकत्र ( प्र० ए० ) सौ० द्वितीये टित्वात् ङित ङ्तीप्। यस्य लोप: ( प्र० द्वि० ) इसेप: नदीशब्दवत्।

## इखखि।

धातोर्नाम्नि कार्ये च सति इ ख खि एते प्रत्यया भवन्ति। खकार: खिति पदस्येति सूत्रस्य विशेषणार्थ:।

इखखि। इश्च खश्च खिश्च इखखि ( प्र० व० ) साङ्केतिकम्। यद्वा। ( प्र०ए० ) नपुंसकात् स्यमोर्लुक्। धातोर्नाम्नि कार्ये च सति इखखि एते त्रय: प्रत्यया भवन्ति यथायोग्यम्। उदा० कृ स्तम्बपूर्व: स्तम्बं करोतीति विग्रहे इप्रत्यय: गुण: स्वर० ( प्र० ए० ) सौ० स्तम्बकरि: व्रीहि: शालि:। एवं शकृत्करिर्वत्स:। आप्लृ व्याप्तौ। आप् देवपूर्व: देवानाप्नोतीति देवापि:, इप्र० स्वर०। एवं वातापि:, एवं फलेग्रहि:, नाथहरि:, दृतिहरि: पशु:।

## खिति पदस्य।

खिति प्रत्यये परे पूर्वपदस्याव्ययवर्जितस्य मुमागमो भवति। तेन दोषामन्यमह:। आत्मानं दोषा मन्यते तद्दोषामन्यम् अह:।

शकृत्स्तम्बात्कृञ: फलरजोमलाद्ग्रहो ह्वञ:।
दृतिनाथाद्देववातादाप: कर्त्तरि वाच्य इ:॥

वत्सव्रीह्योरेव। डुकृञ् करणे। शकृत्करोतीति शकृत्करिः॥ कः वत्सः। स्तम्बं करोतीति स्तम्बकरिः। कः व्रीहिः। फले गृह्णातीति फलेग्रहिः। वा फलानि गृह्णातीति फलेग्रहिः वृक्षः। फलस्येदन्तत्वं निपातनात्। रजो गृह्णातीति रजोग्रहिः मलग्रहिः। दृतिं हरतीति दृतिहरिः। नाथहरिः॥ आप्लृ व्याप्तौ। देवान् आप्नोतीति देवापिः। वातम् आप्नोतीति वातापिः।

करीषकूलसर्वाभ्राल्कषः प्रियवशाद्वदः।
ऋतिमेघभयात्कृञः क्षेममद्रप्रियात्तु वा॥

कष निष्कर्षे। करीषं कषतीति करीषङ्कषः। 'तत्तु शुष्कं करीषोऽस्त्री' इत्यमरः। कूलं कषतीति कूलङ्कषः। सर्वं कषतीति सर्वङ्कषः। अभ्रं कषतीति अभ्रङ्कषः। खकारो मुमागमार्थः। वद व्यक्तायां वाचि। प्रियं वदतीति प्रियंवदः। वशंवदः। ऋतिं करोतीति ऋतिङ्करः, मेघङ्करः, भयङ्करः। विकल्पपक्षे कार्य्ये अण्। क्षेमं करोतीति क्षेमङ्करः क्षेमकारः। भद्रं करोतीति भद्रङ्करः भद्रकारः। प्रियं करोतीति प्रियङ्करः प्रियकारः।

आशिताच्च भुवो भावे करणे चतुराद्भुजात्।
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात्॥
गच्छतेः प्रत्ययः खः स्याद्भृञो धातोस्तु खिर्भवेत्।
आत्मन् कुक्ष्युदरेभ्यः स्युस्तथा वाचंयमादयः॥

आशितेन भूयते इति आशितम्भवम्। भावे नपुंसकता वाच्या। आशितो भवत्यनेनेति आशितम्भव ओदनः। तुरं गच्छतीति तुरङ्गमः। भुजङ्गमः, विहङ्गमः, सुतङ्गमः, उरङ्गमः, हृदयङ्गमः, जनङ्गमः। प्लवेन गच्छतीति प्लवङ्गमः।

डुभृञ् धारणपोषणयोः। आत्मानं बिभर्त्तीति आत्मम्भरिः, कुक्षिम्भरिः, उदरम्भरिः। लुप्तविभक्तेश्च पदान्तत्वं विज्ञेयम्। अतःपरं वाचंयमान् कथयति। वाचंयमादयो निपात्याः। वाचं यच्छतीति वाचंयमः। अत्र अकारो निपात्यते। दृ विदारणे पुरं दारयतीति पुरन्दरः। तप सन्तापे। द्विषं तापयतीति द्विषन्तपः। परन्तपः। सर्वं सहतेऽसौ सर्वंसहः। विश्वं बिभर्त्तीति विश्वम्भरः। भगं दारयतीति भगन्दरः। तॄ प्लवनतरणयोः। रथं तरतीति रथन्तरः। वृञ् वरणे। पतिं वृणोतीति वा वृणुते सा पतिंवरा। जि जये। धनं जयतीति धनञ्जयः। धृञ् धारणे। वसूनि वा वसु धरति वा धरतेऽसौ वसुन्धरा। शत्रुं सहतेऽसौ शत्रुंसहः। अरिं दाम्यतीति अरिन्दमः। शत्रुन्तपः। एते वाचंयमादयः।

खितिपदस्य। ख् इत् यस्य स खित् तस्मिन् (स० ए०) स्वर० पद (ष० ए०) ङस्य खिति खकारेतप्रत्यये पूर्वपदस्य मुमागमो भवति। उकार उच्चारणार्थः। कृ क्षेमपूर्वः क्षेमङ्करः इखखि इति खप्रत्ययः अ खकारो मुमागमार्थः खितिपदस्येति मोनु० गुणः स्वर०। एवं प्रियं वदतीति प्रियंवदः, वशंवदः, कूलङ्कषः, अभ्रंलिहः, वाचंयमः, पुरन्दरः, भयङ्करः, परन्तपः, सर्वंसहः, विश्वम्भरः, मितम्पचः, विधुन्तुदः, सूर्य्यम्पश्यः, ललाटन्तपः इत्यादि। डुभृञ् आत्मन्पूर्वः आत्मानं बिभर्त्तीति आत्मम्भरिः खिप्रत्ययः इ नाम्नो० खिति पदस्य मोऽनु० स्वर० (प्र० ए०) सो०। एवं उदरम्भरिः कुक्षिम्भरिः इत्यादयोऽपि ज्ञेयाः

## एजः खश्।

एजृ कम्पने इत्यादीनां खश् प्रत्ययो भवति। खकारो मुमागमार्थः। शकारः शिति चतुर्वत्कार्य्यार्थः। धातोः प्रेरणे। इति ञिः प्रत्ययः। जनान् एजयतीति जनमेजयः।

अरुर्द्विषदजन्तस्य मुम्॥

नाड़ीमुष्टिशुनीपाणिकरस्तनाख्यनासिकात्॥

मनु अवबोधने। दिवादेर्यः। आत्मानं पण्डितं मन्यते स पण्डितम्मन्यः। धेट् पाने। सुखं धयतीति सुखन्धयः। कूलन्धयः, आस्यन्धयः, पुष्पन्धयः। ध्माधेटोस्तुल्योपपदत्वं ज्ञेयम्। ध्मा शब्दाग्निसंयोगयोः। नाड़ीं धयतीति नाड़िन्धयः, नाड़िन्धमः। खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः। मुष्टिन्धयः, मुष्टिन्धमः, शुनिन्धयः, शुनिन्धमः, पाणिन्धयः, पाणिन्धमः, करन्धयः, करन्धमः, स्तनन्धयः, स्तनन्धमः, नासिकां धयतीति नासिकन्धयः, नासिकन्धमः।

ध्माखारीवातघटीतो रुजवहौ तु कूलतः।
अरुर्विधुतिलात्तुद स्यादसूर्य्योग्राद्दृशिस्तपिः॥
ललाटतो वहाभ्राल्लिह् मितमाननखात्पचिः।
वातादजिरिरायामट् जहातिः शर्धतस्तथा॥

खारीं धमतीति खारिन्धमः, वातन्धमः, घटिन्धमः। रुजो भङ्गे। वह प्रापणे। उत्पूर्वः। कूलमुद्रुजतीति कूलमुद्रुजः। कूलमुद्वहतीति कूलमुद्वहः। अरुः किं मर्मस्थानम्। अरुस्तुदतीति। अरुन्तुदः, विधुन्तुदः, तिलन्तुदः। दृशिर् प्रेक्षणे। न सूर्य्यं पश्यन्तीति असूर्य्यम्पश्याः। के राजदाराः। उग्रम्पश्यः, ललाटन्तपः। लिह् आस्वादने। वहं लेढीति वहंलिहः, अभ्रंलिहः। मितं पचतीति मितम्पचः, प्रस्थम्पचः, मानम्पचः, नखम्पचः। अज गतौ क्षेपणे च। वातमजतीति वातमजः। मदी गर्वग्लपनयोः। इरया माद्यतीति इरम्मदः। ओहाक् त्यागे। शर्द्धं जहतीति शर्द्धञ्जहा माषाः। इति खशप्रत्ययः।

एजाद्यश्। एज् (ष० व०) खश० मोनु० खश् (प्र० ए०) इमे चः

एजृ कम्पने इत्यादीनां धातूनां खश्प्रत्ययो भवति। खकारो मुमागमार्थः। शकारः-शतुर्वत् कार्य्यार्थः। उदा० एज् जनपूर्वः जनं लोकम् एजयति कम्पयतीति विग्रहे धातोः प्रेरणे ञिप्रत्ययः स्वर० तत एजां खशिति खश् अखितिपदस्येति पूर्वस्य मुम् स्वर० शतुर्वत्वात् शप् कर्त्तरि गुणः एअय् स्वर० अदे इत्यकारलोपः स्वर० जनमेजयः मनु ज्ञाने मन् पण्डितपूर्वः आत्मानं पण्डितं मन्यते इति पण्डितमन्यः खश्प्रत्ययः शित्त्वाद्दिवादेर्यः खित्त्वात् मुमागमः स्वर० अदे स्वर० एवं सुभगं मन्यः इत्यादि।

## ल्युट् करणे।

धातोः करणेऽर्थे ल्युट् प्रत्ययो भवति।

ल्युट्करणे। ल्युट् (प्र० ए०) इति पः। करण (स० ए०) अद्गर अक्रतस्य निष्पादनं करणमुच्यते। तस्मिन्नर्थे। धातोः ल्युट् प्रत्ययो भवति लकारो मुमागमार्थः। टकार ईवर्थः।

## अभूततद्भावे।

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु कृञः ल्युट् वाच्यः। अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यङ्करणं द्यूतम्। सुभगङ्करणम्। स्थूलङ्करणं किं दधि। पलितङ्करणं किं शीतवस्तुसेवनम्। अनग्नः नग्नः क्रियते अनेनेति नग्नङ्करणं द्यूतम्। अन्धङ्करणं किं सूर्य्यावलोकनमसकृत्। अप्रियः प्रियः क्रियते अनेनेति प्रियङ्करणं मैत्रम्। दार्वाहनो अण् वक्तव्यः। तकारस्य च टः। घदादेशो वक्तव्यः। उवम्। दारु आहन्तीति दार्वाघाटः। चारौ वा। चारुम् आहन्तीति चार्वाघाटः चार्वाघातः। कर्मणि सम्पूर्वाच्च। वर्णान् संहन्तीति वर्णसङ्घातः। जायापत्योष्टक्। जायापत्योरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति लक्षणवति कर्त्तरि। जायां हन्तीति जायाघ्नः ना। पतिं हन्तीति पतिघ्नी स्त्री। अमनुष्यकर्त्तृके च।

जायाघ्नः तिलकालकः, कपाले भ्रमरः। पतिघ्नी पादरेखा। पाणिघताडघौ शिल्पिनि निपात्येते। राजघ उपसंख्यानम्।

कृ नग्नपूर्वः। अनग्नो नग्नः क्रियते अनेनेति विग्रहे ख्युट् युप्र०। खितिपद-स्येति खित्वान्मुम् समासप्रत्यययोरिति विभक्तिलोपे मुमागमः युवोरनाकाविति अनादेशः गुणः स्वर० षु र्नोणो० (प्र० ए०) नपुंसकान्त नग्नकङ्करणं द्यूतम् एवं अस्थूलः थूलः क्रियते अनेनेति स्थूलङ्करणं दधि। कृ स्थूलपूर्वः।

## भजां विण्।

भजसहवहां कर्त्तरि विण् प्रत्ययो भवति। णकारो वृद्ध्यर्थः।

भजां विण्। भज् (ष० ब०) स्वर० मौलु० विण् (प्र० ए०) हसे पः। भजां भजादीनां भज् वह्, षह्, भ्रम् इत्यादीनां धातूनां विण्प्रत्ययो भवति कर्त्तरि विषये। णकारो वृद्ध्यर्थः। भज् सेवायां भज् अर्द्धपूर्वः अर्द्धं भजती-त्यर्द्धभाक् विविण्प्रत्ययः णित्वादत उपधाया वृद्धिः भा अर्द्धभाज् वि इति स्थिते।

## वेः।

वेर्लोपो भवति। भज् सेवायाम्। अर्द्धं भजतीति अर्द्ध-भाक्। चोः कुः। सुखभाग् दुःखभाक्। वह् प्रापणे। भारं वहतीति भारवाट् भारवाड् भारवाहौ भारवाहः। भार-वाहम् भारवाहौ।

वेः। वि (ष० ए० ( ङिति ङस्य सो० विप्रत्ययस्य लोपो भवति इत्यनेन वेर्लोपः (प्र० ए०) स् चोः कुः हसे पः वावसाने। अर्द्धभाक् अर्द्धभाजौ अर्द्ध-भाजः इत्यादि। स्त्रीलिङ्गेऽप्येवम्। नपुंसकलिङ्गे तु अर्द्धभाक् अर्द्धभाजी अर्द्ध-भाञ्जि इत्यादि। अत्र केचित् तत्त्वं पृच्छतीति तत्वप्राट् इत्युदाहरणं पठन्ति। तदत्र न युज्यते। अग्रे क्विप्रत्ययाधिकारे साधितत्वात्। इह तु भ्रमात् पठन्ति। वह् भारपूर्वः। भारं वहतीति विग्रहे विण्प्रत्ययः वृद्धिः विलोपः (प्र० ए०) होढः हसेपः वावसाने ढस्य टः भारवाट् ड्। मधुलिह्शब्दवत् प्रसादौ स्वरे परे विशेषः।

## वाहो वौ ।

वाहो वाकारस्य औकारादेशो भवति शसादौ स्वरे परे। भारौहः । भारौहा भारवाड्भ्याम् भारवाड्भिः । षह मर्षणे । हो ढः । वावसाने । सहादेः सादिः । इति सूत्रेण त्वरायास्तुरादेशः । तुरां शत्रूणां वेगं सहतेऽसौ तुराषाड् ।

वाहो वौ । शसादौ स्वरे वाह इति विण्प्रत्ययान्तस्य वहधातोः शसादौ स्वरे परे वा इत्यक्षरस्य अन्तस्थस्य औकारो भवति वा इत्यस्य औ । ओऔऔ । भारौहः भारौहा भारवाड्भ्याम् । होढः झबेजबाः स्वर० भारवाड्भिरित्यादि । षह मर्षणे सहने षादेः षः सः सह विण् प्र० वृद्धिर्वे लोपः । ( प्र० ए० ) होढः ।

## सहेः षः सो ढि ।

सहेः सकारस्य षकारो भवति ढि सति । तुरासाहौ तुरासाहः शसादौ तु अम्बूहः । अन ऊः । अनकारादुत्तरस्य वाहो वाकारस्य ऊः स्यात् शसादौ स्वरे परे । शालिवाट्, शाल्यूहः ।

सहेः षः सोढि । सहेः ( ष० ए० ) षः ( प्र० ए० ) सो ( ष० ए० ) ढि ( स० ए० ) सहेर्धातोः सकारस्य षकारो भवति ढकारे परे । कथम्भूते ढकारे सि पदान्ते च परे अनेन सस्य षः हस्रेपः वावसाने तुरां शत्रुवेगं सहते इति तुराषाड् इन्द्रः । तुराषाड् तुरासाहौ तुरासाहः भकारादौ सुपि च तुराषाड्भ्यां तुराषाड्भिः इत्यादि रूपाणि ज्ञेयानि ।

## शमेरपि विण् वक्तव्यः ।

शम् उपशमे । शम् प्रपूर्वः प्रकर्षेण शाम्यतीति प्रशान् विण्प्र० वृद्धिः वेर्लोपः ( प्र० ए० ) ।

## मो नो धातोः ।

मान्तस्य धातोर्मकारस्य नकारो भवति धातोर्झसे परे

नाम्नश्च रसे पदान्ते च। शम दम उपशमने। प्रकर्षेण शाम्यतीति प्रशान् प्रशामौ प्रशामः।

मोनोधातोः। धातोर्मकारस्य नकारो भवति रसे पदान्ते च वमोश्च इति मस्य नः हसेपः प्रशान् प्रशामौ प्रशामः प्रशान्भ्यां प्रशान्भिः वमोस्तु जङ्गन्मि जङ्गन्वः जङ्गन्मः।

## अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः।

अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नाश्च्विः प्रत्ययो भवति। सम्पद्यकर्त्तरीति वक्तव्यम्। तेन अग्टहे ग्टहे भवतीति ग्टहेभवति। चकारश्च्वौ दीर्घ इति विशेषणार्थः। वा चकारः प्रत्ययभेदज्ञापनार्थः। वेः।

अभूतेत्यादि। न प्रागभूतम् अभूतं तस्य तेनैव स्वात्मना भवनं तद्भावः तस्मिन्नर्थे अतथात्वस्य तथाभावे सति कृ भू अस् इत्येतेषां त्रयाणां धातूनां मध्ये एकतरयोगे नाम्नश्च्विप्रत्ययो भवति। चकारः च्विदीर्घईचास्येति सूत्रविशेषणार्थः।

## च्वौ दीर्घ ई चास्य।

च्वौ प्रत्यये परे आकारस्य ईकारादेशो भवति, अन्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य। अमिथुनं मिथुनं सम्पद्यमानं तथा करणम् इति मिथुनीकरणं किं पाणिग्रहणम्। च्व्यन्तत्वादव्ययम्। अव्ययाद्विभक्तेर्लुक्। असहायः सहायः सम्पद्यमानस्तथा स्यात् इति सहायी स्यात्। अकृष्णः कृष्णः यथासम्पद्यमानस्तथाकरोतीति कृष्णीकरोति। हेतूक्ततम्। अव्ययस्य न दीर्घत्वम्। अस्वस्ति स्वस्ति यथा सम्पद्यमानस्तथा स्यादिति स्वस्ति स्यात्। सम्पद्यकर्त्तरि किम्। अग्टहे ग्टहे भवतीति ग्टहेभवति। अलुक् क्वचित्। इति विभक्तेरलुक्।

च्वौ दीर्घ ईश्चास्य। च्वौ परे सति अकारव्यतिरिक्तस्वराणां दीर्घः अकारस्य च यद्वा अस्य अवर्णस्य ईकारो भवति अनव्ययस्य तु न उदा० कृ मिथुन-पूर्वः अमिथुनं मिथुनं क्रियते इति विग्रहे भावे युट् यु अभूततद्भावे कृ अनेन मिथुनस्याग्रे च्वि: इश्चास्येति अकारस्य ईकार: युवोरनाकौ गुण: स्वर० वेर्लोप: षु र्नोणो० भावत्वान्नपुंसकलिङ्गत्वं (प्र० ए०) कुलशब्दवत् एवं मिथुनीकरोति मिथुनीभवति। मिथुनीस्यात्। भू शुक्लपूर्वः शुक्लभवनं शुक्लीभाव:। घञ् भावे घञ् च ञित्वाद्वृद्धि: औ भाव स्वर० च्वि अकारस्य ई वेर्लोप: एवं भूयोगे च्वि (प्र० ए०) स्त्री० अस् भुवि विधिसम्भावनयो: यात् अप्क० अदादेर्लुक् नमसोऽस्येत्यलोप: सहायपूर्वः असहाय: सहाय: स्यादिति विग्रहे च्वि प्र० ईश्चास्य वेरिति वेर्लोप: सहायीस्यात् क्रियापदम् अत्र अस् योगे च्वि: कृहेतुपूर्वः अहेतु हेतुतया कृतं हेतू-कृतं क्तान्तवत् तप्र० प्र० च्वौ दीर्घ: इति दीर्घ: उकारस्य ऊकार: नपुंसकेति।

## च्वौ सलोपश्च।

मनस् महस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे। द्वौ नञौ प्रकृत्यर्थमनुसरत:। उत्सुकं मनो यस्यासौ उन्मना:। न उन्मना: अनुन्मना:। अनुन्मना: उन्मना: सम्पद्यमानस्तथा भाव इति उन्मनीभाव: विगतं मनो यस्याऽसौ विमना:। न विमना: अविमना:। अविमना विमना: सम्पद्यमान: तथाभाव इति विमनीभाव:। न विद्यते मनो यस्यासौ अमना:। न अमना: अनमना:। अनमना: अमना:। सम्पद्यमानस्तथा भाव इति अमनी-भाव:। तथा सुमनीभाव: सुचेतीभाव: महीकरोति अरू-करोति। चक्षूकरोति।

च्वौ। सलोपश्च च्विप्रत्यये परे अरुर्मनश्चक्षुश्चेतोरहोरजसां सकारस्य लोपो भवति सलोपे च कृते पूर्वस्य च दीर्घ: अकारस्य ईकार: स्थिरस्य मनस: अमन-स्त्वेन भवनम् अमनीभाव: अरूकरोति, चक्षूकरोति, चेतीकरोति, विरहीकरोति, विरजीकरोति। भू मनस्पूर्वः घञ् भावे अत्र च्विप्रत्यये कृते च्वौ सलोपश्चेति सलोपे कृते अकारस्य च ईकार: । एवं अपरिखा परिखा कृता परिखीकृता कृ

क्वप्र० परिखापूर्वः च्विप्र० च्वौ दीर्घः ईचास्येति अवर्णस्य ईकारः। वेरिति विलोपः (प्र० ए०) सौ०।

## डाच् क्वचिद्वक्तव्यः।

अभूततद्भावेऽर्थे क्वचित् डाच् प्रत्ययो भवति। अदुःखं दुःखं सम्पद्यते तत् करोतीति दुःखाकरोति। तथा भद्राकरोति।

क्वचित्प्रयोगान्तरे। कृभ्वस्तियोगे च्व्यर्थे नाम्नो डाच् प्रत्ययो भवति डकारष्टिलोपार्थः चकारः प्रत्ययभेदज्ञापनार्थः। अदुःखिनं दुःखिनं करोतीति दुःखाकरोति सिद्धमेव दुःखिन् पूर्वः डाच् टिलोपः स्वर० एवं सुखाकरोति सपत्नाकरोति प्रियाकरोति। भद्राकरणम्।

## आतो मनिप्क्वनिप्वनिपः।

प्रादौ नाम्नि च प्रयुज्यमाने आकारान्ताद्धातोर्मनिप् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति। सुष्ठु ददातीति सुदामा। राजन्शब्दवद्रूपम्। खसे चपा झसानाम्। अश्वे तिष्ठतीति अश्वत्थामा।

आतोमनिप्क्वनिप्वनिपः। आत् (प० ए०) स्वर० सौ० मनिप् च क्वनिप् च वनिप् च मनिप्क्वनिप्वनिपः (प्र० ब०) स्वर० सौ० आकारान्ताद्धातो र्मनिप् क्वनिप् वनिप् एते त्रयः प्रत्यया भवन्ति कर्त्तरि। पकारः पित्कार्य्यार्थः इकार उच्चारणार्थः क्वनिप् इत्यत्र ककारः कित्कार्य्यार्थः। डुदाञ् दाने दा सुपूर्वः सुष्ठु ददातीति सुदामा मनिप् प्र० सुदामन् (प्र० ए०) नोपधायाः इसेपः नाम्नो नोलो० राजन्शब्दवत् साधनार्थः।

## स्थामो।

इस ईस् ई। दासोमास्थां ह्रस्व इकारो भवति। धागेङाक्पिबतीनां दीर्घ ईकारो भवति तकारादौ कितो ङसे परे न क्यपि क्विपि वा। क्वनिप्प्रत्ययः। सुष्ठु पिबतीति

सुपीवा। भूरि ददातीति भूरिदिवा। . घृतं पिबतीति घृतपीवा धनदिवा मलसिवा मार्गस्थिवा। धनधीवा सुगीवा दोषह्वीवा। क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते। सुष्ठु करोतीति सुकर्मा। सुष्ठु शृणोतीति सुशर्मा। अन प्राणने। अत्र क्विप्। प्राणितीति प्राण् प्राणौ प्राणः। हेप्राण्। अनः। पदान्ते वर्त्तमानस्यापि अनो नस्य णत्वं स्यात्। अधौ इति विशेषणान्नलोपो न शङ्कनीयः। इण् गतौ। ह्रस्वस्य पितीति तुगागमः। प्रातरेतीति प्रातरित्वा। वनिपि जमस्याऽऽत्वं वाच्यम्। जनी प्रादुर्भावे। विजायतेऽसौ विजावा। केवलेभ्योऽपि वनिप्। ओणृ अपनयने। ओणतीति अवावा अवावानौ। ङ्यपि वनो नस्य रो वाच्यः। ऋण ङीप्। ओणति सा अवावरी। पारं पश्यतीति पारदृश्वा। पारं पश्यति सा पारदृश्वरी। केवलेभ्योऽपि क्वनिप्। षुञ् अभिषवे। षूङ् प्राणिगर्भविमोचने। सुनोतीति सुत्वा। तुक्। धेट् पाने। धयतीति धीवा। गै शब्दे। गायतीति गीवा। जहातीति ह्वीवा। पीवा।

स्वामी। स्वा ( ष० ब० ) आतो धातोर्लोपः स्वर० मोनु० ई ( प्र० ए० ) साङ्केतिकम्। अथवा स्वां ( ष० ब० ) इ ( प्र० ए० ) ई ( प्र० ए० ) त्रिपदम् अव्ययादिभक्तेर्लुक् इश्च ईश्च ई स्था, पा (पाने) गा, मा, ह्वादीनां ईकारो भवति क्विप्प्रत्ययव्यतिरिक्ते किति परे। स्थादीनामाकारस्य इकार ईकारश्च भवति क्वचित्प्रयोगानुसारेण ह्रस्व इकारः। यथास्थितं, सहितं, मितं, प्रमितं, दो अवखण्डने, दितं षोन्तकर्मणि अवसितं, शोतनूकरणे निशितमित्यादौ। क्वचिद्दीर्घः पापाने पा सुपूर्वः सुष्ठु पिबतीति विग्रहे आतो मनिप् इत्यादिना क्वनिप् प्रत्ययः कित्त्वादाकारस्य ईकारः पाइत्यस्य पी सुपीवन् ( (प्र० ए० ) नोपधायाः हसेपः नाम्नोनो० सुपीवा इति क्वनिबन्तः डुदाञ् दाने भूरि पूर्वः भूरि प्रचुरं स्वर्णं वा ददातीति भूरिदा। वा वनिप् प्र० कित्त्वाभावात् स्वामी इतीकारो न राजन्शब्दवत् प्रक्रिया।

## क्किप्।

उपपदे सति असति च सर्वधातुभ्यः क्किप् प्रत्ययो भवति। क्किपः सर्वापहारित्वाल्लोपः। कपावितौ। वेः।

क्किप्। क्किप् (प्र० ए०) इत्येपः एकपदम्। सर्वधातुभ्यः क्किप् प्रत्ययो भवति। ककारो गुणप्रतिषेधार्थः तुग्विधानार्थश्च अन्ये तु प्रत्यया उदाहरणार्थानुसारेण यथायोग्यं धातुभ्यः प्रयोज्याः। क्किप्प्रत्ययस्तु सर्वधातुभ्यो भवतीत्यर्थः। कृ कर्मन्पूर्वः कर्म करोतीति विग्रहे क्किप्र० वि।

## ह्रस्वस्य पिति कृति तुक्।

ह्रस्वस्य पिति कृति परे तुगागमो भवति। कृति तुक्। कर्म करोतीति कर्मकृत्। अग्निं चिनोतीति अग्निचित्। देवान् स्तौतीति देवस्तुत्। सोमं पिबतीति सोमपाः। सर्वं पश्यतीति सर्वदृक्। दिशाम्। इति कुत्वम्। दिश् अतिसर्जने। दिशतीति दिक् क्किप्।

ह्रस्वस्य पिति कृति तुक्। ह्रस्व ङस् स्य (ष० ए०) पित् (स० ए०) स्वर० कृति० (स० ए०) तुक् (प्र० ए०) इति पः। पिति कृति परे ह्रस्वस्य स्वरस्य तुगागमो भवति अनेन धातोः पुरतस्तुगागमो भवति क्किपः सर्वापहारीलोपः इति क्किप्लोपः (प्र० ए०) इत्येपः कर्मन् इत्यत्र नाम्नो० कर्मकृत्। एवं अग्निं चिनोतीति अग्निचित् चिञ् चयने, देवान् स्तौति देवस्तुत् ष्टुञ् स्तुतौ आदेः षः सः निमित्ताभावे इति टस्य तः देवपूर्वः क्किप् प्रत्ययः तुगागमः क्किपः सर्वापहारीलोपः। पापाने सोमपूर्वः क्किप्प्र० सोमं पिबतीति सोमपा अत्र दीर्घत्वान्न तुगागमः (प्र० ए०) सौ०। दृशिर्, प्रेक्षणे दृश् सर्व पूर्वः सर्वं पश्यतीति सर्वदृक् क्किप् प्र० क्किपः सर्वापहारी लोपः दिशामिति शस्य कः (प्र० ए०) इत्येपः सर्वदृक् सर्वदृशौ इत्यादि। श्रिञ्धातुः सेवायां श्रि: सुपूर्वः सुष्ठु श्रयतीति विग्रहे क्किप्।

## वचिप्रच्छयायतस्तुकटप्रुज्जुश्रीणां दीर्घः सम्प्रसारणाभावश्च वक्तव्यः।

वक्त्यनया सा वाक् वा उच्यते अनया सा वाक्। प्रच्छ ज्ञीप्सायाम्। तत्त्वपूर्वः। तत्त्वं पृच्छतीति तत्त्वप्राट्। छशष-राजादेः षः। छ्वोः शऊ वाच्यौ क्विति ङिति झसे परेऽनुना-सिके क्वौ च। तेन तत्त्वप्राच्छौ तत्त्वप्राच्छः। ष्टुञ् स्तुतौ। आयतं स्तौतीति आयतस्तूः। प्रुङ् गतौ। कटं प्रवतेऽसौ कटप्रूः। जु गतौ। जवतेऽसौ जूः। सुष्ठु श्रयतीति सुश्रीः। वा सुष्ठु श्रीर्यस्यासौ सुश्रीः। श्रयन्ते जना यामिति श्रीः। नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विबन्तेषु पूर्वपदस्योपसर्ग-स्यान्ते दीर्घो वाच्यः। णह् बन्धने। आदेः ष्णः स्नः। नहो धः। उप समीपे नह्यतीति उपानत्। नितरां वर्त्ततेऽसौ नीवृत्। व्यध ताडने। ग्रहां क्ङिति च। मर्माणि विध्य-तीति मर्मावित्। वृष वृष्टौ। प्रकर्षेण वर्षतीति प्रावृट्। रुचि दीप्तौ। नितरां रोचतेऽसौ नीरुक्। गमयमनमहन्-तनादीनां क्विपि जमस्य लोपो वाच्यः क्यपि वा। तुक्। परितः तनोतीति परीतत्। कटं चिकीर्षतीति कटचिकीः। चिकीर्षतेः क्विप्। यतः। इत्यकारलोपः। दोषाम्। इति षस्य रेफः। रिलोपो दीर्घश्च। इति मध्यमरेफस्य लोपः। न तु संयोगान्तस्य लोपः। रसे पदान्ते चेति चकारात् रात्सस्य रेफादुत्तरस्य सस्यैव लोपो भवति नान्यहसस्य। सोर्विसर्गः। कटचिकीर्षौ कटचिकीर्षः। वह् प्रापणे। यजां यवराणाम्। अनो वहतीति अनड्वान्। क्विबन्ते वह्यनसो, डान्तादेशो वाच्यः। अनड्वाहौ अनड्वाहः। राजृ दीप्तौ। क्विबन्ते राजतौ परे समो मस्यानुस्वाराभावो वाच्यः। तेन सम्यक् राजतेऽसौ सम्राट्। ध्यै चिन्तायाम्। ध्यायतेः क्विपि सम्प्रसारणं दीर्घता च वक्तव्या। सुष्ठु ध्यायतीति सुधीः। द्युतिगमिजुहोतीनां क्विपि क्वचित् द्वित्वं वाच्यम्। हसादि-

शेषाभावः। द्योततेः क्वचित् पूर्वस्य क्विपि सम्प्रसारणं वाच्यम्। द्योततेऽसौ दिद्युत्। गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति जगत्। जुहोतेर्दीर्घश्च जुहोत्यनया सा जुहूः।

वचीति। वच् प्रच्छ स्रुकट प्रूजुश्रीणां दीर्घता भवति चकारात् सम्प्रसारणाभावः इति स्वरस्य दीर्घः। क्विपः लोपः। सुश्री (प्र० ए०) सो० प्रच्छ तत्त्वपूर्वः क्विप् प्र० प्रच्छादेरिति दीर्घः (प्र० ए०) संयोगान्तस्य लोपः। छशष राजादेः षः षोड़ः ड्सेपः वावसाने तत्त्वं पृच्छतीति तत्त्वप्राट् तत्त्वप्राच्छौ तत्त्वप्राच्छः। णह बन्धने नह उपपूर्वः उपनह्यते पादयोरिति उपानत् क्विप्र० क्विपि परे नहेर्धातोः पूर्वस्य उपसर्गस्य दीर्घता च वक्तव्या क्विप्परे इति पाठे क्विप् परो यस्मात् स क्विप्परः ईदृशे नहि धातौ परे उपसर्गस्य दीर्घता च वक्तव्या (प्र० ए०) नहोधः ह्रस्य धः ड्सेपः वावसाने उपानत्-द् उपानहौ इत्यादि ह्सान्तस्त्रीलिङ्गे चकारात् प्रावृट् प्रवर्षतीति प्रावृट् मर्मावित् नीरुक् इत्यादावपि दीर्घता नहीत्युपलक्षणात् नहि वृषिव्यधिरुचिसहितनयका गृह्यन्ते। कृ कट पूर्वः कटं चिकीर्षतीति विग्रहे इच्छायामिति स प्रत्ययः। ऋत् इर् किर् द्वित्वं पूर्वस्य ह्सादिशेषः रलोपः कुहोश्चुः चिकिर् य्वोर्विह्सि इति दीर्घः क्विला० कटं चिकीर्ष अग्रे क्विप् यत इति सप्रत्ययस्य अकारस्य लोपः क्विपः सर्वापहारी लोपः (प्र० ए०) संयोगान्तस्य लोपः ह्सेपः सो० कटचिकीः कटचिकीर्षौ कटचिकीर्षः। केचित्तु कटचिकीर्ष क्विप् यतः इत्याकारलोपः दीषारः रिलोपो दीर्घश्च सो० एवं साधयन्ति। ध्यै चिन्तायाम्। ध्यै सुपूर्वः। सुष्ठु ध्यायतीति सुधीः। क्विप्। प्र० ध्यायते ध्यै चिन्तायामित्यस्य धातोः क्विपि परे सम्प्रसारणं भवति दीर्घस्य दीर्घ ईकारः ध्यै इत्यस्य धी क्विप्लोपः (प्र० ए०) सो० सुश्री शब्दवत्।

## दृशेष्टक्सकौ चोपमाने कार्य्ये।

दृशेर्धातोः सर्वादिषु टक्सकौ प्रत्ययौ भवतः उपमाने कार्य्ये सति। चकारात् क्विप् वक्तव्यः।

दृशेष्टक्सकौ चोपमाने कार्य्ये। दृश् (पं० ए०) ङिति ङस सो० टक् च सक् च (प्र० ए०) स्वर० पश्चाद्विसर्जनीयस्य सः ष्टुभिः ष्टुः च (प्र० ए०) अव्य० उपमान (स० ए०) अदए सिद्धम्। दृशेर्धातोः टक्सकौ प्रत्ययौ भवतः चकारात् तृतीयरूपे क्विप् प्रत्ययोऽपि भवति कार्य्ये कर्मणि उपमाने

वाच्ये सति दृश् अन्य इव दृश्यते इति विग्रहे एकत्र टक् प्र० टकारोऽनुबन्धार्थः। ककारो गुणनिषेधार्थः।

## आ सर्वादेः।

एतेषु प्रत्ययेषु परेषु सर्वादेः पूर्वस्य टेरात्वं भवति। दृशिर् प्रेक्षणे। अन्य इव दृश्यतेऽसौ अन्यादृशः। छशषराजादेः षः। षढोः कः से। क्विलात्। अन्यादृक्षः, अन्यादृक्। स इव दृश्यतेऽसौ तादृशः तादृक्षः तादृक्। य इव दृश्यतेऽसौ यादृशः यादृक्षः यादृक्। एष इव दृश्यतेऽसौ एतादृशः एतादृक्षः एतादृक्।

आ सर्वादेः। (प्र० ए०) साङ्के० सर्वादि (ष० ए०) ङिति ङस्य एतेषु टक्सक् क्विप् प्रत्यये परे सर्वादेः सर्वादि शब्दगणस्य पूर्वपदस्य धातोरादौ वर्त्तमानस्य सतः टेः आत्वं भवति स्वर० (प्र० ए०) सो० अन्यादृशः द्वितीये सक् प्र० टेरात्वम्। दिशामिति शस्य कः क्विला० कषसंयोगे क्षः (प्र० ए०) सो० अन्यादृक्षः तृतीयरूपे क्विप्प्र० टेरात्वं क्विप् लोपः (प्र० ए०) दिशां हसेपः अन्यादृक् टित्वादीप् अन्यादृशी। एवं स इव दृश्यते इति तादृशः तादृक्षः तादृक् तत्पूर्वः।

## किमिदमः कीश्ईशौ।

किम्शब्दस्य इदम्शब्दस्य च कीश् ईश् इत्येतावादेशौ भवतः टकारादिषु प्रत्ययेषु परेषु। शकारः सर्वादेशार्थः। क इव दृश्यतेऽसौ कीदृशः कीदृक्षः कीदृक्। अयमिव दृश्यतेऽसौ ईदृशः ईदृक्षः ईदृक्। ईदृशी वार्त्ता। सर्वादित्वाट्टेरात्वम्। भवदादिषु दृशेष्टकारादयः पूर्वस्य टेर्दीर्घता च वक्तव्या। भवानिव दृश्यतेऽसौ भवादृशः भवादृक्षः भवादृक्। चकारात् एतेषु प्रत्ययेषु परेषु समानशब्दस्य सो वाच्यः। समान इव दृश्यतेऽसौ सदृशः सदृक्षः सदृक्।

किमिदमः कीश्ईशौ। किं च इदं च किमिदम् तस्य (ष० ए०) ख्रर० स्त्री० कीच ईच की कीपूर्वः शकारः कीश् शकारोऽनुबन्धः उभयत्रापि योज्यते कीश् (प्र० ए०) इसेपः केचित्तु किमिदमः कीशीश् एवं सूत्रं पठन्ति। एतेषु प्रत्ययेषु परेषु दृशिधातोः पूर्वयोः किम् इदम् शब्दयोः कीश् ईश् इत्येतावादेशौ भवतः यथासंख्येन किमुशब्दस्य कीश् इदमुशब्दस्य ईश्। शकारः सर्वादेशार्थः आदेशभेदज्ञापनार्थः। दृश् किमुपूर्वः क्रमेण टक् सक् क्विप्-प्रत्ययाः। क इव दृश्यते इति विग्रहे किमः की आदेशः। कीदृशः कीदृत्तः कीदृक् शेषं प्राग्वत्। एवम् इदमुपूर्वः इदमः ई आदेशः। अयमिव दृश्यते ईदृशः ईदृत्तः ईदृक्। भवदादिषु प्राक्पदेषु सत्सु इवार्थे उपमानेऽर्थे दृशेर्धातोः टक्सक्क्विप्प्रत्यया भवन्ति पूर्वपदस्य टेः आत्वं भवतीत्यर्थः। भवानिव दृश्यते भवादृशः भवादृत्तः भवादृक् अहमिव दृश्यते इति मादृशः मादृत्तः मादृक्। दृश् अस्मद् पूर्वः त्वन्मदेकत्वे इति मदादेशे कृते पश्चादेराकारः। एवं त्वमिव दृश्यते इति त्वादृशः त्वादृत्तः त्वादृक्। चकारात् समान इत्यस्य स आदेशः समान इव दृश्यते इति सदृशः सदृत्तः सदृक्। वयमिव दृश्यते इति अस्मादृशः अस्मादृत्तः। यूयमिव दृश्यते इति युष्मादृशः।

## अदसोऽमू आदेशः।

अदस्शब्दस्य ठगादिषु सत्सु अमू आदेशो भवति किति परे। असाविव दृश्यतेऽसौ अमूदृशः अमूदृत्तः अमूदृक् ग्। प्रत्ययोत्तरपदयोः परतो युष्मदस्मदोरेकत्वे त्वत् मत् इत्येतावादेशौ भवतः। त्वमिव दृश्यतेऽसौ त्वादृशः त्वादृत्तः त्वादृक् ग्। अहमिव दृश्यतेऽसौ मादृशः मादृत्तः मादृक् ग्। त्यादेष्टेरस्यादौ इत्यकारः। यूयमिव दृश्यतेऽसौ युष्मादृशः युष्मादृत्तः युष्मादृक्। वयमिव दृश्यतेऽसौ अस्मादृशः अस्मादृत्तः अस्मादृक्। टकारानुबन्धत्वादीप्। तादृशी यादृशी एतादृशी त्वादृशी मादृशी अन्यादृशी युष्मादृशी अस्मादृशी भवादृशी इत्यादि। णिनिरतीते। धातोरतीते काले शीलेऽर्थे च णिनिप्रत्ययो भवति।

णिनिरतीते। णिनि (प्र० ए०) स्त्री० अतीत (स० ए०) अद्रष्ट पश्चा-

नामि भीरः स्वर० धातोः अतीते गते काले णिनिप्रत्ययो भवति शीले स्वभावेऽर्थे। णिनिरित्यत्र णकारो वृद्ध्यर्थः। इकारः प्रत्ययभेदज्ञापनार्थः।

## करणे उपपदे यजेर्णिनिर्वाच्यः।

इनां शौ सौ। अग्निष्टोमेन इयाज इति वा अग्निष्टोमेन अयाक्षीत् इति अग्निष्टोमयाजी। वा अग्निष्टोमं यष्टुं शीलं यस्य सः अग्निष्टोमयाजी। अश्राद्धं भुङ्क्ते इत्येवंशीलः अश्राद्धभोजी। अर्द्धं भुङ्क्ते इत्येवंशीलः अर्द्धभोजी। सुखभोजी। उष्णं भुङ्क्ते इत्येवंशीलः वा भुक्तवान् इति उष्णभोजी। हनो घत्। हन्तेर्निन्दायां णिनिर्वाच्यः। पितरं जघान वा अवधीत् इत्येवंशीलः पितृघाती। दण्डीन्शब्दवद्रूपं ज्ञेयम्। कर्त्तर्य्युपमाने णिनिर्वाच्यः। अभ्र इव पततीति अभ्रपाती। मत्त इव करोतीति मत्तकारी। हंस इव गच्छतीति हंसगामी। स्त्री चेत् हंसगामिनी। ईप्।

करः०। यज् पूजा० यज् अग्निष्टोमपूर्वः। अग्निष्टोमम् इष्टवान् यष्टुं शीलमस्येति वा अग्निष्टोमयाजी णिनिप्र० इन् णित्त्वाद्वृद्धिः स्वर० इनां शौ सौ हसेपः नाम्नोनो० दण्डिन्शब्दवत्।

## क्विप्क्वनिप्ड्वाः।

धातोरतीते काले शीलेऽर्थे च क्विप्क्वनिप्ड्वा इत्येते प्रत्यया भवन्ति। क्विप्। ब्रह्म ब्रह्म भ्रूण एतत्पूर्वकादेव हन्तेः क्विप् स्यात्। अतीते एव। वृत्रं हतवानिति वृत्रहा। ब्रह्महा। भ्रूणहा। अन्यत्र शत्रुघातीत्यत्र णिनिः। शत्रुं हन्तीत्येवंशीलः शत्रुघाती। सुष्ठु करोति स्मासौ सुकृत्। कर्मकृत् पापकृत् पुण्यकृत् शास्त्रकृत्। सोमं सुनोति स्मासौ सोमसुत्। अग्निं चिनोति स्मासौ अग्निचित्। इत्येते

क्विबन्ताः। क्वनिप्। युधि सम्प्रहारे। राजानं युध्यते स्मासौ राजयुध्वा। राजानं करोतीत्येवंशीलः राजकृत्वा। सह युध्यतेस्माऽसौ सहयुध्वा। सहकृत्वा। षुञ् प्राणिप्रसवे। क्वनिप् तुक्। कित्त्वादगुणाभावः। सुनोति स्मासौ सुतवान् इति सुत्वा। स्तुत्वा। यजति स्मासौ यज्वा। पारमद्राक्षीत् इति पारदृश्वा। इत्येते क्वनिबन्ताः। जनी प्रादुर्भावे।

क्विप्वनिप्डाः। क्विप् च क्वनिप् च डश्च क्विप्क्वनिप्डा (प्र० ब०) सवर्णे० लो० वृत्तिः सुगमा हन् हिंसागत्योः हन वृत्रपूर्वः वृत्रं वृत्रासुरं हतवान् इति विग्रहे क्विप्प्र० क्विपः सर्वापहारी लोपः (प्र० ए०) इनांशौसौ इसेपः नाम्नो० वृत्रहा वृत्रहणौ। एवं ब्रह्महा भ्रूणहा पूर्वं क्विप्प्रत्ययो वनिप् प्रत्ययश्च वर्त्तमाने काले उक्तः अत्र तु अतीते काले इति न पौनरुक्त्यम्। यज् वनिप् प्र० वन् स्वर० यज्वन् (प्र० ए०)। नोपधायाः। इसेपः नाम्नोनो दृष्टवान् इति यज्वा यज्वानौ।

## सप्तम्यां जनेर्डः।

सप्तम्यां जनेर्धातोर्डः प्रत्ययो भवति अतीते काले। सरसि जायते स्म तत् सरसिजं पद्मम्। अलुक् क्वचित्। सरसि जातं सरोजम्। संस्कारजः प्रजा अजः द्विजः। परितः खाता इति परिखा। प्रकर्षेण जायते स्मेति प्रजा। सर्वं गतवान् इति सर्वगः वा सर्वं गच्छति स्मासौ सर्वगः। गै शब्दे। साम गीतवान् गायति स्मासौ सामगः। इति डप्रत्ययान्ताः। इति कर्त्रर्थप्रक्रिया।

जनी प्रादुर्भावे। जन् सरसिपूर्वः डप्र० अडित्त्वाट्टिलोपः स्वर० सरसि-जातं सरसिजं अलुक् क्वचिदिति सप्तम्या अलुक् नपुंसके कुलशब्दवत् ज्ञा अवबोधने ज्ञा सर्वपूर्वः डप्र० टिलोपः स्वर० (प्र० ए०) लो० सर्वं ज्ञातवान् इति सर्वज्ञः। गम्लृगतौ गम् सामन्पूर्वः सामवेदं गतवान् ज्ञातवान् गीत-वानिति विग्रहे ये गत्यर्थास्ते ज्ञानार्था इति डप्र० टिलोपः स्वर० नाम्ना० सामगः। एवं सर्वत्र गतवान् सर्वगः। इति कर्त्रर्थप्रक्रिया।

# अथ निष्ठाप्रक्रिया ।

अथ निष्ठाप्रक्रिया कथ्यते ।

## क्तक्तवतू ।

धातोरतीते काले क्तक्तवतू प्रत्ययौ भवतः । भावकर्मणोः क्तः । क्तवतुः कर्त्तर्य्येव । कृतो घटः । कृतवान् घटम् । उकारो नुम्विधानार्थः । आगतं स्थितं देवदत्तेन । भावे नपुंसकान्तम् ।

क्तक्तवतू क्तश्च क्तवतुश्च क्तक्तवतू ( प्र० द्वि० ) औयू सवर्णे० । धातोः अतीते गते काले क्तक्तवतू इत्येतौ प्रत्ययौ भवतः । तत्र क्तप्रत्ययो भावे कर्मणि च भवति क्तवतुश्च कर्त्तरि । ककारो गुणप्रतिषेधार्थः । डुकृञ् करणे । कृ क्त प्र० त ( प्र० ए० ) सो० कृतः कटः कारकेण अत्र कर्मणि क्तः क्तवतु उकारो नुम्विधानार्थः तवत् ( प्र० ए० ) त्रितोनुम् अत्वसोः सौ दीर्घः हसेपः संयोगान्तस्यालोपः नकार इति कृतवान् स्थितः स्त्रीचेत् कृतवती अत्र कर्त्तरि क्तवतुः गम् क्त दात्तानामितिम लोपः देवदत्तेन आगतम् अत्र भावे क्तः नपुंसकलिङ्गे भावे विहितस्य क्तप्रत्ययस्य नपुंसकलिङ्गता व० ष्ठा आदेः षः स्नः स्था क्त प्र० स्थामीति ह्रस्व इकारः । देवदत्तेन स्थितम् ।

## गत्यर्थादकर्मकाच्च कर्त्तरि क्तः ।

गत्यर्थादकर्मकाच्च धातोः कर्त्तरि क्तः प्रत्ययो भवति चाद्भाव कर्मणोः । स्थितः । श्रान्तः । दान्तः ।

गत्यर्थादकर्मकात् कर्त्तरि क्तः । गतिरर्थोयस्य स गत्यर्थस्तस्मात् ( पं० ए० ) ङसिरत् सवर्णे । न विद्यते कर्मेत्यकर्मकः तस्मात् ( पं० ए० ) ङसिरत् मध्ये अपा० स्वर० । च ( प्र० ए० ) अव्य० पश्चात् स्तोश्चुभि० स्वर० । कर्त्तृ ( स० ए० ङौरः स्वर० क्त ( प्र० ए० ) सो० गत्यर्थो धातुरट गतावित्यादि अकर्मकश्च लज्जासत्तादिः एवं द्विविधादपि धातोः कर्त्तरि क्तप्रत्ययो भवति । उदा० अट् क्तप्र० क्त इतोडागमः । अटित ( प्र० ए० ) सो० अत्र गत्यर्थत्वात् क्तप्र० ष्ठा स्था क्त स्थामीति इकारः स्थितः । अत्र अकर्मकत्वात् क्तप्र० श्रम दम

उपशमे शम् क्त शमां दीर्घः नशा० शान्तः। एवं दमदान्तः। टुवम् वान्तः। अकर्मकत्वात् कर्त्तरि क्तः। मदेर्न दीर्घता तेन मत्त इति रूपम्।

## क्तो वा सेट्।

**क्तः प्रत्ययो वा किद्भवति। द्युत द्योतने। प्रद्योतितः। प्रद्युतितः। रोदितः। रुदितः। मोषितः। मुषितः। गृहीतः। ग्रहीतः।**

क्तो वा सेट्। क्त (प्र० ए०) स्त्री० वा (प्र० ए०) अव्य० द्वे उभौ। सेट् सह इटा वर्त्तमानः सेट् (प्र० ए०) इसेपः। इट्सहितः क्तप्रत्ययो वा किद्भवति किक्त्वे सत्यपि विकल्पेन कित्त्वं कल्पनीयं कित्त्वादगुणप्रतिषेधः। यत्र कित्त्वं न तत्र गुणो भवति। द्युत दीप्तौ। द्युत् २ प्रपूर्वः कर्त्तरि क्तः क्रत इतीडागमः एकत्र कित्त्वाभावस्तत्र गुणः उपधाया लघोः कित्त्वपक्षे गुणाभावः। प्रद्योतितः प्रद्युतितः। रुदिर् अश्रुविमोचने। रुद रोदितः रुदितः। मुष् स्तेये मोषितः मुषितः। एवं नोदितः नुदितः। वेदितः विदितः। ग्रह क्तक्तवतू इति क्त प्र० ग्रहां क्ङिचेति सम्प्रसारणं क्रत इतीडागमः इटोग्रहामिति इकारस्य ईकारः स्वर० (प्र० ए०) स्त्री० गृहीतः।

## वृतः।

**उवर्णान्तादृवर्णान्ताच्छ्रियश्च धातोः क्तप्रत्ययस्येड् न भवति। वृतः। स्तृतः। भूतः। श्रितः।**

वृत् (ष० ए०) स्वर० स्त्री० एकपदं वु से इति सूत्रात् वुरित्यनुवर्त्तते क्वापि व। श्रितः कितः इति सूत्रं दृश्यते। उवर्णान्तात् ऋवर्णान्तात् श्रिञश्च धातोरिति वचनात् क्रत इति सूत्रेण प्राप्तस्य इटो निषेधः। एवं नुतः स्तृतः।

## आदीदितः।

**आदित ईदितश्च परस्य क्तस्येड् न भवति।**

आदीदितः। आच्च ईच्च आदीतौ तौ इतौ यस्य स आदीदित् तस्मात् (पं० ए०) स्वर० स्त्री० आकारानुबन्धात् ईकारानुबन्धाच्च धातोः परस्य कितः प्रत्ययस्य इडागमो न भवति।

## ञीतां तक् वर्त्तमानेऽपि ।

**ञीतां धातूनां मतिबुद्धिपूजार्थानां च वर्त्तमानेऽपि तक्-प्रत्ययो भवति । अपिशब्दाद्भावकर्मणोश्च ।**

ञीताम् । ञि इत् येषां ते ञीतस्तेषां धातूनां वर्त्तमाने काले अर्थेऽपि शब्दादतीतेऽपि अर्थे तक् प्रत्ययो भवति । ञिमिदाधातुः स्नेहने सच्चणे । ञिकार आकारश्च अनुबन्धौ । मिद् आनुबन्धत्वात् तक् प्र० आकारानुबन्धत्वात् इट् निषेधः । मिद्त इति स्थिते ।

## दस्तस्य नो दश्च ।

**दकारादुत्तरस्य कितस्तस्य नत्वं भवति । चकाराद्दकारस्य नकारो भवति । ञिमिदा स्नेहने । मिन्नमन्नं तैलेन वर्त्तते । ञिष्विदा गात्रप्रच्चरणे । आयासेन प्रस्विन्नः । ञिच्विदा सञ्चूर्णने । च्विन्नः ।**

द ( पं० ए० ) स्वर० लो० तत् ( ष० ए० ) ङसस्य पश्चाद्विसर्जनीयस्य सः । न ( प्र० ए० ) लो० द ( ष० ए० ) स्वर० लो० च ( प्र० ए० ) अव्य० दकारान्ताद्धातोः परस्य कितस्तकारस्य नकारो भवति धातुसम्बन्धिनो दकारस्यापि नकारः इति तक्सम्बन्धितस्य नः दस्य च नः स्वर० ( प्र० ए० ) अतो अम् नपुंसकान्तम् । अन्नं तैलेन मिन्नं स्निग्धं वर्त्तते इत्युदाहरणम् । एवं ञिष्विदा धातुः गात्रप्रच्चरणे प्रस्वेदने । ष्विद् । आदेः ष्णः स्नः । स्विद् त्रानुबन्धत्वात्तक् आदीदित इति आकारानुबन्धत्वादिट्निषेधः । दस्तस्येति दकारतकारयोर्नकारः । प्रपूर्वं । आयासेन खेदेन प्रस्विन्नः । ञिच्विदा सञ्चूर्णने पेषणे । च्विद् तक्प्र० दकारतकारयोर्नकारः षृ नों० अवकुप्यतेरपीति धातोर्नस्य णत्वे ष्टुभिः ष्टुरित्युत्तरनकारस्य णकारः स्वर० च्विणः चूर्णित इत्यर्थः । मदी हर्षे इत्यस्य तु दकारतकारयोर्नकारो न । तेन मत्तः इति रूपम् ।

## अदो जघुः ।

जग्धम् ।

अदो० । अद भक्षणे इत्यस्य धातोर्जग्धिरित्ययमादेशो भवति तकारादौ किति परे । अद क्त प्र० जघ आदेशः तथोर्धः अभेजवाः घस्य गः स्वर० ( प्र० ए० ) अतो अम् अम्शसो० मीनु० जग्धमन्नम् ।

## रः ।

रेफादुत्तरस्य तकारस्य नत्वं भवति । कॄ विदारणे । कॄ हिंसायाम् । ऋत इर् य्वोर्विंहसे । विकीर्णः । जॄष् झॄष् वयोहानौ । जीर्णं झीर्णं शरीरम् ।

रः । ( पं० ए० ) स्वर० सो० रेफात् रकारात् परस्य कितः तकारस्य नकारो भवति । उदा० कॄ विक्षेपे विकरणे हिंसायां वा तप्र० त ऋत इर् र इति सूत्रेण तस्य नः विपूर्वः र्वोर्विंहसे इति दीर्घः रात्रपोह्निः जलतुम्बि० विकीर्णं ( प्र० ए० ) अतो अम् जॄष्धातुझॄष्धातुश्च वयोहानौ वार्द्धक्ये । षकारौ षित्कार्यार्थौ । जॄ क्तप्र० ऋत इर् रकारान्तत्वात् रः इति सूत्रेण तस्य नः र्वोर्विंहसे षृ॰नौणो० रात्रपोह्निः जल० जीर्णं शरीरं एवं झॄष् झीर्णम् । क्तक्तवतू ( प्र० द्वि० ) निष्ठा ( प्र१ ए० ) क्तक्तवतू निष्ठासंज्ञकौ स्तः ।

## ल्वाद्योदितः ।

ल्वादेरोदितश्च धातोस्तो नो भवति । लूनः । क्षि क्षये । क्षीणः । ग्लानः । म्लानः । हीनः ।

ल्वाद्योदितः । लू ओदित् । लू आदिर्यस्य स ल्वादिः ओकार इत् यस्य सः ओदित् । ल्वादिश्च ओदितश्च ल्वाद्योदित् तस्मात् ( पं० ए० ) स्वर० सो० ल्वादयो धातुपाठोक्ताः ओदितश्च ओहाक्त्यागे ओहाङ् गतौ ओप्यायी वृद्धौ इत्यादयस्तेभ्यः परस्य कितस्तकारस्य नकारो भवति । उदा० लूञ् छेदने लू क्तक्तवतू त ल्वाद्योदित इति तस्य नः ( प्र० ए० ) सो० लूनः । क्षिक्षये क्षि क्तप्र० शमां दीर्घः । केचित्तु प्रच्छादेर्दीर्घता च ल्वाद्यो० इति तस्य नः । षृ० क्षीणः । ग्लै हर्षक्षये ग्लै क्तप्र० सन्ध्यक्षराणामा इत्यस्य ग्ला ल्वाद्यो० इति तस्य नः ( प्र० ए० ) ग्लानः । एवं म्लै गात्रविनामे म्लानः । ओहाक् त्यागे हा क्तप्र० घ्यामो ल्वाद्यो इति तस्य नः । हीनः ओप्यायी धातुर्वृद्धौ प्याय् क्तप्र० । प्यायःपी । प्यायी इत्यस्य धातोः पी इत्यादेशो भवतीति

प्या स्थाने पी। ल्वाद्यो० ईति तस्य नः। पीनः एवं दीनः लीनः उड्डीनः सीनः दूनः मग्नः।

## दोदत्ति।

दा इत्यस्य दद्भवति क्तिति तकि परे। दत्तः दत्तवान्।

दोदत्ति। दो (ष० ए०) आतो धातोरित्यालोपः स्वर० स्रो० दत् (प्र० ए०) हसेपः त् (स० ए०) स्वर० दाञ्दाने इत्यस्य धातोस्तकारादौ क्तिति परे दत् आदेशो भवति दा क्त दत् आदेशः स्वर० स्रो० दत्तः। क्तवतुप्रत्यये दत्तवान् भवच्छब्दवत्।

## स्वरात्तो वा।

स्वरादुत्तरस्य दा इत्यस्य तो वा भवति क्तिति परे। प्रत्तः। प्रदत्तः। अवत्तम्। अवदत्तं नाम्यन्तोपसर्गस्य दीर्घो भवति। ददातेस्तो वाच्यः। नितरां दीयते स्म तत् नीतं, नीदत्तम्। पर्य्यासमन्ताद्भावेन दीयते स्म तत् परीत्तम्। परीदत्तम्। दधाते र्हिर्निष्ठायां वाच्यः। धीयते स्मासौ हितः। दधाति स्मासौ हितवान्। जहातेश्च क्तिति। जहातेर्धातोः क्तिति प्रत्यये परे हिरादेशः स्यात्। तेन पूर्वं हित्वा हीयते स्मसौ हितः। अहासीदिति हितवान्। यजां यवराणां सम्प्रसारणम्। छशषराजादेः षः। इष्टम्। टुवप् बीजतन्तु-सन्ताने। उप्तं बीजम्। वह् प्रापणे। सम्प्रसारणम्। होढः। ढत्वम्। तथोर्द्धः। ष्टुत्वम्। ढि ढो लोपः। ऊढोऽनडुहा पङ्कः। व्येञ् संवरणे। संवीतः। ह्वेञ् आह्वाने। आहूतः। वद व्यक्तायां वाचि। उदितः। उक्तः।

स्वर०। (पं० ए०) ङसिरत् सवर्णे० त (प्र० ए०) स्रो० वा (प्र० ए०) अव्य० सस्वरात् उपसर्गात् परस्य दाधातोः त् इत्यादेशो वा भवति पक्षे क्त दत् इत्यादेशो भवति तकारादौ क्तिति परे। दा प्रपूर्वः एकत्र त् एकत्र

दत् क्तप्र०। प्रत्तं प्रदत्तम्। एवम् अवपूर्वः अवत्तम् अवदत्तं चेति रूपद्वयम्। आदायि इति प्रत्तं प्रदत्तम्। एवम् उपात्तम् उपादत्तम्। यज् देवपूजासङ्गति० यज् क्तप्र० त। यजां यवराणामिति सम्प्रसारणम्। यकारस्य इकारः व्रश्च-भ्रस्जादेरिति षत्वम्। ष्टुभिः ष्टुः। इष्टं क्तवतुप्रत्यये इष्टवान्। टुवप्धातुः बीजसन्ताने अन्नादिवपने इत्यर्थः। टुकारः ट्वितोऽथुरिति कार्य्यार्थः। वप् क्तप्र० यजामिति वस्य उः। स्वर० (प्र० ए०) अतो अम् उप्तं बीजम् अवापि इत्यर्थः। वह प्रापणे। वह क्तप्र० यजामिति वस्य उः। होढः तथोर्धः ष्टुभिः ष्टुः ढि ढो लोपो दीर्घश्च ढलोपः उकारस्य ऊकारः (प्र० ए०) सो० ऊढः अनडुहा वृषभेण पङ्कुः खञ्जः पुमान् ऊढः। व्येञ् संवरणे। व्ये संपूर्वः क्तप्र० कित्त्वात् यजामिति सम्प्रसारणं सस्वरस्य सम्प्रसारणं दीर्घे च दीर्घ इति व्ये इत्यस्य वी। संवीतः ह्वेञ् आह्वाने आङ्पूर्वः। क्तप्र० सम्प्रसार० ह्वे इत्यस्य हु (प्र० ए०) सो० आहूतः एवम् आहूतवान्। आहूयते स्म इत्याहूतः। आजुहाव इत्याहूतवान्। वद व्यक्तायां वाचि। वद क्तप्र० क्तत इतीडागमः। कित्त्वात् सम्प्रसारणं वस्य उः (प्र० ए०) अतो अम् उदितम्। वच क्तप्र० सम्प्रसारणं चोः कुः स्वर० उक्तः।

## वसिक्षुधोरिट्।

**वसिक्षुधोर्द्वयोर्धात्वोरिडागमो भवति क्ते क्तवतौ च। उषितः। क्षुधितः। सुप्तः।**

वसिक्षुधो०। (ष० द्वि०) इट् (प्र० ए०) यद्यपि धातुपाठे वसिक्षुधौ एतौ द्वौ धातू अनुदात्तौ अनिटौ कथितौ, तथापि तयोरिडागमो भवति। वस् निवासे क्तप्र० सम्प्रसा० वसिक्षु धोरितीडागमः घसादेः षः अवात्सीदिति उषितः। एवं क्षुध् बुभुक्षायां क्षुधितः। जिष्वप्शये आदेः षः सः स्वप् क्तप्र० सम्प्रसा० सुप्तः।

## त्राणाद्या निपात्यन्ते।

**त्राणः। त्रातः। क्षीणः। क्षीतः। निर्वाणः। निर्वातः। घ्राणः घ्रातः। परिवृढः। जनेर्जा। जातः।**

त्राणाद्याः शब्दाः अतीते काले अर्थविशेषे सिद्धा एव वा निपात्यन्ते ते रक्षणे

इत्यस्य वाण: वात: इति रूपद्वयम्। वै क्तप्र० सन्ध्यक्षराणामा वालपचे क्तप्रत्ययेन सहैव वाण इति निपात्यते। एवं क्रीळज्जायामित्यस्य क्रीण: क्रीत:। वा धातु: गतिगन्धनयो: निर्पूर्व: निर्वाण: निर्वात:। एवं घ्राण: घ्रात: वित्त: विन्न: उत्त: उन्न: नुत्त: नुन्न:।

## सम्पर्युपेभ्य: करोतेर्भूषणे सुट्।

संस्कृत:। परिष्कृत:। उपस्कृत:।

सम्पर्युपेभ्य इति। सम्, परि, उप् इत्येतेभ्य उपसर्गेभ्य: परस्य करोतेर्धातो: भूषणे अलङ्करणेऽर्थे सुडागमो भवति टित्वादादौ उकार उच्चारणार्थ: क्रमेण सम्परि उप् पूर्व: क्तप्र० सर्वत्र सुडागम: खर० संस्कृत: परिष्कृत:, उपस्कृत: अलङ्कृत: इत्यर्थ:। जनेर्जा जनी प्रादुर्भावे इत्यस्य जा आदेश: क्तप्र० जात:। एवं खन् खन् इत्यस्य खा आदेश:। खात:।

## पचो व:।

पक्व:।

पचो व:। पचेर्धातोरतीतेऽर्थे व प्रत्ययो भवति क्तप्रत्ययार्थे यद्वा क्त प्रत्ययस्यैव व इत्यादेशो भवति। चो: कु:। पक्व:।

## शुष: क:।

शुष्क:।

शुष: क:। शुष्शोषे इत्यस्य कप्र० शुष्क:।

## स्फाय: स्फी।

स्फीत:।

स्फाय: स्फी। स्फायेर्धातो: क्तप्रत्यये परे स्फी इत्यादेशो भवति। स्फायी वृद्धौ स्फाय क्त प्र० स्फी आदेश: स्फीत:। क्षै क्षये सन्ध्यक्षराणामा० क्षायतेर्मप्र० क्षाम:। इति।

## क्वसुकानौ गवेवत्।

धातोः क्वसुकानौ प्रत्ययौ भवतः अतीते काले। तौ च णप् ए इति वद्भवतः। णबादिवद्भावो नः। बिभिद्वान्। चकृवान्। चक्राणः।

क्वसुकानौ णबेवत्। क्वसुश्च कानश्च क्वसुकानौ (प्र० द्वि०) औओऔ णप् च एच णबे णबेभ्यां तुल्यौ वर्त्तेते इति णबेवत् (प्र० ए०) अन्व० धातोरतीते काले क्वसुकानौ प्रत्ययौ भवतः तौ च णप् एवत् भवतः यथा आख्यातपरस्मैपदिनां धातूनां परोक्षे णप् तथा अत्रापि तेषां परस्मैपदिनां क्वसुः। यथा आत्मनेपदिनाम् ए आते तथात्र कानः उभयपदिनाम् उभावपि आख्याते तु णप् ए इत्येतयोः प्रथमपुरुषः ककारो गुणनिषेधार्थः क्वसोः उकारो नुम्विधानार्थः णबादित्वाद्द्विर्वचनं नतु वृद्धिः उदा० विद्ज्ञाने क्वसुकानाविति परस्मैपदित्वात् क्वसुप्र० वस् णबादित्वाद्द्वित्वं नामसंज्ञायां स्यादिर्विभक्तिः। विविद्वस् स इति स्थिते उकारानुबन्धित्वाद्भ्रितोनुमिति नुमागमः। न्सम्महत इति दीर्घः हसेपः संयोगान्तस्येति सलोपः। विविद्वान् विविद्वांसौ विविद्वांसः। विविद्वांसं विविद्वांसौ शसादौ स्वरे तु वसोर्वंउः क्वित्वात्षः सः स्वर० विविदुषः विविदुषा भकारादौ वसांस्से विविद्वद्भ्यामित्यादि विवेद इति विविद्वान्। एवं भिदिर् विदारणे भिद् क्वसु द्वित्वं चपानां जबचपाः भस्य बः शेषं पूर्ववत्। बिभेद इति बिभिद्वान् कृ क्वसु प्र० वस् णबादित्वात् द्वित्वं र इति पूर्वऋकारस्य अकारः कुहोश्चुः चकृवत् (प्र० ए०) भ्रितोनुम् न्सम्महतो दीर्घः हसेपः संयोगान्तस्य लोपः। चकृवान् चकार इत्यर्थः। चकृवांसौ इत्यादि शसादौ स्वरे तु वस्य उत्वे कृते ऋरं स्वर० क्वित्वा० चक्रुषः चक्रुषा। इत्यादि आत्मनेपदे कानप्र० आन द्वित्वं रः कुहोश्चुः ऋरं० स्वर० षुर्णो० (प्र० ए०) सो० चक्राणः चक्रे इत्यर्थः देववत्। षद्लविशरणे ष्वादेः षः सः आङ्पूर्वः वसुप्र० द्वित्वं लोपः णपाद्वित्वे चास्येति पूर्वपदस्य लोपः अकारस्य च एकारः। क्रादेर्णादेः क्वत इति इडागमः स्वर० (प्र० ए०) नुमादिकं प्राग्वत्। आसेदिवान् आसेदिवांसौ इत्यादि। शसादौ वसोर्वंउः निमित्ताभावे नैमित्तिकस्याप्यभावः इति वचनात् ढिढीलोपः स्वर० क्वित्वा० आसेदुषः आसेदुषा आसेदिवद्भ्याम् आसेदिवद्भिरित्यादि। एवमन्येऽप्यूह्याः। क्वसुप्रत्यये स् एकस्वर० ऋदृण् आकारापान्तानाम् इट् वक्तव्यः यच्चिवान् पेचिवान् वाशब्दव्यवस्थार्थः विविश्वान् आरिवान् ईयिवान् उपेयिवान् ददिवान् विदहनगमदृशां वा इट् इडभावे गम् धातोर्मकारस्य नकारः। यथा क्वचिदपदान्तेऽपि पदान्ततेति मोनोधातोः विविद्वान् विविदिवान् जघन्वान् जघ्निवान् जगन्वान् जग्मिवान् ददृश्वान् ददृशिवान् वाशब्दव्यवस्थार्थः। विविश्वान् विविशिवान्।

## शतृशानौ तिप्तेवत्क्रियायाम् ।

क्रियापदे गम्यमाने । शतृशानौ प्रत्ययौ भवतः । तौ च । तिप् ते इति वत्परस्मैपदात्मनेपदयोर्भवतः । पचन्नास्ते । पठंस्तिष्ठति । गायन्नागच्छति ।

शतृश्च शानश्च शतृशानौ । ( प्र० द्वि० ) औऔश्चौ तिप्तेवत् ( प्र० ए० ) अव्य० क्रिया ( स० ए० ) आम्ङे ङितांयट् सवर्णे० क्रियापदे गम्यमाने प्रोच्यमाने धातोः शतृशानौ प्रत्ययौ भवतः । तौ च तिप्तेवत् भवतः । परस्मैपदिनां शतृ आत्मनेपदिनां च शान उभयपदिनाम् उभावपि इत्यर्थः । शकारः शित्कार्यार्थः । ऋकारश्च नुम् ईप्विधानार्थः पच् शतृप्र० अत् चतुर्थत्वात् अप् कर्त्तरि स्वर० अदे इति अलोपः स्वर० ( प्र० ए० ) ऋितोनुम् हसेपः संयोगां० पचन् आस्ते । एवं पठ् व्यक्तायां वाचि । पठन् तिष्ठति न सक्छते नश्चा० पठंस्तिष्ठति गैशब्दे गैशतृप्र० अत् अप् कर्त्तरि ऐआय् स्वर० अदे स्वर० ऋितोनुम् हसेपः संयोगां० गायन् गच्छति । एवं कुर्वन् कुर्वाणः ।

## मुमानेतः ।

अकारस्याने परे मुमागमो भवति । पचमानः पिबति । यजमानः स्तौति । मन्वानः पिबति ।

मुमानेतः । मुम् ( प्र० ए० ) हसेपः आन ( स० ए० ) अइए अत ( ष० ए० ) स्वर० सो० अकारस्य शानसम्बन्धिनि आने परे मुमागमो भवति । ककारः स्थाननियमार्थः । उकार उच्चारणार्थः । डुपचष्पाके पच उभयपदित्वादात्मनेपदित्वात् शानप्र० आनशिति चतुर्वत् इति अप् कर्त्तरि मुमागमः कित्वात्पचु अग्रे म् स्वर० सो० पचमानः पानीयं पिबति एवं यजदेवपूजा० यजमानः सन् पूजां कुर्वन् सन् स्तौति । मन् ज्ञाने शानप्र० तनादेरुप् उप् प्र० स्वर० उव स्वर० ( प्र० ए० ) सो० मन्वानः मनुते इति मन्वानः । आस् उपवेशने आस् शतृशानौ तिप्ते इति शान्प्र० आन् अप् कर्त्तरि अदादेर्लुक् ।

## आसिराने ई ।

आसीनः ।

आसीरानई। आसि (ष० ए०) ङिति ङस्य खौ० आ (ष० ए०) साङ्के० आन् (ष० ए०) स्वर० लो० ई (प्र० ए०) साङ्के० चतु:पदं आस् उपवेशने इत्यस्य धातो: परस्य आनप्रत्ययसम्बन्धिन आकारस्य ईकारो भवति स्वर०। आसीन:।

## वादीपोः शतुः।

अवर्णात्परस्य शतुर्वा नुमागमो भवति। ईकारे परे। तुदत्। तुदती। तुदन्ती। स्त्री तुदती। तुदतीवत्तान्ताः।

वा (प्र० ए०) अव्य० अ (पं० ए०) ङसिरत् सवर्णे० ईश्च ईप् च इपौ तयो: (स० ए०) स्वर० पश्चाच्चपा अवेजवा: शतृ (ष० ए०) ऋतोङ्स: टिलोप: स्वर० चतु:पदं अवर्णात्परस्य शतु: शतृप्रत्ययस्य वा नुमागमो भवति नपुंसके इमौ इति सूत्रोत्पन्ने ईकारे परे तथा ङित इति सूत्रोत्पन्ने ईपि परे। तुद्व्यथने तुद शतृप्र० अत् तुदादेः स्वर० अदे स्वर० तुदत् नपुंसकात् स्यमोर्लुक् द्विवचने तुदत् अ इति स्थिते ईमौ औस्थाने ई। वादीपो: शतुरिति एकत्र नुमागम: मिदन्त्यात् स्वरात्परो वक्तव्य: नशा० स्वर० तुदन्ती पक्षे तुदती वा कुले तुदन्ति। पुनरपि तुदत् तुदती तुदन्ती तुदन्ति। स्त्रीलिङ्गे तुदत् ऋकारानुबन्धत्वात् ङित इतीप् वादीपो: शतुरिति एकत्र नुमागम:। तुन्दती तुदती वा स्त्री वर्तते तुदन्त्यौ तुदत्यौ तुदन्त्य: तुदत्य:। एवं पक्षद्वयेऽपि नदीशब्दवत्।

## अप्ययोरान्नित्यम्।

अपप्रत्ययायप्रत्ययसम्बन्धिनोऽकारात्परस्य शतुर्नित्यं नुमागमो भवति। पठन्ती। दीव्यन्ती दृश्यते। द्विरुक्तानां जक्षादीनां च शतुर्नुम्प्रतिषेधो वक्तव्यः। ददतः। दधतः। जक्षतः। जाग्रतः। दरिद्रा दुर्गतौ। दरिद्रतः। चकासतः। अनुशासत्।

अप्ययोरान्नित्यम्। अप् च यश्च अपौ तयो: (ष० द्वि०) ओसि ए अय् स्वर० खौ० अ (पं० ए०) ङसिरत् सवर्णे० पश्चान्नामिनो र: स्वर० नित्यं (प्र० ए०) अव्य० अमिजमावा स्वर० अप्कर्तरि इति अप्प्रत्यय: दिवादेर्य:

इति यप्र०। एतयोः सम्बन्धिन अकारात्परस्य शटप्रत्ययस्य नित्यं नुमागमो भवति न तु विकल्पेन ईकारे ईपिच परे। मकारः स्थानविपर्य्ययार्थः। भू शटप्र० अत् अप्कर्त्तरि गुणः ओअव् स्वर० अदे० स्वर० ङित इति ईप् प्र० अप्यथो-रान्नित्यं नुमागमः नश्चापदान्ते भवन्ती एवं पचन्ती पठन्ती दिव् दिवादेर्यः शट य्वोर्विहसे दीर्घः अदे स्वर० अप्यथोरान्नित्यम् इति नुमागमः दिव्यन्ती दृश्यते। एवं श्लिष् आलिङ्गने श्लिष्यन्ती। द्विरुक्तानां धातूनां विशेषमाह। द्विरुक्तानां ह्वादीनां जक्षभक्षहसनयोः जक्षजागृदरिद्राचकासृशास् इत्यादीनां च सम्बन्धिनः शटप्रत्ययस्य त्रितोनुमिति प्राप्तो यो नुम् तस्य निषेधो वक्तव्यः नुमागमो न भवतीत्यर्थः। उदाहरणं दा शट अत् अप्कर्त्तरि ह्वादेर्द्वित्वेति अप् लुक्द्वित्वस्य ह्रस्वः दादेरिति आलोपः स्वर० द्विरुक्तात् नुम् निषेधः (प्र० ए०) हसेपः ददत् ददतौ ददतः इत्यादि स्त्रीलिङ्गे ददती ददत्यौ ददत्यः नपुंसके ददत् ददती ददन्ति द्विरुक्तानां नपुंसके शौ परे वानुम् तेन ददन्ति ददति इति रूपद्वयम्। दधत् दधतौ दधतः एवं बिभ्रत् डुभृञ् शटप्र० अत् अप्कर्त्तरि ह्वादेर्द्विश्च झपानां जबचपाः भृञांतुकि ऋरं स्वर० ञिभीभये भी अत् अप् ह्वादेर्द्विश्च झपानां ह्रस्वः य्वोवा अनेकाक्षरस्येति यकारः बिभ्यत् एवं जुह्वत् विदधत् इत्यादयो अन्येऽपि ह्वादितुल्या यङ्लुगन्ताश्च ज्ञातव्याः जक्षधातुः भक्षहसनयोः जक्ष शटप्र० अप्कर्त्तरि अदादेर्लुक् स्वर० (प्र० ए०) जक्षा-दित्वान्नुम्निषेधः हसेपः जक्षत् जक्षतौ जक्षतः। जागृ निद्राक्षये जागृ अत् अप्कर्त्तरि अदादेर्लुक् ऋरं स्व० (प्र० ए०) हसेपः जाग्रत् जाग्रतौ जाग्रतः। दरिद्रा दुर्गतौ दरिद्रा अत् अप् अदादेर्लुक् दरिद्रादेरिदालोपश्चेत्याकारलोपः। स्वर० हसेपः दरिद्रत् चकासृ दीप्तौ चकास् शटप्र० अप् अदादे० स्वर० चका-सत्। शास् अनुशिष्टौ शास अनुपूर्वः शट अनुशासत् एषु द्विरुक्तानां जक्षा-दीनामिति नुम्निषेधः इत्यादि जक्षादयः। आनप्रत्यये बिभ्राणः विदधानः इत्यादि।

## विदेर्वा वसुः।

**विदेर्धातोः शटविषये वा वसुप्रत्ययो भवति। विद्वान्। विदन्। अत्रभवत्तत्र भवच्छब्दौ पूजार्थे निपात्येते। अत्र-भवन्तो भट्टमिश्राः। तत्रभवद्भिर्भगवत्पादैर्भणितम्।**

विदेर्वा वसुः। विदि (ष० ए०) ङिति ङस्य स्यो० वा (प्र० ए० अव्य०

वसु (प्र० ए०) सो० सिद्धं विदज्ञाने इत्यस्य धातोः शतविषये शतप्रत्ययार्थे वा विकल्पेन वसुप्रत्ययो भवति उदा० विद् एकत्र वसुप्रत्ययः विद्वस् हसान्त-पुंलिङ्गवत्। त्रितो० नुसम्महतो दीर्घः संयोगान्तस्य लोपः विद्वान् विद्वांसौ इत्यादि द्वितीये तु शतप्रत्यये कृते भवत्शब्दवत् प्रक्रिया। विदन् विदन्तौ इत्यादि। अर्ह पूजायां शतप्रत्ययः अत् अप् अर्दे स्वर० (प्र० ए०) त्रतो नुम् संयोगान्तस्य लोपः हसेपः अर्हतीत्यर्हन् अत्रभवत् तत्रभवत् इत्येतौ शौशब्दौ उकारानुबन्धौ पूजार्थे पूज्यत्ववाचकत्वे निपात्येते। शतप्रत्ययं विनापीत्यर्थः। पूज्ये तत्र भवांश्चात्रभवांश्च भगवानपीत्यभिधानचिन्तामणिवचनात् (प्र० ए०) उकारानुबन्धत्वात् नुम् अत्वसोः साविति न भवति अत्रभवत् स्यादिः त्रितो नुम् अत्वसोः सौ अत्रभवान् अत्रभवन्तौ अत्रभवन्तः इत्यादि। अत्रभवन्तः पूज्याः। एवं तत्रभवान् तत्रभवन्तौ तत्रभवन्तः भट्टमिश्राः एते। तत्रभवद्भिः पूज्यैर्भगवत्पादैर्युष्माभिर्भणितं कथितं शतप्रत्ययरहितावेतौ निपात्यौ।

## शीले तृन्।

धातोस्तृन्प्रत्ययो भवति शीले स्वभावेऽर्थे। करणशीलः कर्त्ता। हर्त्ता। इति।

शीले तृन्। शील (स० ए०) अइए तृन् (प्र० ए०) हसेपः शीले स्वभावेऽर्थे धातोः तृन्प्रत्ययो भवति नकारः प्रत्ययभेदज्ञापनार्थः कृ तृन्प्र० गुणः जलतुं० (प्र० ए०) सुरार् सेरा ङित्वाट्टिलोपः स्वर० करणशीलः कर्त्ता। एवं हरणशीलो हर्त्ता। भरणशीलो भर्त्ता। इति क्त्वादिप्रक्रिया।

## अथ शीलार्थप्रक्रिया।

अथ शीलार्थप्रक्रिया कथ्यते।

## इष्णु स्नु क्नुः।

धातोः शीले स्वभावेऽर्थे इष्णु स्नु क्नु इत्येते प्रत्यया भवन्ति। कृञ् अलम्पूर्वः। अलङ्कृञ् निराकृञ् प्रजन उत्पच् उत्पत् उत्पद् त्रस् उन्मद् रुच् अपत्रप् वृतु वृधु सह चर भू भ्राज् जरन्त एभ्य इष्णुः। अलङ्करोतीत्येवंशीलः अलङ्-

रिष्णुः। निराकरिष्णुः। प्रजायते इत्येवंशीलः प्रजनिष्णुः। उत्पचतीत्येवंशीलः उत्पचिष्णुः। पत्लृ पतने। उत्पततीत्येवंशीलः उत्पतिष्णुः। पद् गतौ। उत्पद्यते इत्येवंशीलः उत्पदिष्णुः। ग्रस् अदने। ग्रसतीत्येवंशीलः ग्रसिष्णुः। उन्माद्यतीत्येवंशीलः उन्मदिष्णुः। रुचि दीप्तौ। रोचतीत्येवंशीलः रोचिष्णुः। त्रपूष् लज्जायाम्। अपत्रपति वा अपत्रपते इत्येवंशीलः अपत्रपिष्णुः। वृतु वर्त्तने। वर्त्तते इत्येवंशीलः वर्त्तिष्णुः। वृधुङ् वृद्धौ। वर्द्धते इत्येवंशीलः वर्द्धिष्णुः। सहति सहते वेत्येवंशीलः सहिष्णुः। चरतीत्येवंशीलः चरिष्णुः भविष्णुः। भ्राजृ दीप्तौ। भ्राजते इति भ्राजिष्णुः। इष्णुप्रत्यये परे अरन्तानां ञिलोपाभावो वाच्यः। कारयतीत्येवंशीलः कारयिष्णुः। एते इष्णुप्रत्ययान्ताः।

इष्णुस्नुक्नुः। इष्णुश्च स्नुश्च क्नुश्च इष्णुस्नुक्नुः नपुंसकात्स्य० धातोः शीलेऽर्थे इष्णु स्नु क्नु एते त्रयः प्रत्यया भवन्ति यथायोग्येन। भ्राज् भू सह रुच चर वृध वृत् प्रजन अपत्रप अलङ्कृञ् निराकृञ् उन्मद उत्पद उत्पच एभ्य इष्णुः उदा० कृ अलंपूर्वः अलङ्करणशीलो अलङ्करिष्णुः इष्णुप्र० गुणः स्वर० निराङ्पूर्वः निराकरिष्णुः निराकर्त्तुं शीलमस्येति निराकरिष्णुः भानुशब्दवत्। ग्रस् अदने ग्रसिष्णुः सहिष्णुः उत्पतिष्णुः उन्मदिष्णुः इत्यादि।

## ग्ला जि स्था भू ग्ला क्षि पच् यज् परिमृज् एभ्यः स्नुः।

ग्लै हर्षक्षये। ग्लायतीत्येवंशीलः ग्लास्नुः। जयतीत्येवंशीलः जिष्णुः। भवतीत्येवंशीलः भूष्णुः। जिभ्वोः स्नौ गुणाभावो न इट् चेश्च तथा। तिष्ठतीत्येवंशीलः स्थास्नुः। क्षि क्षये। क्षयतीत्येवंशीलः क्षिष्णुः। पचतीत्येवंशीलः पक्ष्णुः। यजतीत्येवंशीलः यक्ष्णुः। मृजूष् शुद्धौ। मृजेर्गुण-

निमित्ते प्रत्यये परे वृद्धिर्वाच्या। परिमार्ष्टीत्येवंशील: परिमार्ष्णु:।

ग्ला चि स्था यज् पच परिमृज् जि भू एभ्य: स्नु:। जिभुवोर्गुणे अभावश्च जि जये इष्णु प्र० क्लिशा० नस्य ण: जिष्णु:। एवं भूष्णु: स्थास्नु: ग्लास्नु: पक्ष्णु: मार्ष्णु:।

## विष्लृ त्रस् गृध् धृष् क्षिप् एभ्य: क्नु:।

विष्लृ व्याप्तौ। वेवेष्टि इत्येवंशील: विष्णु:। त्रसी उद्वेगे। त्रसी भये। त्रस्यतीत्येवंशील: त्रस्नु:। गृध अभिकाङ्क्षायाम्। दिवादि:। गृध्यतीत्येवंशील: गृध्नु:। ञिधृषा प्रागल्भ्ये। स्वादि:। धृष्णोतीत्येवंशील: धृष्णु:। क्षिप प्रेरणे। क्षिपतीत्येवंशील: क्षिप्नु:। ककारो गुणनिषेधार्थ:।

क्षिप्त्रस्गृध्विष्लृ एभ्य: क्नु:। विष्लृव्याप्तौ वेवेष्टि जगदित्येवंशीलो विष्णु: क्नु प्र० ककारो गुणनिषेधार्थ: षु नो० गृध् धातु: अभिकाङ्क्षायां वाञ्छायां गृध् क्नु० नु स्वर० गर्द्धनशीलो गृध्नु: क्षिप्नु: त्रस्नु:।

## षाकोकण:।

धातो: शीलेऽर्थे षाक उ उकण् इत्येते प्रत्यया भवन्ति।

षाकोकण:। शाकश्च उश्च उकण् च (प्र० व०) स्वर० स्नो० शीले स्वभावेऽर्थे षाक उक उकण् एते त्रय: प्रत्यया भवन्ति।

## जल्प भिक्ष कुट्ट लुठ् वृङ् एभ्य: षाक: प्रत्ययो भवति।

जल्प व्यक्तायां वाचि। जल्पतीत्येवंशील: जल्पाक:। भिक्ष याञ्चायाम्। भिक्षतीत्येवंशील: भिक्षाक:। कुट्ट ताड़ने वा छेदने। कुट्टतीत्येवंशील: कुट्टाक:। लुण्ठ चौर्य्ये।

लुण्ठत्येवंशील: लुण्ठाक:। वृङ् सम्भक्तौ। वृञ् संवरणे। वर निवारणे। वृणुते वा वरतीत्येवंशील: वा वृणीत इत्येवंशील: वराक:। ष ईवर्थ:। वराकी।

जल्प भिक्ष कुट्ट लुठ् वृञ् वर एभ्य: षाक:। षाक इति षकार ईनर्थ:। वर निवारणे वर आकप्र० स्वर० ( प्र० ए० ) सौ०। स्त्री चैत वराकी षित: यस्य लोप: स्वर० वारयति इत्येवंशीलो वराक:। भिक्ष् याच्ञायां भिक्ष षाकप्र० आक स्वर० सौ०। एवं जल्प जल्पने कुट्टकुट्टने, लुठिलेये, जल्पाक: कुट्टिक: लुण्ठाक:।

## सान्ताशंस् भिक्ष् एभ्य उ: प्रत्ययो भवति।

सान्ताशंसयोश्च। सप्रत्ययान्ताद्धाङ्पूर्वात् शंसु स्तुताविल्यस्माद्धातोश्च शीलार्थं विनापि उ: प्रत्ययो भवति। वच् परिभाषणे। विवक्षतीति विवक्षु:। इच्छायामात्मन: स:। द्वित्वम्। पूर्वस्य हसादि: शेष: ऋत इर्। य्वोर्विहसे। कुहोश्चु:। चिकीर्षतीत्येवंशील: चिकीर्षु:। जिघृक्षतीत्येवंशील: जिघृक्षु:। आङ्पूर्व: शंसु स्तुतौ। शंस् कथने। आशंसतीत्येवंशील: आशंसु:। भिक्षतीत्येवंशील: भिक्षु:। पिपासतीत्येवंशील: पिपासु:। तितीर्षतीत्येवंशील: तितीर्षु:।

सान्त आशस् भिक्ष उ:। एभ्य: उ:। भिक्ष उप्र० स्वर० भिक्षु: सान्ताशंसयोश्च इच्छार्थस्य सप्रत्ययान्तस्य धातो: आङ्पूर्वस्य शंस: शंसुस्तुताविल्यस्य च धातो: शीलार्थं विनापि उप्रत्ययो भवति। वच परिभाषणे वच वक्तुमिच्छुर्विवक्षु: इच्छायामात्मन: स: द्विश्च य: से अकारस्य ईकार: चो: कु: क्विला० कषसंयोगेक्ष: विवक्ष इति सिद्धम् उप्र० यत इत्यलोप: स्वर० ( प्र० ए० ) सौ० विवक्षु: शंस् स्तुतौ कथने च शंस् आङ्पूर्व: उप्र० स्वर० ( प्र० ए० ) सौ० आशंसु: ग्रह इच्छार्थे उपादाने च सप्र० द्विश्च पूर्वस्य० कुहोश्चु: य:से० ग्रहाङ्किति सम्प्रसारणं होढ: आदिजबानामिति गस्य ज: षढो: क: से क्विला० कषसंयोगेक्ष: उप्र० यत इति अलोप: स्वर० ( प्र० ए० ) सौ० जिघृक्षु: ग्रहीतुमिच्छुर्जिघृक्षु:। पा पाने पा सप्र० द्वित्वं ह्रस्व: य:से उप्र० पिपासु: भिक्षु:।

**लष पत पद्ध भिद स्था भू वृष हन् कम् गम् शॄ एभ्य उकण् प्रत्ययो भवति।**

लष कान्तौ। लषतीत्येवंशील: लाषुक:। पततीत्येवंशील: पातुक:। भिक्ष याञ्चायाम्। भिक्षतीत्येवंशील: भिक्षुक:। पद गतौ। णित्त्वाद्वृद्धि:। पद्यतीत्येवंशील: पादुक:। तिष्ठतीत्येवंशील: स्थायुक:। भवतीत्येवंशील: वा भवितुं शीलमस्यास्तीति भावुक:। वृष वृष्टौ। वृषु सेचने। वर्षतीत्येवंशील: वर्षुक:। हन्तीत्येवंशील: घातुक:। कमु कान्तौ। कामयते इत्येवंशील: वा कामितुं शीलमस्यास्तीति कामुक:। गमॢ गतौ। गच्छतीत्येवंशील: गामुक:। शॄ हिंसायाम्। शृणातीत्येवंशील: शारुक:। शॄवन्द्योरारु:। शॄवन्द्योर्धात्वोरारु: प्रत्ययो भवति। शरारु: वन्दारु: स्पृहि गृहि पति शीङ् एभ्य आलुर्वाच्य:। स्पृह ईप्सायाम्। ईप्सा इच्छा। गृह ग्रहणे। पत ऐश्वर्ये। त्रयश्चुरादयोऽदन्ता:। आलौ ञिलोपाभावो वाच्य:। स्पृहयतीत्येवंशील: स्पृहयालु:। गृहयतीत्येवंशील: गृहयालु:। पतयतीत्येवंशील: पतयालु:। शीङ् स्वप्ने। शेते इत्येवंशील: शयालु:।

भू, स्था हन्, गम्, लष्, वृष्, पत, पद, एभ्य: उकण् कम्धातु: कान्तौ अभिलाषे कामयतीति कामुक: कम् उकण् प्र० णकारो वृद्ध्यर्थ: अत उपाधाया: स्वर० (प्र० ए०) सो० एवं भिक्षुक: भू सत्तायां भू उकण् प्र० धातोर्नामिन इति वृद्धि: औआव् स्वर० (प्र० ए०) सो० भावुक:, स्थायुक:, आतो युक् हनो घत् घातुक:, अभिलाषुक:, वार्षुक:, पातुक:, पादुक:, ,आगामुक:, इत्यादि। नम्।

**नमादे र:।**

नम् कपि स्मिङ् नञ्पूर्वो जस् कम् हिंस् दीप् एभ्यो रः प्रत्ययो भवति शीलेऽर्थे। णम् प्रह्वत्वे शब्दे च। नमतीत्येवं-शीलः नम्रः। कपि चलने। कम्पतीत्येवंशीलः कम्प्रः। स्मिङ् ईषद्धसने। स्मयते इत्येवंशीलः स्मेरः। जसु मोक्षणे। जसु गतिनिवृत्तौ। दिवादिः। न जस्यतीत्येवंशीलम् अजस्रम्। कामयते इत्येवंशीलः कम्रः। हिसि हिंसायाम्। हिनस्तीत्येवंशीलः हिंस्रः। दीपी दीप्तौ। दीप्यते इत्येवं-शीलः दीप्रः।

नमादिः (ष० ए०) ङिति ङस्य० सो० र० (प्र० ए०) सो० मध्ये जामिनोरः रिलोपो दीर्घश्च नम्, कम्, स्मिङ्, अजस्, कम्प, दीप, हिंस्, एभ्यो रः प्रत्ययः स्यात् णम् प्रह्वीभावे णादेः नः नः नम् रप्र० स्वर० (प्र० ए०) सो० नमनशीलो नम्रः। एवं कम् कान्तौ कम्रः स्मेरः अजस्रं कम्प्रः दीप्रः हिंस्रः।

## घसादेः क्मरः।

घस् सृ अद् एभ्यः क्मरः प्रत्ययो भवति शीलेऽर्थे। घस्लृ अदने। घसतीत्येवंशीलः घस्मरः। सृ गतौ। सृ सरणे। सृ हिंसायाम्। सरतीत्येवंशीलः सृमरः। अद् भक्षणे। अत्तीत्येवंशीलः अद्मरः। भिदि छिदि विदि एभ्यः कुरच्वाच्यः शीलेऽर्थे। भिनत्तीत्येवंशीलः भिदुरः। विद् ज्ञाने। वेत्ति इत्येवंशीलः विदुरः। छिदिर् द्वैधीकरणे। छिनत्ती-त्येवंशीलः छिदुरः। भासादेर्घुरः। भास् भञ्ज् भिद् एभ्यो घुरः प्रत्ययो भवति शीलेऽर्थे। घकारो घित्कार्य्यार्थः। भासृ दीप्तौ। भासतीत्येवंशीलः भासुरः।

घसादेः क्मरः। घस् आदिर्यस्यासौ घसादिस्तस्य (ष० ए०) क्मरः (प्र० ए०) सो० घसादेर्धातोः अदेश्च क्मरप्रत्ययो भवति शीलार्थे ककारो गुणनिषे-धार्थः घस्लृ अदने घस् क्मर प्र० स्वर० (प्र० ए०) सो० सृगतौ सरप्र० सो०

अद भक्षणे अद मर प्र० स्वर० अघर: भासादेर्घुर: भासदीप्तौ भञ्जभङ्गे ञिमिदा-स्नेहने एभ्यो धातुभ्यो घुरप्रत्ययो भवति शीलेऽर्थे। घकारो घित्कार्य्यार्थ:। भास् उर: स्वर० (प्र० ए०) स्वो० भासनशीलो भासुर: भञ्ज् आमर्दने भञ्ज् भासादेरिति उरप्र० ।

## चजोः कगौ घिति ।

धातोश्चकारजकारयोः ककारगकारौ भवतः घिति प्रत्यये परे। भञ्जो आमर्दने। भनक्तीत्येवंशीलः भङ्गुरः। ञिमिदा गात्रविक्षेपे। मेद्यते इत्येवंशीलः मेदुरः। यङ ऊकः। यज् जप् दंश् वद् एभ्यो यङ्प्रत्ययान्तेभ्य ऊकः प्रत्ययो भवति शीलेऽर्थे।

चजोः कगौ घिति। जस्य गः स्वर० (प्र० ए०) स्वो० भङ्गुरः स्वयमेव भज्यते इत्येवंशीलो भङ्गुरः मेद्यतीति शीलो मेदुरः छिदिभिदिविदां कुरः ककारो गुणनिषेधार्थः छिदुरः, भिदुरः विदुरः, एते सर्वे प्रत्ययाः शीलार्थाः।

## यङो लुक् तत्सन्नियोगेन धातोर्द्विर्वचनम् ।

यज् देवपूजासङ्गतिकरणदानेषु। अतिशयेन यजतीति वा इज्यते इत्येवंशीलः यायजूकः। जप व्यक्तायां वाचि। जप-जपां नुक्। जञ्जप्यते इत्येवंशीलः जञ्जपूकः। दश् दंशने। दन्दशूकः। वावद्यते इत्येवंशीलः वावदूकः।

यङ् ऊक यङ् (प्रं० ए०) स्वर० स्वो० ऊक (प्र० ए०) स्वो० अतिशयार्थे यङ् प्रत्ययान्ताद्धातोः शीलेऽर्थे ऊक् प्रत्ययो भवति। यज्, जप्, जागृ, वद, दंशिभ्यः इति वक्तव्यम्। वक्तव्यस्य प्रयोगानुसारित्वात् यङन्तस्यापि जागर्त्तेः ऊकप्रत्ययो भवति। लुक्। (प्र० ए०) हसेप: तस्य ऊकस्य सन्नियोगेन यङ्प्रत्ययस्य लुक् भवति। उदा० यज् अतिशयेन यजनशीलो यायजूकः। अतिशये हसादेर्यङ् द्वित्वं पूर्व० आत् इत्यकारस्य आकारः यायज्य इति स्थिते ऊकप्र० लुक् इति यङो लुक् स्वर० स्वो० दंश् दशने दंश् अतिशयेन दशतीत्येवंशील इति

विग्रहे यङ्प्र० नीलोपः द्वित्वं ज्ञमजपां नुक् नश्चा० ऊक० लुगिति यङोलुक् दन्दशूकः सर्पः एवं जप् व्य० जञ्जपूकः। वद व्यक्ता० यायजूकः। वावदूकः।

## जागर्त्तेरूको वाच्यः।

जागर्त्तीत्येवंशील: जागरूकः। इण्नश्जिसृगमिभ्यः क्वरप् वाच्यः। इण् गतौ। ह्रस्वस्य पिति। एतीत्येवंशीलः इत्वरः। णश अदर्शने। नश्यतीत्येवंशीलः नश्वरः। जयतीत्येवंशीलः जित्वरः। सरतीत्येवंशीलः सृत्वरः। गत्वरो निपात्यते शीलेऽर्थे। गच्छतीत्येवंशीलः गत्वरः। भियः क्रुक्लुकौ वक्तव्यौ। बिभेतीत्येवंशीलः भीरुः भीरुकः। इषिरुच्छश्च। इषेरुः प्रत्ययो भवति छान्तादेशश्च इच्छतीति इच्छुः वरः। स्था ईश् भास् पिस् कसादिभ्यो वरः प्रत्ययो भवति शीलेऽर्थे। तिष्ठतीत्येवंशीलः स्थावरः। ईश् ऐश्वर्य्ये। ईष्टे इत्येवंशीलः ईश्वरः। भासृ दीप्तौ। भासतीत्येवंशीलः भास्वरः। पिसृ गतौ पिसतीत्येवंशीलः पिस्वरः। कस् गतौ। कसतीत्येवंशीलः कस्वरः।

अयङन्तस्यापि जागर्त्तेः ऊकप्र० जागरूकः। यातेर्यङन्तादरप्रत्ययः तत्सन्नियोगे यङोलुक् अतिशयेन कुटिलं वा यातीत्येवंशीलो यायावरः इत्यादि।

## आदृतः किर्द्विश्च भूते।

आकारान्तादृकारान्ताद्धातोर्जनिनमिगमिभ्यश्च शीलेऽर्थे भूतकाले किः प्रत्ययो भवति णबादिवद्धातोश्च द्विर्वचनं भवति। आतोऽनपि।

रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम्।
याजकान् वव्रिराजघ्निः पौण्डरीके महाद्विजान्॥ १॥

तदा जग्निर्महाश्चर्य्यं नेमिर्नृपगणोऽपि तम्।
ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा॥ २॥

इति श्रीकृदन्तप्रक्रियायां शीलार्थप्रक्रिया।

आद्दत: किर्द्विश्च भूते। आच्च ऋच्च आदृत् (पं० ए०) स्वर० सो० किः (प्र० ए०) सो० द्विः द्विविभ्यांसुः (प्र० ए०) अव्य० च (प्र० ए०) अव्य० भूते (स० ए०) अद्दएं आकारान्तादयः ऋकारान्ताः डुकृञ् करणे वृञ्वरणे हृञ्हरणे इत्यादयस्तेभ्यो धातुभ्यः शीले स्वभावेऽर्थे अतीते काले कीप्रत्ययो भवति ककारो गुणनिषेधार्थः। तत्सन्नियोगे धातोर्द्विर्वचनम्। पा पाने पा किप्र० इ द्वित्वं पूर्वस्य ह्रस्वः आतोऽनपीत्याकारलोपः स्वर० (प्र० ए०) सो० पपिः। एवं डुदाञ्दाने ददिः डुकृञ् करणे कृ क्रिप्र० इद्विश्चरः इति पूर्वऋकारस्य अकारः कुहोः श्चुः ऋरं स्वर० (प्र० ए०) सो० चक्रिः एवं वृञ्करणे वव्रिः हृञ् हरणे हृ० आङ्पूर्वः किप्र० इ द्वित्वं रः कुहोश्चुः जस्य झपानां जबचपाः झस्य जः ऋरं स्वर० (प्र० ए०) सो० आजह्रिः। श्लोकश्चात्र रामः सोमं पपिः यज्ञे व्याख्या० रामः पौण्डरीके नाम्नि यज्ञे सोमम् अमृतं पपिः पीतवान् पपौ इत्येवंशीलो पपिः पुनः धेनूः ददिः दत्तवान् पुनः अद्भुतम् आश्चर्य्यं चक्रिः कृतवान् पुनः याजकान् यज्ञकर्तॄन् वव्रिः ववार इत्येवंशीलो वव्रिः। पुनः महाद्विजान् ब्राह्मणान् आजह्रिः आहृतवान् आजहार इत्येवंशील इत्यर्थः। इति श्लोकव्याख्या। चकारादुपधालोपानामपि किः प्रत्ययः। गम् जग्मिः हन् जघ्निः ज्ञा जज्ञिः। सहिवहिचलिपतिभ्यो यङन्तेभ्यः किः। सासहिः, वावहिः, चाचलिः, पापतिः, इत्यादि। इति शीलार्थप्रक्रिया।

## अथोणादयोप्रक्रिया निरूप्यन्ते।

अथोणादयो कथ्यते।

### सद्दोणादयः।

सर्वस्मिन् काले उणादयः प्रत्यया भवन्ति। कृ वा पा जिमि स्वदि साधि अशूङ् एभ्य उण् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। करोतीति कारुः कारुकः। वा गति०। आतो युक्। वातीति वायुः। पा पाने। पिबतीति पायुः।

जयति अनेनेति जायुः। डुमिञ् प्र०। मि कौटिल्ये। मिनोतीति मायुः। स्वादे आस्वादने। स्वद्यते इति स्वादुः। साध्यतीति साधुः। अश्नोतीति आशु। सि तनि गमि मसि सचि अवि हि धा क्रुशि एभ्यस्तुन् प्रत्ययो भवति। षिञ् बन्धने। सिनोतीति सेतुः। तनोतीति तन्तुः। गच्छतीति गन्तुः। मसि परिणामे रक्षणे च। मस्यतीति मस्तुः। षच सम्बन्धे। सचतीति सक्तुः। अव रक्षणे। अवतेर्वकारस्य उकारः। अवतीति ओतुः। हि गतौ वृद्धौ च। हिनोतीति हेतुः। दधातीति धातुः। क्रुश आह्वाने। क्रुशि रोदने च। आक्रोशे। छ्शषराजादेः षः। ष्टुभिः ष्टुः। क्रोशतीति क्रोष्टा। अव रक्षणे पालने च। कित्त्वात् सम्प्रसारणमुकारः।

सदौणादयः। सदा (प्र० ए०) अव्य० उण् आदिर्येषां ते उणादयः (प्र० ब०) ए ओ जसि एअय् स्वर० सौ० पश्चात् ओ। सर्वस्मिन् भूतभविष्यद्वर्त्तमाने काले उणादयः प्रत्यया भवन्ति। उदा० करोतीति कारुः कृ उण् प्रत्ययः णित्वाद्वृद्धिः कृ स्थाने कार स्वर० (प्र० ए०) सौ० कारुः। वा गतिगन्धनयोः। वा अयं धातुर्गतौ गन्धने च। गन्धनमपकारप्रयोगो हिंसा च। वा उण् आतो युक् स्वर० (प्र० ए०) सौ० वातीति वायुः पा पिबतीति पायुः मिनोति हिनस्तीति मायुः गोपूर्वकत्वे गोमायुः क्रुश आह्वाने क्रुश् उणादय इत्यादि शब्दात् तु प्र० उपधाया लघोर्गुणः छ्शषराजादेः षः ष्टुभिः ष्टुः स्वर० क्रोशति आह्वयति फूत्करोतीति वा क्रोष्टा शृगालः। साधना स्वरान्तपुंलिङ्गे कथितास्ति। जायते जन्यते वा जन्तुः। जन तु प्र०। कामयति अभिलषतीति कन्तुः।

## अवतेर्मुक्।

अवतेर्धातोर्मुक्प्रत्ययो भवति। अवतीति ओम् ओमौ ओमः।

अव रक्ष पालने। अवधातुः रक्षधातुश्च द्वावपि पालनार्थे। अव मुक्

प्र० कित्वात् सम्प्रसारणं कित्वकरणसामर्थ्यादेव व्यञ्जनस्यापि वकारस्य सम्प्रसारणं भवति वस्य उः उ ओ मानुस्वारः ओं अवतीति ओं जनपूर्वः जनान् अवतीति जनौं, विश्ववमतीति विश्वौं, जनौं जनौंसौ जनौंम: इत्यादि यथा अवतीति अव्ययमेतत्।

## अतिवृंहिभ्यां मनिण्।

अत सातत्यगमने। सततम् अततीति आत्मा वा अतति अखिलजनान्तर्निवासित्वेन सुकृतदुष्कृतकर्माणि पश्यतीति आत्मा। वृहि वृद्धौ।

अतधातुः सातत्यगमने निरन्तरगमने इत्यर्थः। अतति सातत्येन गच्छति तांस्तान् भावानिति आत्मा अत् मनिण् प्र० इकार उच्चारणार्थः णकारो वृद्ध्यर्थः। मन् अत उपधायाः स्वर० आत्मन् (प्र० ए०) नोपधाया दीर्घः इसेपः नाम्नो०।

## मन्युपधाया ऋ रः।

मनिण्प्रत्यये परे उपधाया ऋकारस्य रेफो भवति वृंहतीति ब्रह्मा।

वृहवृहिवृद्धौ वृह वृहति वृंहति वेति ब्रह्म मन्प्र० मन्युपधाया ऋरः मन्युपधायाः (ष० ए०) ऋरः मनि परे उपधाया उपधासम्बन्धिन ऋकारस्य रो भवति ब्र इत्यस्य ब्र ब्रह्मन् इति सिद्धं (प्र० ए०) नपुंसकात् स्यमो० नाम्नोनो० पुंलिङ्गे तु ब्रह्मा स्वयं वृहत्त्वात् अन्येषां वृंहणत्वाद्वा महत्वाद्व्यापकत्वाद्वा ब्रह्म आगमजमनित्यमिति न्यायात् इदित इति न नुम्।

## घृधृपदो मः।

घृ क्षरणे दीप्तौ च। घरतीति वा घ्रियते इति घर्मः। धृ धारणे। धरतीति वा ध्रियतेऽसौ धर्मः। पद गतौ। पद्यते तत् पद्मम्। ऋ स्तु सु हु स्रु क्षि क्षु भा मा या वा

अत्त रै नी श्यैङ् पद एभ्यो मः प्रत्ययो भवति। ऋ गतौ। ऋच्छतीति अर्मः नेत्ररोगः। स्तौतीति स्तोमः। षूङ् प्रसवे। सूतेऽसौ सोमः। ह्मः। जुहोतीति होमः। म्रियते इति मर्मः। क्षि निवासगत्योः। क्षयतीति क्षेमः। टुक्षु शब्दे। क्षौतीति क्षोमः। भातीति भामः। मामः। यातीति यामः। वातीति वामः। अत्त भक्षहसनयोः। अत्मः। रायतीति। रामः नेमः। श्यैङ् दीप्तौ। श्यायति इति श्यामः। पद्मः। भीध्वोर्वा मक्। बिभेत्यस्मादिति भीमः। धूयतेऽसौ धूमः।

धृ धारणे धृ मप्र० गुणः रायपो द्विः जसतु (प्र० ए०) सो० धारणाद्धर्मः।

## ध्वादेरुलिक्।

ध्वादेर्धातोरुलिक् प्रत्ययो भवति। धुनोति वा धूयतेऽसौ धूलिः। अगि लघि रघि गत्यर्थाः। इदितः। अङ्गते सा अङ्गुलिः।

ध्वादेरुलिः (प्र० ए०) ध्वादेर्धातोः उलिप्रत्ययो भवति किच्च। धूञ् कम्पने उलि० सवर्णे० धूलिः धूयते वातादिना इति धूलिः। अगि, अगि, लगि, गत्यर्थाः। अग् उलि० इदित इति नुमागमः मश्चा० स्वर० सो० अङ्गुलिः।

## भविष्यदर्थे णिनिः।

आगमिष्यतीति आगामी। भविष्यतीति भावी। शसादेः करणे त्रक्। शसादेर्धातोः करणेऽर्थे त्रक् प्रत्ययो भवति। सर्वधातुभ्यस्त्रमनौ। शस् हिंसायाम्। शंसति वा शस्यते अनेनेति शस्त्रम्। शास् अनुशिष्टौ। शिष्यते अनेनेति शास्त्रम्। असु क्षेपणे। अस्यते अनेनेति अस्त्रम्। पा पाने। पीयते अनेनेति पात्रम्। नीयते अनेनेति नेत्रम्। दा लवने। दीयते अनेनेति दात्रम्। युरुहागिभ्यो निः। एभ्यो धातुभ्यो

निः प्रत्ययो भवति। यु मिश्रणे। यौति इति योनिः। वहतीति वह्निः। अङ्गतेऽसौ अग्निः। इदिचदिशकिरुदिभ्यो रः। एभ्यो रप्रत्ययो भवति। इदि चदि आह्लादने दीप्तौ च। इन्दतेऽसौ इन्द्रः। चन्दतेऽसौ चन्द्रः। शक्नोतीति शक्रः। रोदितीति रुद्रः।

## पुष्पादेरः।

पुष्पादेर्धातो रः प्रत्ययो भवति। पुष्प विकसने। पुष्पति तत् पुष्पम्। फल निष्पत्तौ। फलति तत् फलम्। मूल व्याप्तौ। मूलति तत् मूलम्। रघ सामर्थ्ये। उप्रत्ययः। रघते शास्त्राणां शत्रूणां च अन्तं गच्छति प्राप्नोतीति रघुः।

गम्लृगतौ गम् आङ्पूर्वः भविष्यदर्थे णिन् प्रत्ययः णित्त्वाद्वृद्धिः स्वर० (प्र० ए०) इनांशौसौ इसेपः नाम्नो नो० आगमिष्यतीति आगामी भू णिन् वृद्धिः औआव् भविष्यतीति भावी। ईश् ऐश्वर्ये ईष्टे ऐश्वर्यं करोति इति ईश्वरः ईश् वर प्र० स्वर० (प्र० ए०) सौ० एवं तिष्ठतीति स्थावरः ष्ठा गतिनिवृत्तौ आदेः षः सः। स्था वरप्र० (प्र० ए०) सौ० भास्वरः। इण् णश् जिसरतिभ्यः क्वरप्। पित्त्वात्तुक्। गत्वरः इति निपातः। जयति इत्येवं शीलो जित्वरः। एति इत्येवंशीलो इत्वरः। नश्यतीत्येवंशीलो नश्वरः।

## राजादेः कन्।

राजादेर्धातोः कन् प्रत्ययो भवति। राज् धन्व यु द्यु प्रतिदिव् वृष् तक्ष् दंश् पचि षप् अशूङ् नु मह एते राजादयः। राजृ दीप्तौ। राजतेऽसौ राजा। धन्व गतौ। धन्वतीति धन्वा। यु मिश्रणे। यौतीति युवा। द्यु गतौ। द्यौतीति द्युवा। प्रतिदीव्यतीति प्रतिदिवा। वृषु वृष्टौ। वर्षतीति वृषा। तक्षू तनूकरणे। तक्ष्णोतीति तक्षा। दंशतीति दशा। पचि विस्तरे। पचि संख्याने। इदित्।

जस्शसोर्लुक्। पञ्चतीति पञ्च। षप् सम्बन्धे। षप् गणने। अशूङ् व्याप्तौ। षपेरशेः क्तिति तुक् वक्तव्यः। सपन्ति ते सप्त। अश्नुवते इति अष्ट। णु स्तुतौ। अस्य गुणः। नुवन्ति ते नव। मह पूजायाम्। अस्य घान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे। मह्यते इति मघवा। इति राजादयः। इस्मन्त्रासुकः सर्वधातुभ्यः। सर्वधातुभ्यः इस् मन् त्र असुक् इत्येते प्रत्यया भवन्ति।

राजादेरिति राजृ दीप्तौ इत्यादेर्धातोः अन्प्रत्ययो भवति। राजते राजा राज् अन्प्र० स्वर० नोपधायाः हसेपः नाम्नो० यु मिश्रणे यु अन् युधातोरित्युव० स्वर० यौतीति युवा।

## वचादेरस्।

वचादेर्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्योऽस्प्रत्ययः। उच्यते इति वचः। मह्यते इति महः। पीङ् पाने। पीयते तत् पयः। पिबतेरपि। पिबतेर्धातोरसुन्प्रत्ययो भवति इकारान्तादेशश्च। पीयते इति पयः। तिज् निशाने क्षमायां च। तितिक्षतीति तेजः। तप्यते इति तपः। रञ्ज् रागे। असि नलोपो वाच्यः। रजते तत् रजः। रक्ष हिंसायाम्। रक्षतीति रक्षः। अर्चिरुचिशुचिहुसृपिच्छादिछृदिभ्य इस् प्रत्ययो भवति। अर्चिरुची दीप्तौ। अर्चतीति अर्चिः। गुणः। रोचिः शोचिः। हूयते इति हविः। सर्पिः। छादेरिस्मन् त्रवज्क्विप्सु ह्रस्वो वाच्यः। छद संवरणे। चुरादिः। छादयतीति छदिः। उछृदिर् दीप्तिदेवनयोः। छृणत्तीति छर्दिः। सर्वधातुभ्यस्त्रमनौ। तनु विस्तारे। तनोति तत् तन्त्रम्। मन ज्ञाने। मन्यते इति मन्त्रः। यम उपरमे। यच्छतीति यन्त्रः। छदिं संवरणे। अत्रन्तः। छादयतीति

छत्वम्। क्रियते तत्कर्म। वृञ् आच्छादने। वृणोतीति वर्म। मर्म दाम धर्म। छादयतीति छद्म। धनार्त्ति चक्षिङ्-पृवपितपिजनियजिभ्य उस् प्रत्ययो भवति। धन शब्दे। धनतीति धनुः। ऋ गतौ। गुणः अरुः। चक्षिङ् व्यक्तायां वाचि। चष्टे इति चक्षुः। पिपर्त्तीति परुः। वपतीति वपुः। तपतीति तपुः। जायते इति जनुः। यजतीति यजुः। अव-तृस्तृञ्तन्त्रिकण्ठिभ्य ईः। अवतीति अवीः। तरतीति तरीः। स्तृञ् आच्छादने। स्तृणोतीति स्तरीः। तन्त्रि धारणे। कण्ठ अवधारणे। तन्त्रयति वा तन्त्रयते सा तन्त्रीः। कण्ठ-यतीति कण्ठीः।

वचादेरस् वचादेर्धातोः असप्रत्ययो भवति। वच् अस् प्र०। (प्र० ए०) नपुंसकात् स्वमो० लो० वचः वचसी वचांसि। एवं मह दीप्तौ महः। उच्यते इति वचः। मह्यते इति महः।

## सौकर्य्ये केलिमः।

सुखेन भिद्यते तत् भिदेलिमं, वा भेत्तुं सुकरं भिदेलिमं किं काष्ठम्। सुखेन पच्यन्ते इति पचेलिमाः आढक्यः, वा पक्तुं सुकराः पचेलिमाः किं तन्दुलाः।

सौकर्य्ये केलिमः। सुखेन क्रियते इति सुकरं तस्य भावः सौकर्य्यं तस्मिन्नर्थे केलिमप्रत्ययो भवति। ककारो गुणनिषेधार्थः। एलिम इति। भिदिर् विदारणे भिद सुखेन भिद्यते इति विग्रहे एलिमप्र० स्वर० (प्र० ए०) अतो अम् भिदेलिमं काष्ठम्। पच् एलिमप्र० स्वर० आवतः स्त्रियां (प्र० द्वि०) अस् सवर्णे० लो० सुखेन पच्यन्ते इति पचेलिमा आढक्यः। आढकी धान्यविशेषः।

## गमेर्डोः।

गमेर्धातोर्डोः प्रत्ययो भवति। गच्छतीति गौः।

गमेर्डौः। गम् डौप्र० टिलोपः स्वर० ( प्र० ए० ) गौः स्वर० सौ० । गच्छतीति गौः।

## ग्लानुदिभ्यां डौः ।

ग्लायतीति ग्लौः। नुदतीति नौः। नुद प्रेरणे।

नुदिग्लैभ्याड्डौः। नुदति नुद्यते वा नौः ग्लायतीति ग्लौः चन्द्रः।

## कादीनामिः ।

स्पष्टम्। कविः। रविः। पविः। इत्यादि। मनेरत उच्च। मनधातोरकारस्योकारो भवति। मुनिः। पुः कुषन्। पृधातोः कुषन्नादेशो भवति। पोरुर्। पुरुषः। मा प्रभृतिभ्यः सः। मासः। दासः। मादिभ्यो यः। माया। जाया। दधातेर्नुट्। धान्यम्। पतिचडिभ्यामालञ्। पातालम्। चण्डालः।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्य्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥
उणादयोऽपरिमिता येषु संख्या न गम्यते।
प्रयोगमनुसृत्याद्वा प्रयोक्तव्यास्ततस्ततः ॥ २ ॥

इति कृदन्ते उणादिप्रक्रिया।

कादीनामिः। कुशब्दे इप्र० गुणः कौतीति कविः रौतीति रविः पुनातीति पविः हरतीति हरिः मनेरुच्च मनज्ञाने इत्यस्य इः प्रत्ययः अकारस्य वोकारः मनुते तत्त्वमिति मुनिः मुहेः षः मुरादेशश्च मुह्यतीति मूर्षः पुः कुषन् पृ पालनपूरणयोः इत्यस्य कुषन्प्रत्ययः एवं पोरुर् पिपर्त्ति पूर्य्यते वा पुरुषः माप्रभृतिभ्यः सः मीयते इति मासः ददात्यात्मानं दासः मान्तेभ्यो यः मातीति माया जन्यतेऽपत्यमस्यामिति जाया जनेर्जा आदेशः दधातेर्यो नुट् दधाति सत्वानिति धान्यम्। पतिचडिभ्यामालञ्। वृद्धिः। पतन्त्यस्मिन्निति पातालम्। चडिकोपे चण्डनशीलश्चाण्डालः।० पर्जादिभ्य ऊः। पर्जूः वहेर्हश्च वहिर्धाती-

ईकारस्य धकारादेशो भवति। वहति गृहभारं वधूः। अविहृस्तृतन्त्रिभ्य ईः। अवीतरी तन्त्री ऊति यूतिसातिहेतिकीर्त्तयश्च निपात्याः। अवनम् ऊतिः यु मिश्रणे यूतिः कीर्त्तनं कीर्त्तिः क्तसंशब्दे: हन्यते अनयेति हेतिः षोन्तकर्मणि षिञ्-बन्धने वा सातिः। शृवन्धोरारुः हिंसायां हिंसनशीलः शरारुः वन्दनशीलो वन्दारुः वद्द आरु प्र० इदित इति नुम् स्वर०। भृजादिभ्यो यण्। डुभृञ् यण्प्र० वृद्धिः रायपो हिः जलतुं० भ्रियते इति भार्य्या एवम् ऋगतौ आर्य्या स्त्रीत्वाद्दाप्। यु वह्न अगिभ्यो निः। योनिः वह्निः अग्निः। इदि, चदि, शकि रुदिभ्यो रः। इन्द्रः चन्द्रः शक्रः रुद्रः इत्यादि। उपसंहारमाह। उणादयः प्रत्यया अपरिमिताः संख्यारहिता इत्यर्थः। यो यत्र प्रयोगः सम्भवति तत्र तं प्रयोगं श्रित्याश्रित्य प्रयोगानुसारेण प्रयोक्तव्याः इत्यर्थः। इति उणादयः।

## अथ भावाधिकारप्रक्रिया।

अथ भावाधिकारप्रक्रिया कथ्यते।

### तुम् तदर्थायां भविष्यति।

**धातोर्भविष्यति काले तुम् प्रत्ययो भवति तदर्थायां क्रियायां प्रयुज्यमानायाम्। भुजपालनाभ्यवहारयोः। भोक्ष्यतीति भोक्तुं व्रजति। पठिष्यतीति पठितुम् ईष्टे। स्नोष्यतीति स्नोतुम् ईहते। स्नातुम् ईहते। तुमर्थे वुण् वक्तव्यः। द्रक्ष्यतीति द्रष्टुम्। कृष्णं द्रष्टुं व्रजति। कृष्णदर्शको व्रजति।**

तुम् तदर्थायां भविष्यति। तुम् (प्र० ए०) हसेपः स एवार्थो यस्यां सा तदर्था तस्यां (प्र० ए०) आमृङे ङितां यट् स्वर० भविष्यत् (स० ए०) स्वर० धातोर्भविष्यति काले तुम् प्रत्ययो भवति यस्मार्थे तुम्प्रत्ययो भवति स एव धात्वर्थ एवार्थः प्रयोजनं यस्याः सा तस्यां तत्सम्बन्धार्थवाचिकाया तत्प्रयोजनायां क्रियायां सत्याम्। भुज् पालनाभ्यवहारयोः भुज् तुम् प्र० चोः कुः उपधाया लघोर्गुणः खसेचपाः स्वर० तुम्प्रत्ययान्तम् अव्ययं (प्र० ए०) अव्य० भोक्तुं व्रजति अत्र भुज्धात्वर्थप्रयोजने व्रजतीति क्रिया प्रयुज्यते। पठ तुम् क्त इतीडागमः स्वर० पठितुम् इष्टे समर्थो भवति ष्णा शौचे आदेः ष्णः स्नः स्ना तुम् प्र० स्नातुम् ईहते वाञ्छति।

## कालसमयवेलासु तुम् ।

भोक्तुं कालः । अध्येष्यतीति अध्येतुं समयः । स्रोष्यतीति स्रोतुं वेला ।

कालवेलासमयेषु च तुम् वक्तव्यः । भोक्तुं कालः । भोक्तुं वेला । भोक्तुं समयः ।

## घञ् भावे ।

धातोर्भावे घञ् प्रत्ययो भवति । चजोः कगौ घिति । पच्यते तत् पचनं पाकः । त्यज् वयोहानौ । त्यज्यते तत् त्यजनं त्यागः । भज्यते तत् भजनं भागः । इज्यते तत् यजनं यागः । विभज्यते तत् विभजनं विभागः । युजिर् योगे । अनुप्रयुज्यतेऽसौ अनुप्रयोगः । अनूच्यते तत् अनुवचनम् अनुवाकः । इण् गतौ । नन्दादित्वाद्युः । ततोऽनादेशः । गुणः वृद्धिः । अयनम् आयः । भूयते तत् भवनं भावः । आतो युक् । दीयते तत् दानं दायः । पानं पायः । भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः । रज्यते अनेनेति रञ्जनं वा रागः । भावे किम् । रज्यतेऽस्मिन्निति रङ्गः । रभ राभस्ये । रभलभोः स्वरेणाद्यपौ विना नुम् वाच्यः । आरम्भः । अञ्चु गतिपूजनयोः । परितोऽञ्चतीति प्राङ्कः ।

घञ् भावे । घञ् ( प्र० ए० ) इसेपः । भावे ( स० ए० ) अइए धातोर्भावे कर्मरहिते अर्थे केवलधात्वर्थे एव घञ् प्रत्ययो भवति । जकारो वृद्ध्यर्थः । घकारो घित्कार्यार्थः । डुपचष् पाके पच् घञ् प्र० अत उपधायाः पाच् अ इति स्थिते । चश्च जश्च चजौ तयोः ( ष० द्वि० ) स्वर० लो० कश्च गश्च कगौ ( प्र० द्वि० ) औऔऔ घ इत् यस्य सघित् तस्मिन् घिति ( स० ए० ) स्वर० घिति परे चकारस्य ककारः जकारस्य गकारः ;अनेन चस्य कः स्वर० पचनं पाकः त्यज् हानौ त्यज् घञ् प्र० आवृद्धिः चजोरिति जस्य गः स्वर० त्यजनं त्यागः । भज सेवायां विपूर्वः चजोः घञ् कगौ वृद्धिः स्वर० विभजनं विभागः ।

इण् गतौ इञ् अ वृद्धिः इ इत्यस्य ऐ। ऐ आय् स्वर० (प्र० ए०) सो० अयनम् आयः। अय गतौ अयनम् आयः। ये गत्यर्थास्ते प्राप्त्यर्थाः। एवं भवनं भावः डुदाञ् दा घञ् आतो युक् स्वर० (प्र० ए०) सो० दानं दायः पानं पायः एवं स्तृविस्तारे विस्तरणं विस्तारः।

## संज्ञायामकर्त्तरि च।

धातोः कर्त्तृवर्जिते कारके भावे कर्मणि च घञ् प्रत्ययो भवति संज्ञायां विषये। कार्य्यं कार्य्यं प्रति आक्रियते इति प्रत्याहारः। दीयते अस्मिन् इति दायः। दीयतेऽसौ दायः। पीयते अस्मिन् इति पायः। विक्रियते अनेनेति विकारः। मृजूष् शुद्धौ। अपामृज्यते अनेनेति अपामार्गः। लिख् आलेखने। लिख्यतेऽस्मिन्निति लेखः। आचर्य्यतेऽस्मिन्निति आचारः। उपाधीयतेऽस्मादिति। उपाध्यायः।

संज्ञायामकर्त्तरि। संज्ञायाम् (स० ए०) ङेः ङितां यट् सवर्णे० अकर्त्त० न कर्त्ता अकर्त्ता तस्मिन् (स० ए०) ङौ इति अर् स्वर० च (प्र० ए०) अव्य० संज्ञायां विषये कस्यापि नाम्नि वाच्ये सति अकर्त्तरि कर्त्तृवर्जिते कारके भावेऽर्थे कर्मार्थे च घञ् प्रत्ययो भवति। अनुबन्धादिः प्राग्वत् उदा० ह्र प्रत्याङ्पूर्वः प्रतिकार्य्यम् आक्रियते आनीयते इति प्रत्याहारः घञ् प्र० वृद्धिः स्वर० (प्र० ए०) सो० एवं विक्रियते विकारः। दीयते इति दायः। वसते अस्मिन्निति वासः।

## स्वरादः।

इ उ ऋवर्णान्तेभ्यो धातुभ्यो अः प्रत्ययो भवति भावादौ। घञोऽपवादः। सञ्चीयतेऽसौ सञ्चयः। चयनं चयः। जीयते इति जयः। नीयते तत् नयनं नयः। उन्नीयते इति उन्नयः। नूयते तत् नवनं नवः। लवणं लवः। स्तूयते तत् स्तवनं स्तवः। कॄ विक्षेपे। कीर्य्यते इति करः गरः। नॄ विक्षेपे। नीर्यते विक्षिप्यते कामादिभिरिति नरः। षिञ् बन्धने। विशेषेण सीयते बध्यते अनेनेति विषयः।

स्वरा० ( पं० ए० ) ङसिरत् सवर्णे० अ ( प्र० ए० ) सो० यथा अवे-जवा: स्वर० वृत्ति: सुगमा। चिञ् चयने चि अप्रत्यय: गुण: एअय् स्वर० ( प्र० ए० ) सो० चयनं चय: अत्र भावे सम्पूर्व: सञ्चीयत इति सञ्चय: अत्र कर्मणि ष्टुञ् स्तुतौ आदे: ष: स: स्तु स्वरादे: इति अप्र० अ गुण: ओ अव् स्वर० ( प्र० ए० ) सो० स्तवनं स्त: व:। एवं भवनं भव:, अनुभवनमनुभव:, णु स्तुतौ नवनं नव:, णीञ् प्रापणे आदे: ण: न: नी उत्पूर्व: उत्प्राबल्येन ऊर्द्ध्वं वा नयनं प्रापणम् उन्नय:, अप्र० गुण: स्वर० ( प्र० ए० ) सो० नॄ विक्षेपे नृ्यियते विक्षिप्यते प्रेर्य्यते कर्मादिभिरथ वा कामादिभिरिति नर:। स्वरादे: अप्र० गुण: स्वर० सो०।

## मदाम:।

मदादीनाम् अ: प्रत्ययो भवति भावादौ कर्त्तृवर्जिते। मदी हर्षे। मद्यते तत् मदनं मद:। प्रमद्यते अनेनेति प्रमद:। प्रमद्यते पुरुषोऽनया सा प्रमदा। पण्यते तत् पणनं पण:। शमु दमु उपशमे। शम्यतेऽसौ शम:। दमनं दम:। श्रम खेदे। श्रम्यते इति श्रम:। भ्रम:। यमु उपरमे। यम्यते इति यम:। दीव्यति विभ्रमनेनेति देव:। जङ्गम्यतेऽसौ जङ्गम:। हिंसि हिंसायाम्।

मदाम:। मद ( ष० ब० ) स्वर० मोनु० मदादीनां धातूनाम् अप्रत्ययो भवति भावे कर्त्तरि च। मदी हर्षे मद अप्र० स्वर० ( प्र० ए० ) सो० मदनं मद: अत्र भावे एवं प्रमद्यते प्रकर्षेण हृष्ट: क्रियते पुरुषोऽनयेति प्रमदा स्त्रीला-टाप्। अत्र कर्मणि पण्धातु: व्यवहारे स्तुतौ च पण् अप्र० स्वर० पण:। शम् दम् उपशमे शम: दम:। यम् उपरमे यम: विस्तर:। दीव्यते विभ्रमनेनेति देव: षिञ् बन्धने आदे:ष:स:। सि विपूर्व: विशेषेण सिनोति बध्नाति पुरुष ईश्वरी वा अनेनेति विषय:। अप्र० गुण: स्वर० प्रादेश तथा तौ सुनसां ( प्र० ए० ) सो०।

## मूर्त्तौ घन:।

मूर्त्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्तेर: प्रत्ययो

भवति भावादौ हन्तेर्घनादेशश्च। दधिकाठिन्यं हन्यते इति दधिघनः। परिच्छिन्नं सैन्धवं हन्यते इति सैन्धवघनः।

मूर्त्तौ घनः। मूर्त्ति (स० ए०) ङेरौ ङित् टिलोपः स्वर० घनः (प्र० ए०) सौ० मूर्त्तौ कोऽर्थः काठिन्येऽर्थे पुनः परिच्छेदे परिमाणेऽर्थे वा ज्ञानविशेषे वा अभिधेये वाच्ये सति हन्तेर्धातोः अप्रत्ययो भवति हन्तेश्च घनादेशः। हन् २ एकत्र दधिपूर्वः द्वितीये सैन्धवपूर्वः अप्र० घनादेशः आदि० स्वर० (प्र० ए०) सौ० कठिनं दधि दधिघनः परिच्छिन्नम् एतावत् स्तोकं वा सैन्धवं सैन्धवघनः।

## सिंहे वर्णविपर्य्ययश्च।

चकारादः प्रत्ययः। हिनस्तीति सिंहः। हनो बधादेशश्चाप्रत्ययः। हन्यते इति बधः।

हिंसतेर्धातोः अप्रत्ययो वर्णविपर्य्ययश्च भवति सिंहे वर्णविपर्य्ययः इत्युक्तत्वात्। हिंस हिंसायां हिंस् हिनस्तीति हिंसः अत्र वर्णविपर्य्ययः हस्य स्थाने सः सस्य स्थाने हः इति स्वर० (प्र० ए०) सौ०। सिंहः।

## ट्वितोऽथुः।

ट्वितो धातोरथुः प्रत्ययो भवति भावादौ। टुवेपृ कम्पने। वेप्यते अनेनेति वेपथुः। टुणदि समृद्धौ। नन्द्यते अनेनेति नन्दथुः। टुवप् बीजतन्तुसन्ताने। उप्यते इति वपथुः। टुक्षिपृ क्षेपणे। क्षेप्यते अनेनेति क्षेपथुः। टु ओश्वोगतिवृद्ध्योः। श्वयथुः। टुक्षु शब्दे। क्षूयते इति क्षवथुः। टुवम् उद्गिरणे। वमथुः।

ट्वितोऽथुः। टुइत् यस्य स ट्वित् तस्मात् (पं० ए०) स्वर० सौ० अथु० (प्र० ए०) सौ० अतोऽथुः उओ एदी तोतः टु इत् यस्य तस्य धातोः अथुप्रत्ययो भवति भावे। टुवेपृकम्पने वेप् अथुप्र० स्वर० (प्र० ए०) सौ० वेपथुः। टुक्षिपृ क्षेपणे प्रेरणे। क्षेपथुः। टुणदि समृद्धौ नन्दथुः। टुदु उपतापे दवथुः टुक्षु शब्दे क्षवथुः। टुओश्वि गतिवृद्धौ श्वयथुः। टुवम् उद्गिरणे वमथुः।

## ड्वितस्त्रिमक् तत्कृते।

ड्वितो धातोस्त्रिमक् प्रत्ययो भवति। तेन धात्वर्थेन कृतेऽर्थे वाच्ये सति। क्रियया निर्वृत्तः कृत्रिमः घटः। सम्भारेण सम्भृतं वा निर्वृत्तं सम्भृत्रिमं युद्धम्। पाकेन निर्वृत्तं पक्त्रिमं फलम्। याचनेन निर्वृत्तं याचित्रिमं किं विप्रधनम्।

ड्वितः त्रिमक् तत्कृते। ड्वित् ( पं० ए० ) स्वर० सो० त्रिमक् ( प्र० ए० ) हसेपः तत्कृत ( स० ए० ) अइए डु इत् अनुबन्धो यस्य स ड्वित् तस्माद्धातोः त्रिमक् प्रत्ययो भवति। तेन धात्वर्थेन साधनभूतेन कृते निःपादिते पदार्थ वस्तुनि अर्थे वाच्ये सति। कृ क्रियया करणेन निर्वृत्तो निष्पन्नः कृत्रिमोऽस्वाभाविको घटः। अत्र कृधातोरर्थः करणं तेन कृतो निष्पन्नो यो घटरूपो अर्थः पदार्थो अस्मिन् वाच्ये त्रिमक् प्र० ककारो गुणनिषेधार्थः ( प्र० ए० ) सो०। एवं डु भृञ् संपूर्वः त्रिमक् प्र० ( प्र० ए० ) अतो अम् सम्भारेण मनुष्यसमूहेन निर्वृत्तं सम्भृत्रिमं युद्धम्। डु पचष् पाके पच् त्रिमक् प्र० चोः कुः स्वर० (प्र० ए०) अतो अम् पाकेन निर्वृत्तं निष्पन्नं यत्कृत्रिमं फलम्। एवं पक्त्रिमः ओदनः।

## नट्कौ।

धातोर्नट् कौ इत्येतौ प्रत्ययौ भवतः भावादौ। यज् याच् यत् विच्छ प्रच्छ स्वप् एभ्यो नट्प्रत्ययो भवति। स्तोः श्चुभिः श्चुः। असम्प्रसारणम्। इज्यते अनेनेति यज्ञः। याच्यते सा याच्या। यती प्रयत्ने। यत्यते तत् यतनं यत्नः।

नट्कौ। नट् च किश्च नट्कौ ( प्र० द्वि० ) औयू सवर्णे०। धातोर्नट् कि इत्येतौ प्रत्ययौ भवतः भावादौ। स्वपरचयतप्रच्छिविच्छियाचयज एभ्यो नट्। यती धातुः प्रयत्ने यत् नट् प्र० स्वर० ( प्र० ए० ) सो० यतनं यत्नः प्रच्छ ज्ञीप्सायां प्रछ् नट् प्र०।

## छः शे।

छकारस्य शकारादेशो भवति न प्रत्यये परे भावादौ।

शकारादेशः सम्प्रसारणबाधार्थः। विच्छि गतौ। विच्छ्यते इति विश्नः। प्रच्छ ज्ञीप्सायाम्। प्रच्छ्यतेऽसौ प्रश्नः। रक्ष्यतेऽसौ रक्ष्णः। सुप्यते इति स्वप्नः।

## उपसर्गकर्माधारेषु दाधोः किः।

उपसर्गे कर्मण्युपपदे आधारे च दाधोः किः प्रत्ययो भवति। अन्तर्धीयते इति अन्तर्धिः। आधिः आदिः विधिः॥ आधीयते तत् आधानम् आधिः। आदीयते तत् आदानम् आदिः। आतोऽनपि इत्याकारलोपः। विधीयते तत् विधानं विधिः। सन्धीयते तत् सन्धानं सन्धिः। उदकं धीयतेऽस्मिन्निति उदधिः। ऊदकस्य। उदकशब्दस्य उदादेशो भवति अधिकरणे। पयोधिः। अम्भो निधीयते यत्र स अम्भोनिधिः।

प्रच्छः शे। प्रछ्धातोः ने परे छकारस्य शकारो भवति सम्प्रसारणाभावश्च स्वर० ( प्र० ए० ) सो० पृछनं प्रश्नः विछश्च विछ गतौ विश्नः याचनं याच्ञा यज्देव० यजनं यज्ञः नट् प्र० सोसुभिस्सु: जभोर्ज्ञः (प्र० ए०) सो० स्वपनं स्वप्नः टकार ईबर्थस्तेन द्रवति द्रोणी राज्ञा धीयते राजधानी डुधाञ् धारणे विपूर्वः किप्र० ककारः कित्कार्य्यार्थः इ आतो नपीत्याकारलोपः स्वर० ( प्र० ए० ) सो० विधिः विधानं विधिः। एवं निधिः आधिः सन्धिः। अम्भो निधीयते यत्र स अम्भोनिधिः। आदीयते इति आदिः, ग्रथि ग्रन्थने ग्रथ् कि प्र० इ इदितः नश्चा० स्वर० ( प्र० ए० ) सो० ग्रन्थिः, विधिः, निधिः, सन्धिः, आधिः। समाधिः, अम्भोनिधिः, एते सर्वेऽपि किप्रत्ययान्ताः, पुंलिङ्गे हरिशब्दवत् साध्याः।

## भावे युट्।

धातोर्भावे युट् प्रत्ययो भवति। युवोरनाकौ। ज्ञायते तत् ज्ञानम्। क्रियते तत् करणम्। दीव्यते तत् देवनम्। दीयते तत् दानम्। भूष अलङ्कारे। भूष्यते तत् भूषणम्।

क्रियते तत् हरणम्। ह्रयते तत् हवनम्। उह्यते तत् वहनम्। भाष व्यक्तायां वाचि। भाष्यते तद्भाषणम्। दुष वैचित्त्ये। दूष्यते तत् दूषणम्। गीयते तत् गानम्। पीयते तत् पानम्। मीयते तत् मानम्।

युट्। युट् (प्र० ए०) इत्येषः वृत्तिः कण्ठ्या युट्प्रत्ययान्ता नपुंसकलिङ्गे भवन्ति। ल युट्प्र० यु० युवोरनाकौ गुणः स्वर षु्र्नो० क्रियते इति करणं ह्र दानादनयोः ह्रयते इति हवनं दुष वैकृत्ये दूष्यते इति दूषणं दुषस्य अन्तस्य कृति च। क्वचिदिति दीर्घः। डुदाञ् दाने। एवं भाषणं उद० इति उत् उपसर्गात् पूर्वात् स्थादेर्धातोर्युट् प्रत्ययो भवति सलोपश्च भवति। ष्ठा गति-निवृत्तौ। आदेः ष्णः स्नः। स्था उत्पूर्वः। युप्र० युवो०।

## उदः स्थास्तम्भोः सलोपश्च।

उत् उपसर्गात्परयोः स्थास्तम्भयोः सकारस्य लोपो भवति। उत्थीयते तत् उत्थानम्। स्तम्भ रोधने। उत्त-भ्यते तत् उत्तम्भनम्।

उदःस्था० इति सकारलोपः। उत्थानम्। एवं स्तम्भ्स्तम्भे निरोधे ष्टम्भ् अवष्टम्भे। उत्तम्भनं उत्थितिः।

## साधनाधारयोर्युट्।

साधने आधारे चार्थे युट् प्रत्ययो भवति। पच्यते अने-नेति पचनः अग्निः। पच्यतेऽस्यां स्थाल्यां सा पचनी स्थाली।

साधनाधारयोर्युट्। साधनं च आधारश्च साधनाधारौ तयोः (स० द्वि०) ओसि एत्वय् स्वर० सो० साध्यं येन कृत्वा तत् साधनकरणं यत्र आधाय साध्यते स आधारः तयोः अर्थे युट् प्र० पच्यु युवोरनाकौ स्वर० (प्र० ए०) स्लो० पच्यते अन्नमनेनेति पचनोऽग्निः अत्र साधने युट् स्थाली। स्थाल्युखापि चरुं कुण्डं इत्यभिधानचिन्तामणौ। टित्वाद्दीप्। अत्राधारे युट्। एवमन्येप्यूह्याः।

## ईषद्दुःसुषु खल्।

ईषदादिषु प्रयुज्यमानेषु खल् यू इत्येतौ प्रत्ययौ भवतः भावादौ। लकारः प्रत्ययभेदज्ञापनार्थः। खकारो गुणविधानार्थः, मुमागमार्थश्च। ईषत् अकृच्छ्रार्थौ। दुः कृच्छ्रार्थः। ईषदनायासेन भूयते इति ईषद्भवः। दुर्भवः सुभवः। ईषदनायासेन क्रियते इति ईषत्करः प्रपञ्चो हरिणा। दुःखेन क्रियते इति दुष्करः। सुखेन क्रियतेऽसौ सुकरः। ईषदाढ्यः क्रियते अनेनेति ईषदाढ्यङ्करः। दुराढ्यङ्करः। आढ्यङ्करस्त्वेतो भवता। ईषत् पीयते असौ ईषत्पानः सोमो भवता। दुःपानः सुपानः। युध सम्प्रहारे। दुःखेन योधयितुं शक्यः दुर्योधनः। सुखेन योधयितुं शक्यः सुयोधनः। ईषत् शासनः। दुःखेन शासयितुं शक्यः दुःशासनः। इति कृदन्ते भावाधिकारप्रक्रिया।

ईषद्दु० ईषच्च दुश्च सुश्च ईषद्दुःसवस्तेषु (स० व०) क्रिया० खल् च युश्च खल्यू (प्र० द्वि०) भौयू सवर्णे० ईषदादिषु ईषत्दुःसु एतेषु त्रिषु पूर्वपदेषु सत्सु धातोः खल् यू एतौ प्रत्ययौ भवतः। खकार ईषदायां भवः इत्यादौ खिति पदस्येति मुमागमार्थः। लकारो इखखीति खप्रत्ययात् भेदज्ञापनार्थः। भू ईषत्दुःसु पूर्वाः खल् प्र० अगुणः औअव् खर० (प्र० ए०) स्तो० ईषद्भवतीति ईषद्भवः एवं दुःखेन भवतीति दुर्भवः सुखेन भवतीति सुभवः एवं करोति ईषत्क्रियते इति ईषत्करः, दुःकरः, सुकरः, एवं दुर्जयः, सुजयः, दुर्लभः सुलभः। युध् धातुः सम्प्रहारे। संग्रामे युध् दुः पूर्वः। युप्र० युवो० इति अनादेशः उपधाया लघोर्गुणः खर० (प्र० ए०) स्तो० दुर्योधनः दुःखेन युध्यते इति दुर्योधनः। एवं सुयोधनः। इति कृदन्ते भावप्रक्रिया।

## अथ कृत्यप्रक्रिया।

अथ कृत्यप्रक्रिया कथ्यते।

## तव्यादीनां कृत्यसंज्ञा पाणिनीयानाम्।

कृत्यादिर्भावकर्मणोरेव। तव्यानीयौ। धातोस्तव्यानीयौ

प्रत्ययौ भवतः भावादौ। एध वृद्धौ। एध्यते वा एधितु-मर्हमेधितव्यम् एधनीयं धनं त्वया। भावस्यैकत्वादेकवचनं नपुंसकत्वं च। भूयते वा भवितुमर्हं भवितव्यं भवनीयम्। क्रियते वा कर्त्तुमर्हं कर्त्तव्यं करणीयम्। आस्यते वा आसितुमर्हमासितव्यम् आसनीयम्। कर्त्तव्यः करणीयो वा धर्मस्त्वया। या प्रापणे। प्रयातुमर्हं प्रयातव्यं प्रयाणीयम्। ईटो ग्रहाम्। गृह्यते तत् ग्रहीतव्यं ग्रहणीयम्। वृङ् सम्भक्तौ। व्रियते वा वरितुं योग्यं वरितव्यं वरीतव्यं वरणीयम्। वृञ् वरणे। व्रियते तत् वरितव्यं वरीतव्यं वरणीयम्।

तव्यश्च अनीयश्च तव्यानीयौ (प्र० द्वि०) ओऔ औ धातोस्तव्यानीयौ प्रत्ययौ भवतः अकर्त्तरि कर्मादिकारके भावे च भू तव्य प्र० क्षत इतीडागमः गुणः स्वर० ( प्र० ए० अतो अम् भवनं भवितव्यं अत्र भावे तव्यप्र० आस् उपवेशने आनी-यप्र० स्वर० ( प्र० ए० ) अतो अम् क्ष २ एकत्र तव्यः एकत्र आनीयः एक-स्वरान्तत्वान्नेट् गुणः स्वर० कर्त्तव्यं करणीयम्। अत्र कर्मणि क्रियते इति कर्त्तव्यं करणीयम्। ग्रह तव्य० क्षत इतीडागमः गृहीतव्यमिति स्थिते। सूत्रम् ई ( प्र० ए० साङ्केति० इट् ( ष० ए० ) स्वर० स्लो० ग्रह ( ष० ब० ) स्वर० मीनु० ग्रहादीनां ग्रह वृङ् वृञ् ऋकारान्ता इत्यादीनामिटः ईकारो भवति नतु णादौ तेन जग्रहिर्ष्वित्यादौ न। तथा आशीर्लिङ् परस्मैपदे सौ च परे च न अनेन इकारस्य ईकारः ग्रहीतव्यं वृञ् धातुः सम्भक्तौ संसेवायां तव्य प्र० क्षत इतीडा-गमः गुणः स्वर० ( प्र० ए० ) अतो अम् ईटो ग्रहाम्। वरीतव्यम्।

## स्वराद्यः।

स्वरान्ताद्धातोर्यः प्रत्ययो भवति भावादौ। चीयते वा चेतुमर्हं चेयं नेयं जेयम्। मीयते तत् मेयम्। असरूपो-ऽपवादः प्रत्ययोऽस्त्रियां वा बाधकः सरूपस्तु नित्यम्। चीयते वा चेतुमर्हं चेतव्यं चयनीयम्। चिकीर्ष्यते वा

चिकीर्षितुमर्हं चिकीर्ष्यम्। दातुमिच्छतीति दित्सति वा दित्स्यते इति दित्स्यम्।

स्वर० ( पं ए० ) ङसिरत् सवर्णे० य ( प्र० ए० ) सौ० चपा० स्वर० सिद्धं० उदा० चिञ् चि स्वराद्यः य प्र० गुणः ( प्र० ए० ) अतो अम् मोनु० चेयम्। एवं णीञ् प्रापणे आदेः ष्णः स्नः नीय प्र० गुणः नेयम्। चय्य जय्यौ एतौ द्वौ शक्येऽर्थे निपात्येते चेतुं शक्यं चय्यं एवं जेतुं शक्यं जय्यं एतौ निपात्यौ केचित्तु क्रय्य जय्यौ निपात्यौ तन्मते क्रेतुं शक्यं क्रय्यं पक्षे चेतुं योग्यं चेयं जेतुं योग्यं जेयं क्रेतुं योग्यं क्रेयं सर्वत्र य प्र०।

## पुशकात्।

अकारोपधात् पवर्गान्तात् शकादेश्च यः प्रत्ययो भवति भावादौ। शप् उपालम्भे। आक्रोशे च। शप्यते इति शप्यम्। जप्तुं योग्यं जप्यम्। सरूपत्वात् पक्षे न ध्यण्। शक्यम्। शक् सह् गद् मद् चर् यम् तक् शस् चत् यत् पत् जन् हन् शल् रुच् एते शकादयः। षह मर्षणे। सोढुं शक्यं सह्यम्। सह्यते वा सोढुमर्हं सह्यम्। गद्यते वा गदितुमर्हं गद्यम्। मद्यते वा मदितुमर्हं मद्यम्। चरितुमर्हं चर्य्यम्। यम्यम्। तक् हसने। तक्यते वा तकितुमर्हं तक्यम्। शसु हिंसायाम्। शसितुमर्हं शस्यम्। चते माने। चते कान्तौ। चत्यते इति चत्यं यत्यं पत्यं जन्यम्। हनो वधादेशो ये। हन्यते वा हन्तुमर्हं वध्यम्। शल् शोभायाम्। शल्यम्। रोचितुं शक्यं रुच्यम्। डुलभष् प्राप्तौ। लब्धुं योग्यं लभ्यम्। यभ् मैथुने। यब्धुं शक्यं यभ्यम्। शक् सामर्थ्ये। शक्लृ शक्तौ। शक्यते तत् शक्यम्।

पुशक ( पं० ए० ) ङसिरत् सवर्णे० पवर्गान्ताः पफबभम एते तदन्तात् शकादेश्च धातोर्यप्रत्ययो भवति भावादौ। यभ् मैथुने यभ् यभ्यत इति यभ्यं

कत्वं पवर्गान्तत्वात् यः ( प्र० ए० ) अतो अम् मीनु० एवं लभ्यं, जप्यं, नम्यं, इत्यादयः। एवं पवर्गान्ताः। शक्लृ शक्तौ शक् यप्रत्ययः शक्यं मह पूजायां मह य० स्वर० ( प्र० ए० ) अतो० मीनु० मह्यम्। एवं षह मर्षणे सह्यम्।

## ईच्चातः।

आकारान्ताद्धातोर्यः प्रत्ययो भवति आकारस्य च ईकारादेशः। दीयते वा दातुमर्हं देयम्। ज्ञातुं योग्यं ज्ञेयम्। गीयते तत् गेयं ग्लेयं पातुमर्हं पेयम्। धीयते तत् धेयम्।

ई। ( प्र० ए० ) साङ्के० च ( प्र० ए० ) अव्य० आत् ( प्र० ए० ) स्वर० सौ० सिद्धम्। वृत्तिः सुगमा। आकारस्य चैकारः डुदाञ् दा ईच्चातः इति यप्र० आकारस्य एकारः गुणः स्वर० ( प्र० ए० ) अतो अम् मीनु० देयं दीयते इति देयम्। एवं गेयं पेयं गै सन्ध्यक्षराणामा० खनेश्च खनेर्धातोः यः प्रत्य० टेश्च ईकारः खन् खनने यप्र० खन् इत्यस्य खि गुणः खेयं ( प्र० ए० ) अतो० मीनु०।

## ऋहसात् घ्यण्।

ऋवर्णान्ताद्धसान्ताच्च धातोर्घ्यण् प्रत्ययो भवति भावादौ। घकारो घित्कार्य्यार्थः। णकारो वृद्ध्यर्थः। क्रियते वा कर्त्तुमर्हं कार्य्यम्। वृञ् वरणे। व्रियते तत् वार्य्यं धार्य्यं चार्य्यम्। हस् हसने। हास्यम्। ह्रियते तत् हार्य्यम्। हनो घत्। हन्यते तत् घात्यम्। चजोः कगौ घिति। पक्तुं योग्यं पाक्यम्। याच्यते तत् याच्यम्। रुच्यते तत् रोच्यम्। वच परिभाषणे। वचेः शब्दसंज्ञायां कुत्वं वाच्यम्। तेन वाक्यम्। अन्यत्र वाच्यम्। यजयाच्वच्रुच्प्रवच्अर्च्त्यज्पूज्गर्ज्भुजां घ्यणि कुत्वाभावः। याज्यं याच्यं वाच्यं रोच्यं प्रवाच्यम् अर्च्यं त्याज्यं पूज्यम्। गर्ज शब्दे। गर्ज्यते तत् गर्ज्यम्। भुज्यते तत् भोज्यम्। बाध हिंसायाम्। बाधितुं योग्यं बाध्यम्। भजितुं योग्यं भाज्यम्।

ऋहलो०। ऋश्च हलश्च ऋहलं ऋहलं अन्ते यस्य स ऋहलान्तः तस्मात् (पं० ए०) ङसिरत् सवर्णे० घ्यण् (प्र० ए०) हलेपः ऋवर्णान्तात् हलान्ताच्च धातोः घ्यण् प्रत्ययः स्यात् भावादौ। घकारो घित्कार्य्यार्थः। ण घ्यण् प्र० यः णित्त्वाद्धातोर्नामिनः इति वृद्धिः। रायपो ङिः जलतु० (प्र० ए०) अतो अम् करणाय अर्हं क्रियते वा यत्तत्कार्य्यं एवं वृञ् वरणे वार्य्यं वच् परिभाषणे वचनाय योग्यम् उच्यते वा यत्तत् वाच्यं बध् बन्धने बध् घ्यण् य० वृद्धिस्वर० बन्धनाय योग्यं बाध्यं हस् हसने घ्यण् प्र० वृद्धिः स्वर० (प्र० ए०) अतो अम् हास्यं, डुपचष् पाके पच् घ्यण् प्र० चजोः कगाविति चस्य कः। वृद्धिः पाक्यं एवं वच् वाक्यं घित्त्वात् ककारोपि भवतीत्यपि शब्दात् कुत्रचित् चजोः कगौ घितीति भवति कुत्रचिन्न भवति कुत्रचिद्विकल्पः तेन वाच्यं वाक्यं भोज्यं भोग्यम् इत्यादौ विकल्पः त्याज्यं, पूज्यं, रुच्यं, अर्च्यं, इत्यादौ न। एवं प्रयोगानुसारेण कुत्वाभावो ज्ञेयः। अमापूर्वस्य वसतेर्घ्यणि वा वृद्धिः वक्तव्या। कर्त्तरि घ्यण् च अमा सह वसतश्चन्द्रार्कौ अस्यामिति अमावास्या अमावस्या इति विकल्पेन वृद्धिः पुनर्विशेषमाह।

## एते भावकार्य्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्याः।

रारोभक्तसे द्रष्टाम्। दर्शनार्हो द्रष्टव्यः। द्रष्टुमर्हः दर्शनीयः दृश्यः। इङ् अध्ययने। स्वाध्यायोऽध्येतव्यः स्वाध्यायो नाम वेदः। श्रु श्रवणे। श्रवणार्हः श्रोतव्यः। श्रोतुं योग्यं श्रवणीयम्। मान पूजायाम्। मानितुं योग्यो मानितव्यः माननीयः। ध्यै चिन्तायाम्। ध्यानार्हो ध्यातव्यः। ध्यातुं योग्यो ध्यानीयः। मन ज्ञाने। मननार्हो मन्तव्यः। मन्तुं योग्यो माननीयः। सप्रत्ययान्तादपि एते प्रत्यया भवन्ति। नितरां ध्यातुमिष्टव्यो निदिध्यासितव्यः। भवितुमिष्टव्यो बुभूषितव्यः बुभूषणीयः।

एते इति। ये एते पूर्वोक्तास्तव्यादयः तव्य, अनीय, य, घ्यण् एते प्रत्यया भावकार्य्ययोर्भावोक्तौ कर्मोक्तौ विहिताः तस्मात्ते अर्हे योग्यत्वार्थे विधौ च

कर्त्तव्यार्थोपदेशे च वक्तव्याः कर्त्तव्या इत्यर्थः। दृशिर् प्रेक्षणे। दृश् दर्शनार्थो द्रष्टव्यः इति तव्यप्र० गुणः रारौऋसे दृशामिति द्र छशषराजादेः षः ष्टुभिः ष्टुः दर्श अनीयप्र० गुणः जश्तुं० स्वर० दर्शनीयः पुनः दृश ऋट ऋसान्तादिति ध्यण् प्र० य स्वर० दृश्यः इङ् अध्ययने इ अधिपूर्वः अध्येति विधेयो अर्थो वाध्येतव्यः तव्य प्र० गुणः इयं स्वरे स्वर० स्वाध्यायोऽध्येतव्यः। एवं श्रु श्रवणे। श्रोतुं योग्यः श्रूयते वा इति श्रोतव्यः। मन् ज्ञाने मन्तव्यः। ध्यै चिन्तायां ध्यै सन्ध्यक्षराणामा ध्यातव्यः। सप्रत्ययान्ता इच्छार्थे सप्रत्ययान्ताद्वा तेरपि तव्यादयः प्रत्यया भवन्ति। ध्यै चिन्तायां सन्ध्यक्षराणामा ध्यानितरां ध्यातुमेष्टव्य इति विग्रहे इच्छार्थे सप्रत्ययः द्विश्च पूर्वस्य ऋसादिशेषः यः से इति पूर्वाकारस्य इकारः झपानां जबचपाः धस्य दः ।ततः सप्रत्ययान्तात्तव्यप्र० क्षत इतीडागमः यतः इत्यकारलोपः निपूर्वः निदिध्यासितव्यः। ज्ञा अवबोधने ज्ञा सप्रत्यय द्वित्वादि प्राग्वत्। विजिज्ञासितव्यः विशेषेण ज्ञातुमेष्टव्यः।

## ओरावश्यके ध्यण्।

**उवर्णान्ताद्धातोरावश्यकेऽर्थे ध्यण् प्रत्ययो भवति। ओदौतोर्यः प्रत्ययः स्वरवत्। धातोरोकारौकारयोर्निमित्तं वा सम्बन्धी यः प्रत्ययः स स्वरवत् स्यात्। समासे अवश्यमादीनामन्तलोपमिच्छन्ति शाब्दिकाः।**

उ ( पं० ए० ) ङसि ङस उसि० आवश्यके ( स० ए० ) अद्रए उवर्णान्ताद्धातोः आवश्यकेऽर्थे निश्चयार्थे ध्यण् प्रत्ययो भवति भावादौ। भू ध्यण् प्रत्ययः य णकारो वृद्ध्यर्थः भो अवश्यं पूर्वः ओदौतौ० ओच औच ओदौत् तस्मात् ओकारौकाराभ्यां परो यः प्रत्ययस्य यकारः स्वरवज्ज्ञेयः स्वरवत्त्वात् औ आव स्वर० अवश्यं भाव्यम्। एवं, लूञ् छेदने अवश्यं लाव्यं मकारलोपार्थमाह समासे सति अवश्यमादीनम् अवश्यम्, तुम् सम्, मांसानां मलोपमिच्छन्ति। म् च अश्च इति समासस्तेन अवश्यमादीनां मकारस्य लोपः। मांसस्याकारस्य लोपः। यद्वा अन्तलोपमिच्छन्तीति पठन्ति। श्लोकश्चात्र।

**लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि।**
**समो वा हिततयोर्मांसस्य पचि युड्घञोः॥ १॥**

**लूञ् छेदने। लूयते वा लवितुं योग्यः लाव्यः। अवश्यं लाव्यो**

अवश्यलाव्यः। भोक्तुं कामो यस्य स भोक्तुकामः। श्रोतुं मनो यस्य स श्रोतुमनाः। सम्यक् प्रकारेण हितं सहितं संहितम्। सन्ततं सततम्। मांसस्य पचनं मांसपचनम्। युड् घञोः पचि परे मांसस्याकारो वा लुम्पेत्। मांसस्य पचनं मांसपचनम्। मांसस्य पाकः मांस्पाकः मांसपाकः।

लुम्पेदिति। कृत्प्रत्यये परे अवश्यंशब्दस्य षष्ठीनिर्द्दिष्टस्येति अन्त्यो मकारो लुम्पेत्। तव्य १ अनीय २ य ३ घ्यण् ४ क्यप् ५। एतेषां पञ्चप्रत्ययानां कृत्यसंज्ञा तथा काममनसोः शब्दयोः परयोः तुम्शब्दस्य प्रत्ययस्य अन्तं मकारं लुम्पेत् तुम् षष्ठ्यन्तमव्ययं हि एतत्। एतयोः परयोः सतोः सम इत्यस्य मकारं वा लुम्पेत् युट्प्रत्ययसहिते घञ्प्रत्ययसहिते च पचिधातौ परे मांसशब्दस्य अन्तं अकारं वा लुम्पेत्। विकल्पेन कृत्यसंज्ञायां सम्मतमाह। तव्यादीनां पाणिनीयानां मते तव्यादीनां कृत्य इति संज्ञा। अवश्यलाव्यमित्यत्र तव्यप्रत्ययपरत्वात् अवश्यंशब्दस्य मकारस्य लोपः। अवश्यलाव्यमिति सिद्धं अवश्यं निश्चयेन लावितुं योग्यो अवश्यलाव्यं तथा भुज तुम् खसेषपाभसानां गुणः चोः कुः स्वर० भोक्तुं कामो अभिलाषो यस्य स भोक्तुकामः। तथा श्रु श्रवणे तुम् प्र० गुणः श्रोतुं मनो यस्य स श्रोतुमनाः। अत्रोभयत्रापि काममनसोः परयोः सतोः तुमो मकारलोपः डुधाञ् धारण० दधातेर्हिः क्तादौ परे संपूर्वः क्तक्तवत् इति क्तप्रत्यय० संहित २ समो वा इति विकल्पेन समो मकारलोपः संहितं सहितं तनु विस्तारे क्तप्र० लोपस्त्वनुदात्तानां संपूर्वः सन्ततं सततं अत्रापि ततशब्दे परे विकल्पेन समो मकारलोपः सन्ततं सततम्। पच् युट् प्र० युव्वो० स्वर० मांसपूर्वः २ युट् प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्य अकारलोपः। मांसपचनं मांस्पचनं पुनः पच् घञ् भावे इति घञ् प्र० अतउिः चजोः कगौ घिति स्वर० पाक २ मांसपूर्वः अत्र घञ् प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्याकारलोपः। मांसपाकः मांस्पाकः इति रूपद्वयं केचित्तु मांसशब्दस्य मकारलोपः मासपाकः तथा मास्याकारस्य चोभयोरपि लोपमिच्छन्ति यथा मास्पाकः इति।

## ऋदुपधात् क्यप्।

ऋकारोपधाद्धातोः क्यप् प्रत्ययो भवति भावकार्य्ययोः। कृतो छेदने। कर्त्तितुमर्हं कृत्यम्। नितरां कर्त्तितुं योग्यं निकृत्यं हृदयम्। दृत्यते तत् दृत्यम्। कृपिचृत्योर्न क्यप्।

क्लृपू सामर्थ्ये। क्लृपो रो लः। कल्प्यम्। चृत दीप्तौ। चर्त्यम्। मृजो वा क्यप्। मृज्यं मार्ग्यम्। ह्रस्वाच्च क्यप्। ह्रस्वान्ताद्धातोर्भावे क्यप् प्रत्ययो भवति। तस्य ग्रहणे तदन्तस्य ग्रहणम्। क्रियते तत्कृत्यम्। ज्ञः क्यपि वा रिङ् वक्तव्यः तुगभावश्च। क्रत्या क्रिया। ङिदनेकाच्चरोऽप्यादेशस्तदन्तस्यैव वक्तव्यः। गुपगुहोः क्यप्। गोप्तुं योग्यं गुप्यम्। गूहितुं योग्यम्। वदेः क्यप् भावादौ। वदेर्धातोः क्यप् प्रत्ययो भवति भावादौ। मृषा उद्यते इति मृषोद्यम्। ब्रह्मणा उद्यते या कथा सा ब्रह्मोद्या। ग्रहेः क्यप्। अर्जुनगृह्या सेना। इण् स्तु वृ दृ भृ शास् जुष् खन् एभ्यः क्यप् वाच्यः। तुक्। ईयते इति इत्यः स्तुत्यः वृत्यः। दृङ् आदरे। दृत्यः भृत्यः। शासेरिः। शिष्यः। जुष् प्रीतिसेवनयोः। जुष्यः। खन एत्वं क्यपि वाच्यम्। खन्यते इति खेयम्। भिद्योद्ध्यौ नदे निपात्येते। भिनत्ति कूलमिति भिद्यः। उज्झ उत्सर्गे। उज्झति जलमिति उद्ध्यः नदः। नदे किम्। भेत्ता उज्झिता। कृवृषोर्वा क्यप्। क्रियते तत् कृत्यम्। कर्तुं योग्यं कार्य्यम्। वृष वृष्टौ। वृष्यं वर्ष्यम्।

कृत्याः पञ्च समाख्याता घ्यण्क्यपौ भावकर्मणोः।
तव्यानीयौ स्वराद्यश्च शब्दशास्त्रविचक्षणैः॥

इति कृत्यप्रक्रिया।

ऋदुपधात् क्यप्। ऋदुपधात् ऋत् ऋकारः उपधा यस्य स ऋदुपधः तस्मात् (पं० ए०) ङसिरत् सवर्णं० क्यप् (प्र० ए०) हसेपः ऋकारोपधात् वृत् वर्त्तने इत्यादेर्धातोः क्यप् प्रत्ययो भवति भवादौ ककारो गुणनिषेधार्थः। कृती छेदने। कृत् क्यप् प्र० य० स्वर० (प्र० ए०) अतो ऽम्, निपूर्वः निकृत्यं वृत् वर्त्तने वृत्यं ह्रस्वाच्च क्यप् ह्रस्वादपि धातोः क्यप्प्रत्ययो भवति पित्वात् ह्रस्वस्य पिति कृति तुगागमः ङु कृञ् कृत्क्यप् प्र० तुगागमः स्वर० (प्र० ए०) अतो

अम् कृत्यं एवं ष्टुञ् वरणे वृत्य ष्टुञ् स्तुतौ आदेः षः सः स्तु क्यप् प्र० य ह्रस्वस्य पिति तुक् स्तुत्यम् । इति कृत्यप्रक्रिया ।

## अथ स्त्र्यधिकारः प्रक्रिया ।

अथ स्त्र्यधिकारः प्रक्रिया कथ्यते ।

### स्त्रियां यजां भावे क्यप् ।

यजादेर्धातोः स्त्रियां भावे क्यप् प्रत्ययो भवति । यज् व्रज् समज् निषद् निपत् मन् नम् विद् षुञ् शीङ् इण् कृ इषु परिसृप परिचर अटाट्य आस् चर जागृ हन् एते यजादयः । किच्वात्सम्प्रसारणम् । इज्यते सा इज्या स्त्रीत्वादाप् । व्रज्यते सा व्रज्या । अज गतौ क्षेपणे च । समज्यते सा समज्या । काशिविका । प्रकर्षेण व्रज्यते अस्यामिति प्रव्रज्या । षद्लृ विशरणगत्यवसादनेषु । निषद्यते सा निषद्या । निपत्या । मनज्ञाने । मन्यते सा मन्या । नम्या । विद्यते सा विद्या । सुत्याशीङोऽयङ् क्ङिति ये वक्तव्यः । शय्या । भृत्या । ईयते सा इत्या कृत्या । कृञो यक् वा वाच्यः । अयकि । क्रियते सा क्रिया । इषेश्छान्तादेशो यलोपश्च । इष्यते सा इच्छा । *सरतेर्गुणः । परिसर्य्या परिचर्य्या अटाट्या आस्या चर्य्या । जागर्त्तेर्गुणः । जागर्य्या हनस्तकारान्तादेशो हिंसायामर्थे । हन्यते सा हत्या । हन्तेस्तः । हन्तेर्नकारस्य तकारादेशो भवति क्यपि स्त्रियाम् । ब्रह्म हन्यते इति ब्रह्महत्या ।

स्त्रियां पुरयजां ( ष० ब० ) भावे ( स० ए० ) यजादेः यज्, अज्, हन्, शीङ्, व्रज, विद, आस्, मन्, चर, भृ, अटाट, निषद, निपत, इत्यादेर्धातोः स्त्रीलिङ्गे भावे नाम्नि च क्यप् प्रत्ययो भवति ककारः सम्प्रसारणार्थः । यजनं इति क्यप् प्रत्ययः य यजां यवराणां स्वरः स्त्रीत्वादाबतः स्त्रियां सवर्णे दीर्घः

( प्र० ए० ) श्वापः । एवं अज् गतौ क्षेपणे च अज् सम् पूर्वः स्वर० क्यप् स्वर० स्त्रीत्वादाबतः समज्या परिषत् । हन् ब्रह्मन्पूर्वः क्यप् प्र० लोपस्त्वनुदात्तानामिति तुशब्दात् रसाभावेऽपि नकारस्य लोपः ह्रस्वस्यपिति तुक् स्वरश्चो० ब्रह्महत्या ब्रह्मणो ब्राह्मणस्य हननं ब्रह्महत्या । शीङ् शय्या व्रज् व्रज्या, विद विद्या, षद निषद्या, आस्या, मन्या, चर्या, भृत्या, अटाट्या, कृञो वा रिङ्, कृत्या, क्रिया ।

## स्त्रियां भावे क्तिः ।

धातोः स्त्रियां भावे क्तिः प्रत्ययो भवति । क्रियते सा कृतिः । बुध्यते सा बुद्धिः । स्मृङ् चिन्तायाम् । स्मर्यते सा स्मृतिः । पच्यते सा पक्तिः । पचि विस्तारे । पञ्च्यते तत् पङ्क्तिः । सम्प्रसारणम् । उह्यते सा ऊढिः संविद्यते सा संवित्तिः ।

क्तिः । क्ति ( प्र० ए० ) सौ० धातोः क्तिः प्रत्ययो भवति स्त्रीलिङ्गे भावे ककारो गुणनिषेधार्थः सम्प्रसारणार्थश्च । पचि विस्तारे पच् क्ति प्र० ति चोः कुः स्वर० इदितः इति नुम् नश्चा० ( प्र० ए० ) सौ० पञ्चनं पङ्क्तिः । डुपचष् पाके पक्तिः वह प्रापणे क्ति० ति ढोढः तथोर्धः ष्टुभिः ष्टुः यजामिति सम्प्रसारणं वस्य उः ढिढोलोपो दीर्घश्चेति ढलोपः उकारस्य ऊकारः ( प्र० ए० ) सौ० ऊढिः विद संपूर्वः क्तिप्र० ति खसेचपा० दस्य तः स्वर० संवित्तिः । शम् क्तिप्र० ति ।

## शमां दीर्घः ।

शमादीनां दीर्घो भवति क्तिप्रत्यये परे । शम्यते सा शान्तिः । दम्यते सा दान्तिः । गम्यते सा गतिः । हन्यते सा हतिः । भ्रमु चलने । भ्रम्यते सा भ्रान्तिः । अनुभूयते तत् अनुभवनम् अनुभूतिः । विशिष्टा भूतिः विभूतिः प्रभूतिः भवनं भूतिः । शुध शौचे । शोधनं शुद्धिः ।

शमां दीर्घः नश्चा० ( प्र० ए० ) सौ० शान्तिः भ्रान्तिः ग्लैम्लैसन्ध्यक्षराणामा ग्ला क्ति प्र० ति ल्वादीदितः तस्य नः ग्लानिः म्लै म्लानिः भू क्तिप्र० अनुपूर्वः अनुभवनमनुभूतिः ( प्र० ए० ) सौ० गमनं गतिः लोपस्त्वनुदात्ततनामिति मलोपः ।

## ईश्शीङोर्वरक्तिप्रत्ययौ नेट् गुणश्च।

ईश्शीङोर्वरक्तिप्रत्ययौ स्तो वरप्रत्ययस्य च इट् न। शीङो गुणोऽपि न भवति। संशय्यते तत् संशयनम्। संशीतिः। ईष्टेऽसौ ईश्वरः। क्षी गतौ। क्षीयते इति क्षीतिः। जागरणं जागृतिः। निगृह्यते सा निगृहीतिः। कुच सङ्कोचने। कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। तुदादिः। निकुचितिः। निपठितिः। स्निह् आस्कन्दने। उपस्निहितिः। निपतितिः। विशेषेण ध्रियते सा विधृतिः। ग्लाम्लाज्याहाक्त्वरिभ्यः क्तेरर्थे निः प्रत्ययो भवति। ग्लायते सा ग्लानिः ज्योनिः हानिः ञित्वरा सम्भ्रमे। त्वरतेर्वस्य उत्वं वाच्यम्। त्वर्य्यते सा तूर्णिः। ऋल्वादिभ्यश्च क्तेरर्थे निः प्रत्ययो भवति। कॄत ईर्। कीर्य्यते सा कीर्णिः लूनिः धूनिः पूर्णिः। सम्पदादेः क्विप् वा वाच्यः। सम्पत् सम्पत्तिः।

शीङो गुणाभावो वक्तव्यः। ईश्शीङोर्वरक्तिप्रत्ययेनेट् गुणश्च न भवति। बुध् अवगमने बुध् तिप्र० तयोर्ढः भवेजवाः स्वर० बुद्धिः अनुभूतिः इत्यादौ क्तत इतोडागमः प्राप्त इट्निषेधार्थः ऊत्ल्योर्नेट् इति सूत्रं पठन्ति किञ्चित् इकार-वकारादेः प्रत्ययस्य क्तिप्रत्ययस्य च इडागमो न भवति इति ग्रहादेस्तु क्तिप्रत्यये इटो न निषेधः। गृहीतिः भणितिः इत्यादि।

## कर्त्तरि क्तिश्च संज्ञायाम्।

कर्त्रर्थे धातोः क्तिः प्रत्ययो भवति संज्ञायां विषये। डुकृञ् करणे प्रकुरुते सा प्रकृतिः। धृञ् धारणे। विपूर्वः विशेषेण धरतीति विधृतिः।

कर्त्तरिक्तिश्च। कर्त्तर्य्यपि क्तिः प्रत्ययो भवति तन् क्ति तन्ति संपूर्वः लोप-स्वनु० सन्तनोति कुलमिति सन्ततिः एवं कृति प्रपूर्वः प्रकुरुते इति प्रकृतिः प्रधानपुरुषः धृ धारणे विपूर्वः तिप्र० विधृतिः पुंसि: ( प्र० ए० ) स्त्री०।

## इक्श्तिपौ धातुनिर्देशे ।

धातुनिर्देशे वा वाच्ये सति इक्श्तिपौ प्रत्ययौ भवतः । शकारः श्तिति चतुर्वत्कार्य्यार्थः । पच् इत्ययं धातुः पचिः । अयतिः पचतिः भवतिः ।

इक्श्तिपौ धातुनिर्देशे । इक् च श्तिप् च इक्श्तिपौ ( प्र० द्वि० ) उभौ धातुनिर्देश ( स० ए० ) धातोर्निर्देशे धातोर्नामग्रहणे नामोच्चारणे अर्थे इक् श्तिप् इत्येतौ प्रत्ययौ भवतः । श्तिपः शकारश्चतुर्वत् कार्य्यार्थः पच् २ एकत्र इप्र० स्वर० ( प्र० ए० ) सो० पचिः पचधातुरित्यर्थः द्वितीयश्तिप् प्र० श्वित्वात् अप्कर्तरि स्वर० पचतिः एवं पठिः पठतिः गमिः गच्छतिः करोतिः ।

## षिद्भिदामङ् ।

षितो धातोर्भिदादेश्च स्त्रियामङ् प्रत्ययो भवति भावादौ । पच्यते सा पचा । मृज्यते सा मृजा । जॄष वयोहानौ । जरादौ ङानुबन्धरहितो अः प्रत्ययो भवति । जीर्य्यत्यनया सा जरा । इषु इच्छायामिति निर्देशाज्ज्ञापकादिच्छा इत्यादि निपात्यते । इच्छा । इषादेरङर्थे युट् । एषणमिति एषणा । भिद्यते अनया सा भिदा । छिद्यतेऽनया सा छिदा । क्षिपा । गुहू संवरणे । गुहा । मेधृ हिंसायाम् । मेधृ वधमेधासङ्गमेषु । मेध्यते इति मेधा । कृपा । पीड़ बाधायाम् । पीड़ा । बाध पीड़ायाम् । बाधा त्तपा रात्रिः ।

षिद्भिदादिभ्योऽङ् । ष् इत् यस्य स षित् षिद्द भिदादयश्च षिद्भिदादयस्तेषां ( ष० ब० ) स्वर० अङ् ( प्र० ए० ) इसे षः षितः षकारेतो धातोर्भिदादेश्च धातोः स्त्रीलिङ्गे अङ् प्रत्ययो भवति भावादौ ङकारो गुणनिषेधार्थः । डुपचष् षित्वात् अङ् प्र० स्वर० स्त्रीत्वादाप् पचनं पचा । मृजूष् शुद्धौ मृज् अङ् स्वर० आप् मार्जनं मृजा एवं भेदनं भिदा । छेदनं छिदा जर इत्यत्र ङकारानुबन्धरहितो अप्रत्ययो वक्तव्यः । तेन गुणप्राप्तिर्भवति । केचित्तु नीतमनित्यमिति न्यायेन कुर्वन्ति जॄष् वयोहानौ जॄ अ० गुणः स्वर० स्त्रीत्वादाप् जरा । साधना त्वरान्तस्त्रीलिङ्गे प्रतिपादितास्ति । एवंशेषा ज्ञेया ।

## गुरोर्हसात्।

गुरुमतो हसान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ न क्तिः। ईह चेष्टायाम्। ईह्यते सा ईहा। ऊह्यते सा ऊहा। ईक्ष दर्शनाङ्कनयोः। ईक्ष्यते तत् ईक्षणम् ईक्षा। एध्यते सा एधा। गुरोः किम्। भक्तिः। हसात् किम् नीतिः। लिख् रिख् लेखने। लिख्यते तल्लेखनं लेखा। रिख्यते तद्रेकणं रेखा। गुध परिवेष्टने। गुध्यते इति गोधा। धेट् पाने। सुष्ठु धीयते इति सुधा। डुधाञ् धारणपोषणयोः। श्रद्धीयते सा श्रद्धा। क्तिरापादिभ्यः। आप्तिः। दीप्यते सा दीप्तिः। राध्यते सा राद्धिः। प्रशास्तिः।

गुरोर्हसात्। गुरु (पं० ए०) ङिति ङस्येत्यकारलोपः स्त्री० हस (पं० ए०) ङसिरत् सवर्णे० पश्चान्नाभिनोरः गुरुमतो गुरूपधात् हसान्तात् धातोः अकर्त्तरि भावेऽर्थे अप्रत्ययो भवति उदा० एध् वृद्धौ एध् गुरूपधत्वात् हसान्तत्वाच्च अप्रत्ययः स्वर० स्त्रीत्वादाप् (प्र० ए०) आपः। एधा। एवं ईहा। ईह वाञ्छायाम्। ऊह वितर्के। ऊहा। ईक्ष दर्शनाङ्कनयोः। ईक्षा।

## प्रत्ययान्तात्।

प्रत्ययान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ। चिकीर्ष्यते सा चिकीर्षा। आत्मनः कर्त्तुमिच्छा चिकीर्षा। आत्मनः पुत्रेच्छा वा। पुत्रीयते सा पुत्रीया। अशितुमिच्छा अशनाया। लोलूयते सा लोलूया। अटाट्या। कण्डूञ् गात्रविघर्षणे। कण्डूयते सा कण्डूया। मुमूर्षणं मुमूर्षा।

## ऊरन्तास्ग्रन्थ् अर्थग्रन्थघट्विद्वदि इषिभ्यः स्त्रियां युर्वाच्यः।

डुकृञ् करणे। युवोरनाकौ। कारणा आसना। अर्थ याञ्चाप्रकाशनयोः। अर्थना। ग्रन्थ सन्दर्भे। ग्रथ्यते तद्-ग्रन्थनमिति ग्रन्थना। उपासनमिति उपासना। श्रथि शैथिल्ये श्रन्थना। घटनमिति घटना। विद्यते वेदनमिति वेदना। वन्द्यते सा वन्दना। एषणमिति एषणा। इञ् अजादिभ्यः। अज गतौ। आजिः। अत सातत्यगमने आतिः। इक् कृष्यादिभ्यः भावादौ। कृष्यते सा कृषिः। गिरिः। किरिः। सर्वधातुभ्य इः। कविः। रविः। इति स्त्र्यधिकारप्रक्रिया।

प्रत्ययान्तात्। प्रत्ययान्तः (पं० ए०) ङसिरत् सवर्णे० सादयः प्रत्यया अन्ते यस्य स प्रत्ययान्तस्तस्मादपि धातोः अप्रत्ययो भवति उदा० कृ इच्छायाम् आत्मनः सः ऋत इर् किर् दिश कुर्छोर्षु: य्वोर्विहसे इति दीर्घः क्विला० जलतुं० चिकीर्ष इति जातं ततः प्रत्ययादिति अप्रत्ययः यतः इत्यलोपः स्वर० आवतः स्त्रियां (प्र० ए०) आपः। चिकीर्षा। एवं जिहीर्षा बुभूषा पुत्र नाम्नो य ईचास्येति यप्र० तत्सन्नियोगे अकारस्य ईकारः पुत्रीय इति जातं स धातुः ततः प्रत्ययान्तादिति सूत्रेण अप्रत्ययः यतः इत्यलोपः स्वर० आवतः स्त्रियां (प्र० ए०) आपः आत्मनः पुत्रेच्छा पुत्रीया एवं पुत्रकाम्या कण्डूया इत्यादि। इति स्त्र्यधिकारप्रक्रिया।

## अथ क्त्वादयः प्रत्ययाः।

अथ क्त्वादयः प्रत्ययाः कथ्यन्ते।

## पूर्वकाले क्त्वा।

धातोः क्त्वा प्रत्ययो भवति पूर्वकाले सामानकर्तृके धातौ प्रयुज्यमाने। देवदत्तः स्नात्वा भुङ्क्ते। भुक्त्वा व्रजति।

पूर्वकाले क्त्वा। पूर्वकाले (स० ए०) अद्वए। क्त्वा (प्र० ए०) अव्यया० धातोः समानकर्तृके एककर्तृके धातौ क्रियापदे अग्रे प्रयुज्यमाने सति पूर्वकाले प्रथमकाले क्त्वाप्रत्ययो भवति। उदा० ष्णा शौचे आदेः ष्णः स्नः क्त्वा प्र० त्वा इति

( प्र० ए० ) स् अव्य० क्त्वान्तं चेत्यव्ययसंज्ञा । स्नात्वा भुङ्क्ते अत्र स्नानभोजन-लक्षणक्रियाद्वयमध्ये स्नानक्रियायाः पूर्वकालीनत्वात् प्रत्ययः । भुज् पालनाभ्य-वहार० भुज् क्त्वा प्र० एवं कृत्वा दोदद्घोः इति सूत्रेण दा इत्यस्य दात् आदेशः खात्वा, ग्रथित्वा, सुप्त्वा, उक्त्वा, गृहीत्वा, भङ्क्त्वा । नश् अदर्शने नष्ट्वा नंष्ट्वा छित्वा जग्ध्वा इत्यादि ।

## न क्त्वा सेट् ।

सेट् क्त्वा किन्न भवति । वर्त्तित्वा शयित्वा भवित्वा । सेट् किम् । कृत्वा । रलो व्युपधाद्धलादेः संश्च । उश्च इश्च वौ ते उपधे यस्य तस्माद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । विद ज्ञाने । विदित्वा वेदित्वा लिखित्वा द्युतित्वा । व्युपधात् किम् । वर्त्तित्वा । रलः किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा । मृड्मृद्गुध्गुह्कुष्-क्लिश्वद्वस्मुष्ग्रहिभ्यः । सेट् किद् भवति । मृड सुखने । मृडित्वा । मृद क्षोदे । मृदित्वा । गुध रोचने । गुध् रोषे । गुधित्वा । गुह रोगे । गुह्ः संवरणे । गुहित्वा । कुष् निष्कर्षे । कुषित्वा । क्लिश् विबाधे । क्लिशित्वा । वद व्यक्तायां वाचि । उदित्वा । वस् निवासे । उषित्वा । मुषित्वा । गृहीत्वा । नोपधात् थपान्ताद्वा कित् । नकारोप-धात् थपान्ताद्धातोः सेट् क्त्वा वा किद्भवति । ग्रन्थ सन्दर्भे । नो लोपः । ग्रथित्वा ग्रन्थित्वा । गुम्फ् ग्रन्थने । गुफित्वा गुम्फित्वा इत्यादि । अलं खल्वोः प्रतिषेधे क्त्वा । प्रतिषेधार्थ-योरलं खलुशब्दयोः पूर्वपदयोः सतोः पूर्वकालं विनापि क्त्वा प्रत्ययो भवति । अत्रालं खलुशब्दौ निषेधार्थौ तयोरुपपद-त्वात् । अलं भुक्त्वा । न भोक्तव्यम् । भोजनं मा कुरु इत्यर्थः । खलु भुक्त्वा । न भोक्तव्यम् ।

न ( प्र० ए० ) अव्य० क्त्वा अव्य० सेट् ( प्र० ए० ) इसेपः कित् वा ( प्र० ए० ) अव्य० इट्सहितः क्त्वा प्रत्ययो विकल्पेन कित्संज्ञको भवति कित्त्व-पक्षे गुणनिषेधः कित्त्वाभावे गुणः विद ज्ञाने विद क्त्वाप्रत्य० क्त्वा इतीडागमः एकत्र कित्त्वान्न गुणः द्वितीये कित्त्वाभावादुपधाया लघोरिति गुणः स्वर० ( प्र० ए० ) अव्य० विदित्वा, वेदित्वा, वृतित्वा, वर्त्तित्वा, अलं खल्वोः अलं, खलु, एतयोः पूर्वपदयोः सतोः पूर्वकालं विनापि निषेधार्थे धातोः क्त्वाप्रत्ययो भवति । भुज् क्त्वाप्र० चोः कुः खसेचपाः अलंपूर्वः स्वर० ( प्र० ए० ) अव्य० अलं भुक्त्वा भोजने-नालं भोजनं मा कुर्वित्यर्थः । वच् परिभाषणे । वच् क्त्वा० यजां यवराणामिति सम्प्रसारणं चोः कुः स्वर० खलु पूर्वः सवर्णे० खलूक्त्वा वचनेन अलं मा वदेत्यर्थः ।

## उदितः क्त्वा वेट् ।

उदितो धातोः परस्य क्त्वा प्रत्ययस्य वा इडागमो भवति । एषित्वा इष्ट्वा । भ्रमु चलने । भ्रमित्वा भ्रान्त्वा । अदो जग्धिः । जग्ध्वा ।

उदित् ( पं० ए० ) स्वर० सौ० क्त्वा ( ष० ए० ) अव्यय० यद्वा धातोः धातोर्लोपः स्वर० वा ( प्र० ए० ) अव्य० इट् ( प्र० ए० ) इसेपः उत् उकारः इत् यस्य स उदित् तस्मात् उदितो धातोः परस्य क्त्वाप्रत्ययस्य वा इडागमो भवति । इष् इच्छायाम् इष् क्त्वा प्र० क्त्वो वेडिति एकत्र इडागमः स्वर० उप-धाया लघोरिति गुणः । इडभावे कित्त्वान्न गुणः ष्टुभिः ष्टुः ( प्र० ए० ) अव्य० एषित्वा इष्ट्वा ।

## समासे क्यप् ।

समासे सति पूर्वकाले क्यप् प्रत्ययो भवति तत्कर्तृके धातौ प्रयुज्यमाने । ह्रस्वस्य पिति कृति तुक् । डुभृञ् धारण-पोषणयोः । सम्भृत्वा करोतीति सम्भृत्यकरोति । णमु प्रह्वत्वे शब्दे च । प्रकर्षेण कायवाङ्मनोभिर्नत्वा इति ।

अजित्वा शात्रवान् सर्वानकृत्वा विमलं यशः ।
अदत्वा वित्तमर्थिभ्यः कथं जीवन्ति भूभृतः ॥

## क्यपि ञेर्गुणश्च।

क्यपि लघुपूर्वस्य ञेरयादेशोऽपि वाच्यः। परिणमयित्वा इति परिणमय्य भुङ्क्ते। विगमय्य। विगणय्य। अलघुपूर्वस्य न। तेन ञेर्लोपो वाच्यः। प्रतार्य्य। सम्प्रधारयित्वा इति सम्प्रधार्य्य विचार्य्य करोति। आप्लृ व्याप्तौ। आप्नोतेर्वा। प्रापय्य प्राप्य। दादीनां क्यपि इत्वाभावो वाच्यः। क्यपि 'स्थामो' इति ईकारो न भवति। दो अवखण्डने। प्रदाय प्रसाय प्रमाय प्रस्थाय। उप समीपे स्थित्वा इति उपस्थाय। पिबतेर्वा प्रपाय प्रपीय। लोपस्त्वनुदात्ततनाम्। नमस्य क्यपि वा लोपः प्रकर्षेण नत्वा इति प्रणम्य प्रणत्य। आसमन्तात् ग्रामे आगम्य आगत्य। विपूर्वस्य दधातेः करोतेरर्थे क्यप्। विधाय प्रहाय। तत्कालेऽपि क्यप् दृश्यते। नेत्रे निमील्य हसति। मील सम्मीलने। मील सङ्गमे। उभयपदी। अक्षिणी सम्मीलित्वा इति अक्षिणी सम्मील्य हसति। चक्षुषी सम्मील्य हसति। मुखं व्यादत्वा इति मुखं व्यादाय स्वपिति।

समास। (स० ए०) अद्‌ए० क्यप् (प्र० ए०) इसेपः समासे सति उपसर्गपूर्वकत्वे सति धातोः पूर्वकाले क्यप्प्रत्ययो भवति स एव कर्त्ता यस्य स तत्कर्त्तृकः तस्मिन् तत्कर्त्तृके एककर्त्तृके धातौ प्रयुज्यमाने सति उदा० डुभृञ् भृ क्यप्प्र० य० ह्रस्वस्य पिति कृति तुक्पूर्वः स्वर० (प्र० ए०) अव्य० संभृत्य मिलित्वा सं सम्यक् प्रकारेण भृत्वा वा करोति अत्र समुपसर्गेण समासः अत्र सम्भारकरणप्रक्रिययोः एककता ततः सम्भारक्रियायाः पूर्वकालीनत्वात् क्यप् प्रत्ययः। णम्प्रह्वीभावे आदेः णः स्नः नम् प्रपूर्वः क्यप्प्र० प्रादेश्च तथा तौ इति नस्य णः स्वर० (प्र० ए०) अव्य० अत्र प्रकर्षेण नत्वा प्रणम्येति समासे क्यप्र० देवदत्तः प्रणम्य गच्छति अत्र प्रणामगमनरूपयोर्द्वयोः क्रिययोः एक एव कर्त्ता यः प्रणन्ता स एव गन्ता इत्येककर्त्तृत्वं ततः प्रणामस्य पूर्वकालीनत्वात् क्यप्प्र० अनञ्पूर्व इति नञ्पूर्वकत्वे क्यप्प्रत्ययो न भवति इत्येके वदन्ति यथा कृ नञ्पूर्वः कृत्वा

प्र० ना इति सूत्रेण तस्य आकारादेशः अज्ञात्वा गच्छति अत्र नञ्पूर्वकत्वात् क्यप्-प्रत्ययो नायातः किन्तु क्त्वाप्रत्यय एवायातः क्यपि ञेर्गुणः क्यप्प्रत्यये ञिप्रत्ययस्य गुणो भवति णम् परिपूर्वः ञिप्र० समासे क्यप् इति क्यप् प्र० स्वर० परिणमि य इति स्थिते क्यपि ञेर्गुणः क्वचित् स्वरवदकारः एकार् स्वरः ( प्र० ए० ) अव्य० परिणमय्य भुङ्क्ते परितः सामस्त्येन नमयित्वा परिणमय्य पूर्वभुक्तं परिपाकं प्राप्य भुङ्क्ते इत्यर्थः। एवं उन्नमय्य, आकलय्य, तत्कालत्वेऽपि द्वयोः क्रिययोः समकालत्वेऽपि क्यप् प्रत्ययो दृश्यते मील मीलने। संपूर्वात् क्यप्प्र० स्वर० ( प्र० ए० ) अव्य० नेत्रे संमील्य हसति समकालमेव नेत्रे सम्मीलति हसति च अत्र सम्मीलनहसनयोः समकालीनत्वात् पूर्वकालं विनापि तत्कालेऽपि क्यप्प्र० डुदाञ् दा वि आङ् पूर्वः क्यप् प्रत्ययः इयं स्वरे० स्वर० वि आङ्पूर्वको दाधातुर्मुख-प्रसारणार्थस्तेन मुखं व्यादाय प्रसार्य्य स्वपिति अत्रापि मुखप्रसारणस्वपयोः सम-कालीनत्वात् समानकाले प्र० क्य० क्वचिद्भिन्नकर्त्तृकेऽपि क्यप्प्रत्ययो दृश्यते मत्-प्रसूतिमनाराध्य प्रसूतिं त्वां प्रशाप सेति अवधार्य्य एवमेव सान्द्रत्तनमरुमित्यादि।

## पौनःपुन्ये णमुपदं द्विश्च।

समानकर्त्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनः-पुन्यार्थे धातोर्णम् प्रत्ययो भवति णमन्तस्य पदस्य द्विर्वचनं भवति। आतो युक्। पीत्वा पीत्वा इति पायं पायं गच्छति। आदरे वीप्सायां द्विर्भावः। भुक्त्वा भुक्त्वा इति भोजं भोजं व्रजति। स्मृत्वा स्मृत्वा इति स्मारं स्मारं नमति शिवम्। कथमादिषु स्वार्थे कृञो णम्। कथम् इत्थम् अन्यथा एवम् एतेषु प्रयुज्यमानेषु स्वार्थे कृञो णम् प्रत्ययो भवति। कथ-ङ्कारम् इत्थङ्कारम् अन्यथाकारम् एवङ्कारं पठति। एवं पठती-त्यर्थः। समूलाकृतजीवेषु हनकृञ्ग्रहां णम् वाच्यः, स्वार्थे तेषामनुप्रयोगश्च। समूलघातं हन्ति अकृतकारं करोति। जीवं गृहीत्वा इति जीवग्राहं गृह्णाति इत्यादि।

पुनःपुनर्भवतीति पौनःपुन्यं तस्मिन् ( स० ए० ) अदए० णमु ( प्र० ए० ) इत्येषः पदं ( प्र० ए० ) अतो अम् द्वि० ( प्र० ए० ) अव्य० स्व० ( प्र० ए० )

पौनःपुन्ये वारंवारार्थे धातोः पूर्वकाले णम्प्रत्ययो भवति तस्य च णम्सहितस्य पदस्य द्वित्वं भवति समानकर्तृकेषु धातुषु प्रयुज्यमानेषु सत्सु पा पाने पा णम्प्र० अम् आतो युक् स्वर० मीनु० द्वित्वं ( प्र० ए० ) अव्य० पायं पायं गच्छति पीत्वा पीत्वा यातीत्यर्थः। भुज् णम् अम् लघूपधत्वाद्गुणः स्वर० द्वित्वं ( प्र० ए० ) अव्य० भोजं भोजं व्रजति। पुनः पुनर्भुक्त्वा यातीत्यर्थः। एवं कारङ्कारं स्मारं स्मारं विशेति चकारात् समूलघातं हन्ति जीवग्राहं गृह्णाति कोशग्राहं युध्यति इत्यादिष्वपि णम् कथमादिषु पूर्वपदेषु सत्सु स्वार्थे कथमादीनामेवार्थे कृञ् धातोः णम् प्रत्ययो भवति णित्वाद्वृद्धिः कृ कथं पूर्वः णम् प्र० अम् धातोर्नामिन इति वृद्धिः स्वर० (प्र० ए०) अव्य० कथङ्कारं कथमित्यर्थः। एवं इत्थङ्कारं इत्थमित्यर्थः।

## भुवो भावे क्यप्।

**नाम्नि उपपदे भुवो भावे क्यप् प्रत्ययो भवति। ब्रह्मणो भावः ब्रह्मभूयम्। स्त्यै ष्ट्यै शब्दसङ्घातयोः। स्त्यायतेर्ड्रट्। डित्वाट्टिलोपः। संयोगान्तस्य लोपः। टित्वादीप्। स्त्यायति सन्नूहं करोति सा स्त्री। लक्ष दर्शनाशङ्कनयोः।**

भुवो भावे क्यप्। भुवो भूधातोर्भावे शब्दप्रवृत्तिनिमित्ते क्यप्प्रत्ययो भवति। कित्वाद्गुणो न। भू क्यप् प्र० य ब्रह्मपूर्वः (प्र० ए०) अतो अम् ब्रह्मभूयं ब्रह्मणो भावं ब्रह्मत्वं गतः प्राप्त इत्यर्थः। एवं देवभूयं देवत्वम्। स्त्यायतेः इति स्त्यायते-र्धातोः स्त्रीत्वे वाच्ये ड्रट् प्रत्ययो भवति। डकारः टिलोपार्थः। ष्ट्यै स्त्यै धातू शब्दसङ्घातयोः शब्दार्थे समूहार्थे च स्त्यै ड्रट् प्र० ए० डित्वाट्टिलोपः संयोगान्त-स्येति यलोपः स्वर० टित इतीप् ( प्र० ए० ) हसेपः स्त्री।

## लक्षतेरी मुट्च।

**लक्षतेर्धातोरीः प्रत्ययो भवति तस्य ईप्रत्ययस्य मुडा-गमश्च। लक्ष्यते पुमान् अनया सा लक्ष्मीः।**

लक्षेरीर्मुट्च। लक्षेर्धातोः ईप्रत्ययो भवति तस्य च मुडागमः। लक्ष दर्श-नाङ्कनयोः लक्ष ईप् प्र० मुट् टित्वादादौ स्वर० ( प्र० ए० ) सो० लक्ष्यते इति लक्ष्मीः। अत्र ईबन्तत्वाभावात् सेर्लोपो नास्ति।

## वर्णात्कारः ।

वर्णमात्रात्कारः प्रत्ययो भवति । क इति वर्णः ककारः । व इति वर्णो वकारः । अ इति वर्णः अकारः । वर्णसमुदायादपि कारो दृश्यते । अहङ्कारः ओंकारः टकारः पकारः तकारः इत्यादि ।

वर्णात्कारः । वर्णनिर्देशे वाच्ये सति वर्णात् अकारादि ऋकारान्तात् अच्चरात् अग्रे कारप्रत्ययो भवति । क अग्रे कार प्र० ककारः, खकारः, गकारः, अकारः, इकारः, अत्र बहुलमित्यनुवर्त्तते । तेन अ, इ, उ, ऋ, ऌ, ह, य, र, ल, व, इत्यादौ कारप्रत्ययः । वर्णनिर्देशे इति किं यथा अः कृष्णः इः कामः, को ब्रह्मा, खमाकाशं इत्यादौ न इत्यादि ।

## रादिफो वा ।

र इति वर्णः रेफः रकारः ।

रकारादीनि नामानि श्रुत्वा तत्रास रावणः ।
रत्नानि च रमख्यस्य सन्त्रासं जनयन्ति मे ॥
रकारादीनि नामानि शृखतो मम पार्वति ! ।
मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥

रादिफो वा । रात् रावरात् वा विकल्पेन इफप्रत्ययो भवति । र अग्रे इफ प्र० अइ ए रेफः ( प्र० ए० ) स्त्रो० पक्षे कार प्र० रकार इति प्रयोगे सम्मतिमाह रकारादीनि । हे पार्वति ! रकारादीनि रकारः आदिर्येषां तानि नामानि शृखतः सतो मम मनः प्रसन्नतां नैर्मल्यं सानन्दत्वं एति प्राप्नोति कया रामनामाभिशङ्कया रकारादीनि नामान्युच्चरन् कदाचिद्रामनामाप्युच्चरेदित्याशङ्कया इत्याकाङ्क्षया । अथोपसंहारसूत्रमाह ।

## लोकाच्छेषस्य सिद्धिर्यथा मातरादेः ।

अस्य सारस्वतव्याकरणस्य ये शेषप्रयोगास्तेषां लोकात्

अन्यव्याकरणात् सिद्धिर्भवति यथा मातरादेः। इत्यादि प्रयोगानुसारेण बोद्धम्।

लोकाच्छेषस्य सिद्धिः। लोक ( पं० ए० ) ङसिरत् सवर्णे० शेष (ष० ए०) ङस्स सिद्धिः ( प्र० ए० ) स्तो० उक्तादन्यः शेषस्तस्य शेषस्य अत्र व्याकरणेऽनुक्तस्य सिद्धिः साधनं लोकादन्यव्याकरणात् ज्ञातव्या। यथा मातरपितरौ इत्यादीनां शब्दानां सिद्धिर्लोकात् ज्ञेया। शास्त्रान्ते च मङ्गलाचरणं युज्यते अतोऽत्र मातृपित्रोर्नामग्रहणेन मङ्गलमप्यस्ति। अथ कविः स्वनामगर्भमलङ्कारश्लोकमाह।

स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः।
स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम्॥

स्वरूपान्त इति। स मस्करी मस्करी वंशदण्डो अस्यस्येति मस्करी सान्यासिकः प्रक्रियां शुभां ऋज्वीं चक्रे कृतवान् कथम्भूतां प्रक्रियां चतुरोचितां चतुराणां सुबुद्धीनां पुरुषाणाम् उचिता योग्या तां० स कः यत्र यस्मिन् मस्करिणि अनुभूत्यादिः अनुभूतिः इति आदौ यस्य स अनुभूत्यादिः तथा स्वरूपान्तः स्वरूप इति शब्दो अन्ते यस्य स अर्थात् अनुभूतिस्वरूप इति वाचकः शब्दः सार्थकः अनुभूतिर्ज्ञानमेव स्वरूपं यस्येत्यर्थसहितो अभूत् इत्यनेन अनुभूतिस्वरूपनामा सान्यासिकः इमां प्रक्रियां शुभां ऋज्वीं सरलां चक्रे शुभाम् इत्यनेन स्वकपोलकल्पनानिरासः कृतः। अथ श्रावकश्रोतॄणामभीष्टसिद्ध्यैष्टदेवताशिषमाह।

अवताद्वो हयग्रीवः कमलावर ईश्वरः।
सुरासुरनराकारमधुपापीतपङ्कजः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यानुभूतिस्वरूपाचार्य्यविरचितायां कृदन्तप्रक्रियायां क्त्वादिप्रत्ययप्रक्रिया समाप्ता।

समाप्ता चेयं तृतीया वृत्तिः।

अवतादिति। हयग्रीवः ईश्वरो वो युष्मान् शिष्यान् अवतात् रक्षतु हयस्य ग्रीवा इव ग्रीवा यस्य स० अर्थात् पुरुषशरीरः अश्वमुखश्चतुर्विंशत्यवतारमध्यस्थ एको भगवतो अवतारः। उक्तञ्च भागवते पञ्चमस्कन्धे अष्टादशाध्याये षष्ठे

काव्ये। वेदान् युगान्ते तमसा तिरस्कृतान् रसातलाद्यो नृतुरङ्गविग्रहः। प्रत्या-ददे वै कवयेऽभियाचते तस्मै नमस्ते वितथे हिताय ॥२॥ साम्प्रतं तु तां हयग्रीव-मूर्त्तिं भद्राख्यखण्डे धर्मपुत्रो राजा भद्रश्रवाः पूजयन्नस्ति इति पुराणोक्तिः। कथ-म्भूतो हयग्रीवः कमलाकरः कमलां लक्ष्मीं करोतीति यद्वा कमलाया लक्ष्म्या आकरः पुनः कथम्भूतः ईश्वरः इष्टे ऐश्वर्यं करोतीति ईश्वरः पुनः कथम्भूतः सुरासुर० के पानीये जाते कजे पादावेव कजे कमले पङ्कजे सुराश्च असुराश्च नराश्च सुरासुरनरास्ते एवाकारो येषां ईदृशा ये मधुपा भ्रमरास्तैः आपीते अत्यादरेणावलोकिते पङ्कजे चरणकमले यस्य स इति कृत्प्रक्रियाव्याख्या।

सुबोधिकायां कृपायां सूरि श्रीचन्द्रकीर्त्तिभिः।
कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥ १ ॥

इति श्रीमन्नागपुरीयतपागच्छाधिराजभट्टारकश्रीचन्द्रकीर्त्तिसूरिविरचिता
श्रीसारस्वतव्याकरणस्य दीपिका सम्पूर्णा।

---

समाप्तोऽयं ग्रन्थः।

६९ उत्तररामचरितनाटक सटीक १
७० कर्पूरमञ्जरीनाटिका सटीक ॥०
७१ चण्डकौशिकनाटक सटीक ॥०
७२ चैतन्यचन्द्रोदयनाटक सटीक २
७३ धनञ्जयविजयनाटक सटीक ।०
७४ नागानन्दनाटक सटीक ॥०
७५ नागानन्दनाटक मूल ।०
७६ प्रबोधचन्द्रोदयनाटक सटीक १
७७ प्रसन्नराघवनाटक जयदेवकृत १
७८ प्रियदर्शिका नाटिका सटीक ॥०
७९ वसन्ततिलक भाण नाटक ।/
८० बालरामायणनाटक सटीक ३
८१ विक्रमोर्वशी नाटक (सटीक) १
८२ विद्धशालभञ्जिकानाटिका सटीक॥०
८३ वेणीसंहारनाटक सटीक ।॥०
८४ मल्लिकामारुतनाटक सटीक २
८५ महानाटक हनुमन्नाटक सटीक १॥
८६ महानाटकम् (हनुमन्नाटकम्) ॥०
८७ महावीरचरितनाटक सटीक १॥०
८८ महावीरचरितनाटक मूलमात्र ॥०
८९ मालतीमाधवनाटक सटीक ॥०
९० मालविकाग्निमित्रनाटक सटीक १
९१ मुद्राराक्षसनाटक सटीक १
९२ मृच्छकटिकनाटक सटीक १॥०
९३ रत्नावलीनाटिका सटीक ॥०
९४ शकुन्तलानाटक सटीक १
९५ काव्यप्रकाश अलङ्कार सटीक ४
९६ काव्यादर्श सटीक (अलङ्कार) १
९७ काव्यदीपिका अलङ्कार सटीक॥०
९८ कुवलयानन्द अलङ्कार सटीक २
९९ चन्द्रालोक प्राचीन अलङ्कार ।०
१०० दशरूपकम् (अलङ्कार) २
१०१ साहित्यदर्पण सटीक अलङ्कार१॥
१०२ साहित्यदर्पणम् (मूलमात्र) ॥०
१०३ काव्यालङ्कारसूत्रवृत्तिवामनकृत ॥०
१०४ वाग्भटालङ्कार ।०
१०५ सरस्वतीकण्ठाभरण सटीक ३
१०६ सङ्गीतपारिजात[सङ्गीतशास्त्र]१॥०
१०७ छन्दोमञ्जरी वृत्तरत्नाकर सटीक ॥
१०८ श्रुतबोधः (छन्दोग्रन्थ) सटीक /
१०९ पिङ्गलछन्दः शास्त्र वृत्तिसहित १॥
११० महानिर्वाणतन्त्रम् सटीक ३
१११ सारदातिलक तन्त्रम् २
११२ मन्त्रमहोदधि तन्त्र सटीक ६
११३ रुद्रयामल तन्त्र ३
११४ इन्द्रजालविद्यासंग्रहः २
११५ कामन्दकी नीतिसारः ।॥०
११६ चाणक्यशतकम् सटीक /
११७ शुक्रनीतिसारः सटीक २
११८ गयाश्राद्धादिपद्धतिः १
११९ तुलादानादिपद्धतिः (बङ्गाक्षरैः)४
१२० धर्मशास्त्रसंग्रहः १०
१२१ वीरमित्रोदय (स्मृतिशास्त्र) ५
१२२ मनुसंहिता कुल्लूकभट्टकृत टीका-सहित ३
१२३ वेदान्तदर्शन सभाष्य सटीक ६
१२४ भामती(वेदान्त)वाचस्पतिमिश्रकृत३
१२५ वेदान्तपरिभाषा ॥०
१२६ वेदान्तसार सटीक ॥०
१२७ विवेकचूडामणि वेदान्त ।/
१२८ पञ्चदशी (सटीक) वेदान्त १॥०
१२९ सिद्धान्तबिन्दुसारः (वेदान्त) ॥०
१३० पूर्णप्रज्ञदर्शनम् सभाष्य ॥०
१३१ साङ्ख्यदर्शन (भाष्यसहित) २
१३२ साङ्ख्यसूत्र अनिरुद्धवृत्तिसहित ॥०
१३३ साङ्ख्यसार ।०
१३४ साङ्ख्यतत्त्वकौमुदी सटीक २
१३५ साङ्ख्यकारिका गौड़पादभाष्य ॥०